Upanishadic passages. In a very simple and elegant way the Muni, through this *bhāṣya*, has explained the intricate details of the secret teaching of *īśopaniṣad*. An English translation of this *bhāṣya* of the Muni by Sri Shankaranarayanan is published in his book *Bhagavan and Nayana*.

*Upadeśasārabhāṣyam* is a splendid commentary of the Muni on thirty verses of Bhagavan Ramana Maharshi under the title *upadeśasāra*. This composition of the Bhagavan reveals the essence of His teachings. The verses here are written in a metre called *supratiṣṭhā*. Here, Bhagavan discusses about *karma* or action, *karmaphala* or the result of action, *samarpaṇa* or surrender. The *karma* theory of the Mimamsakas has been very well refuted by the Muni in his commentary. The book *Bhagavan and Nayana* by Shankaranarayanan contains an English translation of the original verses of Bhagavan and the commentary of the Muni thereon.

The tenth verse of *śrīramaṇagītā* enunciates in the style of Tantra, the Mantra by which the Maharshi has to be invoked. For the Muni this Mantra carried a very high significance. As many disciples with a desire to have an elucidation of this Mantra approached Bhagavan, he directed them to the Muni who then wrote a commentary on that and the result was *gurumantrabhāṣyam* which is an interesting text revealing the secret of the Mantra by which the Maharshi has to be invoked. It also uncovers several aspects of Kartikeya by extracting the relevant Mantras from some Shlokas written by the Muni himself and explaining their meanings in detail. There are three sections. In the first section the Muni explains the Mantra "*om vacadbhuve namaḥ*" extracted from a Shloka of *śrīramaṇagītā*. In the second section a Tantric Mantra has been explained. Here from a Tantric verse the Mantra

*śaravaṇabhava* meaning 'One who is born from the forest of *śara*' has been extracted for the invocation of Bhagavan. The third section deals with a Vedic Mantra invoking the Bhagavan. In this section the Muni also throws light on the history and purpose of the birth of Kartikeya. An English translation of this text with explanatory notes by Sri Shankranarayanan was published in the December 1999 issue of *Mountain Path*, a quarterly journal of Sri Ramanasramam, Tiruvannamalai.

*Agneḥ catasro vibhūtayaḥ* is an incomplete text dealing with fourfold aspect of Agni – *pārthivāgni*, *vaidyutāgni*, *yajnāgni* and *jīvāgni*. Here the Muni compares *jīvāgni* with Kartikeya and *vaidyutāgni* with Ganapati.

In *daivarātadarśanam* the Muni has recorded and commented upon several Mantras seen by Daivarata, one of the disciples of the Muni. Daivarata was devoted to Yoga from his early boyhood days. He performed intense *tapas* in order to attain *sahajasamādhi*, a spontaneous and effortless trance. When Daivarata was in a *samādhi* state few words emerged from his lips. The Muni observed him for two days and then found that complete Mantras are coming out of the mouth of Daivarata. The Muni suddenly realised that some Mantras were getting revealed to Daivarata. Then the Muni started writing down all those Mantras which came out from Daivarata. It continued for sixteen days. Some Mantras were not distinct enough, some came out in an incomplete form or in quarter form, some were not clearly audible. All these were written down by the Muni under the title *daivarāta chandodarśanam*. He then grouped these Mantras which were clearly audible and taken down in full, under eight *sūktas* and wrote commentary on them. These Mantras are in Rigvedic metres and have the same sound value and sense value as that of the Vedic Mantras. Different godheads like Savita, Agni, Sarasvati, Go, Indra are invoked through these Mantras.

*Mātṛtattvaprakāśikā* is a Sanskrit rendering of Sri Aurobindo's book "The Mother". When Ganapati Muni met the Mother in 1928 he had recited a few Shlokas from this rendering in front of Her. The Mother liked it and showed a copy of it to Sri Aurobindo. After going through the rendering Sri Aurobindo said to the Mother that the Muni must complete the rendering. But it was never completed by the Muni. This incomplete text has two sections. The first section contains thirty-eight verses with explanatory notes on each verse. The second section has twenty-one verses without explanatory notes and is incomplete. All this covers only a few passages of the section VI of the book "The Mother" – from " The four powers of the Mother are four of her outstanding personalities..." to "The Mother as the Mahashakti of this triple world of ignorance stands...into the infinity of the Spirit".

In *śārīrakamīmāṁsāṭippaṇī* the Muni records his critical views on Sankara's commentary of *brahmasūtra*.

In *vaidikapadānām arthāḥ* the Muni provides the meaning of some important words of the Veda. The list has only hundred and sixty words.

# मूलग्रन्थप्रशंसा

व्याचिख्यासितश्चायमृग्वेदः प्राचामृषीणां दिव्यदृशां दर्शनसङ्ग्रहः । न केवलमार्यवाङ्मये प्रपञ्चस्यैव वाङ्मये प्रथमो ग्रन्थः । रमणीयानां काव्यानां निदर्शनग्रन्थः । सर्वासामुपनिषदां मूलग्रन्थः। स्वतन्त्रः प्रमाणग्रन्थः । पवित्रः पारायणग्रन्थः । विचित्रविविधशक्तियुक्तमन्त्रपूर्णो रहस्यग्रन्थः। तमिमं विश्वतोमुखं महान्तमार्याणां शेवधिभूतं ब्रह्मकोशं सायणः केवलबाह्ययागोपयुक्तहौत्रकाण्डदृष्ट्या व्याख्यातवान् । देवताविषये तस्य न कश्चिदस्ति सिद्धान्तः । स तत्र प्रायेण पौराणिकमतानुयायी दृश्यते । तदपि स्वात्मन इष्टं मतं न क्वापि स्थापयितुं प्रयेते । इन्द्रादिदेवतासु तस्य दृष्टिरल्पेति बहुषु स्थलेषु व्यक्तम् ।

# नूतनभाष्यकरणावसरकथनम्

अयमृग्वेदः प्राचीनैर्महर्षिभिस्तपसा सम्पादितो ब्रह्मनिधिर्न केवलमार्याणामस्माकं वाङ्मये अपि तु प्रपञ्चस्यैव वाङ्मये परिदृश्यमाने कालतो गुणतश्च प्रथमो ग्रन्थः। रमणीयतमत्वान्महाकाव्यानां निदर्शनग्रन्थः। सत्यदर्शनत्वात्स्वतन्त्रः प्रमाणग्रन्थः । पवित्रत्वादुत्तमपारायणग्रन्थः। विविधकाम्यप्रदमन्त्रपूर्णत्वान्निरुपमानो जनहितग्रन्थः । मूलग्रन्थः सर्वासाम् उपनिषदाम् । शिलालेखतुल्यो ग्रन्थः प्राचीनचरित्रविज्ञानाय । तमिमं विश्वतोमुखं महान्तं वेदं कर्मसु हौत्रमात्रस्योपयुक्तं मन्वानः सायणाचार्यः सङ्कुचितया दृष्ट्या व्याख्यातवान् । तस्य व्याख्यातुः काले प्रायः पण्डितानां सर्वेषां च दृष्टिस्तादृशी । इन्द्रादिवैदिकदेवतास्तेषां दृष्टौ निकृष्टाः । तदाराधनरूपं कर्म च न साक्षान्मोक्षप्रदम् । तादृशे वातावरणे जातः सायणः । स च पुराणकालादारभ्यानुस्यूतं समकालिकानां मतमतिलङ्घ्य स्वतन्त्रया धिया वेदार्थं विचारयितुं नापीपरत् । अस्तु तस्य मतेनापौरुषेयः पूजनीयतमो वेदः । किं प्रयोजनम् ? तस्य व्याख्यातुर्दृष्टौ तत्र स्तुता इन्द्रादयो निकृष्टाश्चेत् तेन नात्युत्कृष्टं कर्मैव प्रतिपाद्यते चेत् मतविषये तस्य स्थानं पुराणेभ्योऽपि निकृष्टं किं न स्यात् ? अन्ततस्तदेव फलितमासीत् ।

# वासिष्ठगणपतिकृतं ऋक्संहितायाः लघुभाष्यम्

## भूमिका

### मङ्गलाचरणम्

इन्द्रं विश्वस्य राजानं ब्रह्माणं ब्रह्मभिर्नुतम् ।
आत्मानं सर्वभूतानां वन्द्यं वन्दामहे वयम् ॥ १ ॥

### ग्रन्थकारप्रतिज्ञा

आदिवेदस्य मन्त्राणामर्थं विश्वावगाहिनाम् ।
दर्शयिष्यामि लधुना भाष्येण स्पष्टवादिना ॥ २ ॥

पूर्वं करोमि मन्त्राणामक्षरार्थप्रकाशनम् ।
करिष्याम्युपसंहारे विमर्शान्विषयानुगान् ॥ ३ ॥

अथ गम्भीराणां दाशतयीनामर्थं लघुना भाष्येण प्रदर्शयामः । दाशतय्यश्च प्राचां दिव्यदृशामृषीणां दर्शनसङ्ग्रहः । न केवलमार्यवाङ्मये प्रपञ्चस्यैव वाङ्मये प्रथमो ग्रन्थः । निदर्शनग्रन्थो रमणीयानां काव्यानाम् । मूलग्रन्थः सर्वासामुपनिषदाम् । प्रमाणग्रन्थः सुतरां स्वतन्त्रः । पारायणग्रन्थः पवित्रः । रहस्यग्रन्थो विचित्रविविधशक्तिः ।

इदं च भाष्यमस्माभिर्द्विधा विभज्यते । पदभाष्यमुपसंहारभाष्यं चेति । पदभाष्ये प्रतिपदार्थविवरणमात्रं क्रियते । उपसंहारे क्रियेत सर्वोऽपि विचारः ।

नन्वाचार्यसायणेनैव ऋग्वेदसंहितायाश्चास्याः प्रतिपदार्थविवरणं कृतम्। तस्यैव त्वयास विचार उपसंहारः क्रियताम् । अलं पुनः प्रतिपदार्थविवरणायासनेति चेत् । सत्यम् । यद्याचार्यसायणो मन्त्राणां प्रतिपदार्थं यथावद्विवृतवान् । तर्हि नास्माकं तत्र पुनः प्रयत्नः शोभेत। तस्य भाष्यमन्यादृशम् । स आत्मनः सङ्कुचितयाज्ञिकदृष्ट्या सङ्कुचितपौराणिकदृष्ट्या च महतामृषीणां दर्शनानि दृष्टवान् । प्रथमया लोकयतस्तस्य बहूनां मन्त्राणामगुप्तोऽप्याध्यात्मिकार्थो न गोचरोऽभूत्। गुप्तस्य का कथा । सर्वाश्च मन्त्रसंहिताः कर्मकाण्डान्तर्भूताः । न तत्र लेशतोऽपि ज्ञानस्योपदेशोऽस्तीति याज्ञिकाः केचिन्मन्यन्ते । आचार्यसायणः प्रायेण तेषामनुयायी । द्वितीयया पश्यतस्तस्य मन्त्रेष्वसकृत्प्रदर्श्यमानमपि विश्वाध्यक्षस्येन्द्रस्य पारम्यं न विदितमभूत्। न चान्यासां कविष्णुरुद्रभिन्नानां देवतानां माहाभाग्यं ज्ञातमभूत् ।

वासिष्ठगणपतिमहामुनिप्रणीतम्

# ऋग्वेदभाष्यम् (१)

## उपोद्घातः

### प्रामाण्यचर्चाखण्डः

**वेदापौरुषेयत्वखण्डनम्**

इन्द्रं सोममग्निं विश्वांश्च देवान्नमस्कृत्य प्रमाणभूतं पवित्रमृग्वेदं देवताक्रमेण विभज्य व्याख्यास्यामः । ऋच इति वेद ऋग्वेदः । स चाग्निमीडे पुरोहितमित्यादिर्यथावःसुहासतीत्यन्तः । कथमृचः प्रमाणम् ।

अत्रैके प्राहुः । "शब्दो नित्यः । तेषां नित्यानां शब्दानामर्थसम्बन्धश्च नित्यः । तस्माच्छब्दा अर्थबोधकाः । अत एव ज्ञातसम्बन्धस्य श्रोतुः किमपि ज्ञानमुत्पादयेयुः । ज्ञानस्य च स्वत एव प्रामाण्यम्। कारण-दोषावधारणं तदपवादः । पौरुषेयेषु वाक्येषु पुरुषबुद्धिदोष-सम्भवात्तज्जन्यस्य ज्ञानस्य प्रामाण्यमपोदितं च भवितुं शक्यम् । वेदास्त्वपौरुषेयाः कर्त्रनुपलब्धेर्हेतोः । तस्माद्वैदिकवाक्यजन्यस्य ज्ञानस्य प्रामाण्यं निरपवादम् । तत्र हि नास्ति कारणदोषावधारणस्यावकाश" इति । ननु ऋग्वेदः पौरुषेय एव भवितुमर्हति शाकलकसमाख्यालिङ्गादि चेत् ।

न । प्रवचनादेव सा समाख्या । न कर्तृत्वात् । प्रवचनं च विशिष्टम् अध्यापनमनन्यसाधारणमध्ययनं वा ।

अत्र विचार्यते । अस्तु शब्दो नित्यः । अस्तु तस्यार्थसन्बन्धो नित्यः। अस्तु तस्मादर्थबोधकः । अस्तु तज्जन्यं ज्ञानं प्रमाणं यावत्कारण-दोषानवधारणम्। वेदा अपौरुषेया इत्ययं तु केवलः प्रौढिवादः। यदुच्यते प्रकृतमृग्वेदमधिकृत्य तस्य शाकलकसमाख्या प्रवचनादिति। सा प्रवचनाद्वा भवतु। पृथक्पृथगुपलभ्यमानानां मन्त्रभागानामेक-संहितारूपेण करणाद्वा भवतु। तत्र नास्माकमाग्रहः। प्राचीनऋषिच्छन्दोदेवतानुक्रमणिकादिद्वारोपलब्धा ऋषयो मधुच्छन्दःप्रभृतयस्तु शाकलवन्न परिहर्तुं शक्याः। यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवतेति ह्यभियुक्ता आहुः। अग्निमीळेपुरोहितमित्यादिका ऋचो मधुच्छन्दः प्रभृतीनामृषीणां वाक्यानीत्युक्तं भवति । अर्थप्रकाशनाय कानिचित्पदानि संयोज्य यो यद्वाक्यमुच्चारयति स तस्य कर्तोच्यते। यस्य वाक्यं स ऋषिरिति लक्षणमृषिमन्त्रयोरीदृशमेव सम्बन्धमपेक्षते । तदनुवादमात्रपरं चेत्सर्वोऽप्यध्येता सर्वस्य मन्त्रस्य ऋषिःप्रसज्येत । विशिष्टमध्यापनम् अनन्यसाधारणमध्ययनं वा यस्य वाक्यमित्यनेन प्रतीतं न भवति। प्रसिद्धिश्च विद्यते वेदे शब्दानुशासने काव्येषु च मन्त्राणां कर्तारः सन्तीति । नमो मन्त्रकृद्भ्य इति ब्राह्मणम् । सुकर्मपापमन्त्रपुण्येषु कृञ इति मन्त्रकृत्पदव्युत्पादने पाणिनिः। अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्त इति रघुवंशे कालिदासः । सिध्यत्येवं मधुच्छन्दःप्रभृतीनामृग्वेदकर्तुत्वम् । तस्मान्नास्ति कर्त्रनुपलब्धिरिति हेतुर्मन्त्राणामपौरुषेयत्वं साधयितुम् ।

ननु मधुच्छन्दःप्रभृतयोऽपि प्रवचनादेव तत्तन्मन्त्रभागर्षयो भवन्तु। यस्य वाक्यं स ऋषिरिति लक्षणस्यार्थो लक्षणया वक्तव्यः। नमो मन्त्रकृद्भ्य इति ब्राह्मणस्थस्य मन्त्रकृत्पदस्य च।

मन्त्रकृत्पदव्युत्पादनस्थः । पाणिनिरन्ये च मन्त्रकृत्पदस्य प्रयोक्तारो लक्षणयैव समर्थयितव्याः । नित्यानां वेदानां करणं हि नोपपद्यते। तस्मान्न सिध्यति मधुच्छन्दःप्रभृतीनामृग्वेदकर्तृत्वमिति चेत् ।

अयं विचित्रो वादः। भवद्भिरुक्तो वेदानां नित्यत्वं साधयितुं कर्त्रनुपलब्धिर्हेतुः । उपलब्धानां कर्तॄणां गौणत्वं वक्तुं वेदानां नित्यत्वं पुनराश्रीयते । मन्त्रनित्यत्वायत्तमृषीणां मन्त्रकृत्त्वस्य गौणत्वं तदायत्ता कर्त्रनुपलब्धिः कर्त्रपुनलब्ध्यायत्तं मन्त्रनित्यत्वमित्ययमतिसुन्दर-श्चक्रकदोषः ।

ऋषीणां मन्त्रप्रवचनकर्तृत्वादेव तत्तन्मन्त्रर्षित्वं प्रसिद्धेरेव भवतु न नित्यत्वादृचां तेन न चक्रकदोष इति चेत् ।

सैव नास्ति । क्वचिदपि मधुच्छन्दःप्रभृतीनां मन्त्रपाठकनाम न प्रसिद्धम्।

नन्वन्या प्रसिद्धिरस्ति ऋषयो मन्त्रद्रष्टार इति । सैव मुख्यार्थसंवादिनी भवतु । मन्त्रकृत इति प्रसिद्धिस्तु भाक्ता भवत्विति चेत् ।

असाधकमुच्यते भवद्भिः प्रवचनादृष्याख्या इति भवतां वादः। भवद्भिः प्रदर्शिता प्रसिद्धिस्तु दर्शनादृष्याख्या इति वदति । कथं सा भवतां मुख्यार्थसंवादिनी भवेत् । विशिष्टस्याध्यापनस्यानन्यसाधारणस्याध्यय-नस्य वा नास्ति हि दर्शनसंज्ञा ।

ननु मन्त्रविषये दर्शनवादमेव स्वीकुर्मः । न प्रवचनवादम् ।

ऋषिभिरग्निमीळे पुरोहितमित्यादिका ऋचो दृष्टा इति वदामः । सत एव मन्त्रान्पश्यन्तो मन्त्रद्रष्टार उच्येरन् । न मन्त्राणां कर्तारः । यः सन्तमेव सूर्यं पश्यति स एव हि सूर्यस्य द्रष्टोच्यते । न सूर्यस्य कर्ता तस्मान्न सिध्यति ऋषीणां वेदकर्तृत्वमिति चेत् ।

किमाभ्यन्तरेण चक्षुषा पश्यति मन्त्रमृषिः । उताहो बाह्येन । शब्दस्य चक्षुरिन्द्रियागोचरत्वाद्द्वितीयस्य नावकाशः । आद्ये यद्यपि पश्यन्ती वागवभासेत । तथापि द्रष्टा दृष्टमर्थं द्योतयन्ती द्रष्टुरतिसूक्ष्मा भाषैव सा अतिसूक्ष्मभाषा च पदबन्धात्मिका तादृशव्यक्तभाषावत्तद्वतः कृतितो नातिरिच्यते । तस्मान्न मन्त्रद्रष्टृत्वं न मन्त्रकृत्वप्रतिद्वन्द्वि । प्रतिपाद्यगौरवं पुरस्कृत्यकृतीनां दर्शनत्वव्यवहारः स्यात् । यथा काणादं दर्शनं पातञ्जलं दर्शनमित्यादि । अर्थापेक्षया द्रष्टृत्वं पदबन्धापेक्षया कर्तृत्वमिति वा न विरोधः ।

ननु मन्त्रद्रष्टार इत्यत्र दर्शनं लक्षणया श्रवणं वदामः । सत एव मन्त्रस्य घण्टानादादितुल्यनादवदन्तःश्रोता योगी मन्त्रद्रष्टोच्यते । न नूतनतया कर्तेति चेत् ।

यदि मन्त्रश्रोतार इत्यपि प्रसिद्धमभिधानमृषीणां स्यात् । तदा तदनुसारेण मन्त्रद्रष्टार इति पदं लाक्षणिकं कल्पनीयं स्यात् । न त्वस्ति तत् । यदि श्रवणादेव मन्त्रानृषयो लेभिरे तर्हि मुख्यार्थसंवादिनी मन्त्रश्रोतार इति प्रसिद्धिः कुतो न स्यात् । अस्ति द्विविधा प्रसिद्धिः मन्त्रकृत इत्येका । मन्त्रद्रष्टार इत्यन्या । तयोरेव सामरस्यं कल्पयितव्यम् । नोभयत्यागेन मुख्यार्थसंवादित्वाय पदान्तरमप्रसिद्धमन्वेषणीयम् ।

ननु मास्तु मन्त्रश्रोतार इति प्रसिद्धिः। अस्ति वेदानां श्रुतय इत्यभिधानम् । तेन ऋषीणां श्रवणानि मन्त्र इति सुलभं शक्यते वक्तुमिति चेत् ।

नास्ति साक्षाद्वेदानां श्रुतय इत्यभिधानम् । वैदिकवाक्येषु भव्यस्य धर्मस्य भूतस्य वस्तुनो वा प्रमितये साधनभूतस्यार्थस्य झटिति समर्पको यः शब्दस्तस्य श्रवणं श्रुतिरिति शास्त्रपरिभाषा । अत्र श्रोता सर्वोऽपि प्रमाता । तादृशानि श्रवणानि विधिवाक्येष्वेव भवन्ति । नान्यत्र वेदभागे । तस्माद्वैदिक्य एव श्रुतयः । न वेदाः साक्षात् । अत्रेदं भवदुपजीव्यं पूर्वतन्त्रसूत्रं भवति । "श्रुतिलिङ्गवाक्यप्रकरणस्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति । इति साक्षाद्वेदपर्यायः श्रुतिशब्दो लिङ्गादिभ्यस्तं कथं पृथक्कर्तुं शक्नोत्याचार्यः । श्रुतिप्राधान्याद्वेदस्य सर्वस्य श्रुतित्वेन व्यवहारोऽर्वाचाम् । अपि च श्रवणवादे स्वीकृते भवतां प्रवचनवादः सर्वथा कीर्तिशेषः स्यात् । सर्ववेदभागविषयो हि श्रवणवादः । न मन्त्रमात्रविषयः ।

ननु मास्तु कर्त्रनुपलब्धिर्हेतुः । वाचा विरूप नित्ययेति मन्त्रलिङ्ग-प्रामाण्याद्वेदानां नित्यत्वं ब्रूमः । साध्यमेव ह्यस्माकं मुख्यम् । तच्च वेदानां नित्यत्वम् । यः कश्चिद्वा भवतु हेतुः । एवं वेदानां नित्यत्वे सिद्धे मन्त्रकृत्वमृषीणां गौणं कल्पयितुं शक्यं स्यादिति चेत् ।

एतेनापि हेतुना न भवतां कार्यं सिध्येत् । नित्यत्वाद्वेदः प्रमाणमिति भवतां वादः । सम्प्रति भणन्ति तच्च वेदस्य नित्यत्वं वेदप्रामाण्यादिति। अयमतिसुन्दर इतरेतराश्रयो दोषः । अपि च मन्त्रवर्णोक्तं वाचो नित्यत्वं सामान्यतः शब्दनित्यत्वपरतया च नेतुं शक्यम् । आचार्यो जैमिनिश्चात्र

वाचो नित्यत्वं सामान्यतः शब्दनित्यत्वमेव मन्यते । न वैदिकवाक्यबन्धनित्यत्वम् । यदयं सामान्यतः । शब्दनित्यत्वस्यैव साधनाय लिङ्गाच्चेति तमिमं हेतुं समुच्चिनोति । एतदेव युक्तम् । मन्त्रार्थश्चास्मिन्नेव पक्षे निर्विरोधो भवति । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्" इति पूर्णो मन्त्रः । अस्याङ्गिरसो विरूप ऋषिः । अत्र ऋषिरात्मानं सम्बोध्याग्निस्तुतौ प्रेरयति । यद्यत्र नित्यत्वं वाक्यबन्धपरं स्यात् । तदा ऋषेरात्मनः सम्बोधनमग्निस्तुतिप्रेरणं च न सङ्गच्छेते । भवन्मते ऋषिमन्त्रयोरर्थविषये सम्बन्धाभावात् । परसम्बोधनमेवेदं नात्मसम्बोधनमिदमिति चेत् । नित्ये कथमनित्यस्य सम्बोधनम् ।

विरूपनित्ययेत्येकं पदं कुर्म इति चेत् तदशक्यं पृथक् पदपाठात् ।

विरूपशब्दस्य रूपाभाववान्वायुराकाशो वा भवत्वर्थ इति चेत् ।

न स प्रकृताग्निस्तुतिप्रेरणेऽन्वितो भवति ।

विशिष्टरूपो मनुष्योऽर्थो भवत्विति चेत् ।

साधारणरूपः किं पापं कृतवान् । एतादृशानि ऋषीणामात्मसम्बोधनानि मन्त्रेष्वन्यत्रापि सन्दृश्यन्ते । "नोधः सुवृक्तिं प्रभरा मरुद्भ्यः " इति नोधस आर्षे । "इन्द्रं समर्थे महया वसिष्ठ" इति वसिष्ठस्य। "एवानूनमुपस्तुहि वैयश्व दशमं नवम्" इति वैयश्वस्य विश्वमनसः। "विभूतरातिं विप्रचित्ररोचिषं अग्निमीळिष्ययन्तुरम् । अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम्" इति सोभरेः।

ईदृशमेवात्मसम्बोधनं वक्तुं युक्तमृषेर्वाचा विरूप नित्ययेत्यत्रापि। वाचो वाक्यपरत्वे वा नित्ययेति विशेषणं निःसंशयं भवदभिमतमर्थं बोधयितुं न पारयति। सन्ततयेत्यपि तदर्थस्य सुवचत्वात्। नित्याग्निहोत्रादिषु पदेष्वेवमेव नित्यशब्दो हि सन्ततार्थवाची।

नन्वस्त्यन्यत्प्रमाणं वेदस्य नित्यत्वं साधयितुम् । तच्च स्मृतिवचनम्। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति ।

किमेतद्वचनं पौरुषेयम् । उताहो अपौरुषेयम् ।

पौरुषेयमेव तथापि वेदमूलकत्वात्प्रमाणमिति चेत् ।

प्रागुक्त इतरेतराश्रयो दुर्वारः । अपि चात्रापि वाक् शब्दः सामान्यतः शब्दपरतया च व्याख्यातुं शक्यः । दृश्यन्ते च मन्त्राणां कार्यत्वे मान्त्रवर्णिकानि वचनानि । तेषु कानिचिदुदाह्रियन्ते । "एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमाविदावा ।" इति हिरण्यस्तूपस्यार्षे। "शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः। चकृमा सत्यराधसे।" इति वसिष्ठस्यात्मोद्देशेन। "उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः।" इति साधारणतया । पूर्वत्रोपमानभूता नरो नेतारो यथा छन्दोभाषम् । अत्र विप्रा मेधाविनः। एकत्र नेतारः प्रकरणादृषय इतरे। अन्यत्र विप्राः सामान्यत ऋषयः। "उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः। विप्रा अतक्ष्म जीवसे।" इति वत्सस्यार्षे । अत्र ब्रह्मण्या ब्रह्माणि यथा छन्दोभाषम् । "अस्मा इदु स्तोमं संहिनोमि रथं न तष्टेव तत्सिनाय।" इति नोधस आर्षे । "इन्द्र ब्रह्म क्रियमाणा जुषस्व याते शविष्ठ नव्या अकर्म । वस्त्रेव भद्रा सुकृता वसूयूरथं न धीरः स्वपा

अतक्षम्।'' इति गौरवीतेः। अनित्यजन्मवत्पुरुषनामयोगात्तत्सम्बद्धकथायोगाच्च वेदानां तत्तत्पुरुषजन्मतः प्रागभावः। कुत्सकक्षीवद्दिवोदासदभीतिसुस्रवोभुज्युवृषणश्वखेलप्रभृतीनि परःशतानि भूलोके जन्मवतां मनुष्याणां नामानि मन्त्रकाण्डे दृश्यन्ते। तत्सम्बद्धाश्च कथाः। भृगूषस्तिज्ञानश्रुतिसत्यकामोपकोसलाश्वपति-श्वेतकेतुयाज्ञवल्क्यजनकप्रभृतीनि परःशतानि भूलोके जन्मवतां मनुष्याणां नामानि ब्राह्मणेषु दृश्यन्ते । तत्सम्बद्धाश्च कथाः। भवतां नेता शबरस्वामी ब्राह्मणस्थं बबरः प्रावाहणिरित्येकं नामातिक्लिष्टया विधया वायुपरतया व्याख्याय पूर्वपक्षोदाहृतं कुसुरुविन्द औद्दालिकिरित्यन्यन्नामापि अपरिहरन्नेव वेदवाक्यानां सर्वेषाम् अप्यनित्यार्थयोगः परिहृत इति तृप्तः कृतार्थमात्मानं मन्यमानो निश्चक्राम । स च बबरस्य प्रावाहणेर्व्याख्याने ''प्रवाहणस्य पुरुषस्याप्रसिद्धत्वान्न प्रवहणस्यापत्यं प्रावाहणि'' रिति वदति। प्रतिवादिनो नेत्रयोर्धूलिप्रक्षेपणमेतत्। अस्ति प्रवाहणः प्रसिद्धो जीवलस्य पुत्रः पाञ्चालानां राजा । यं प्रवाहणं जैवलिं वदन्ति । अयमेव राजर्षिरुद्दालकाय पञ्चाग्निविद्यां कथितवान् । यो क्षत्रियेष्वेव प्राग्बभूव न ब्राह्मणेषु । अयमेव राजर्षिः शिलकायशालावत्याय चैकितानाय दाल्भ्याय चाकाशोद्गीथविद्यामुपदिष्टवान् । एतदुभयं च दृश्यते छन्दोगानामुपनिषदि। सायणाचार्यस्तु स्वकीयस्य ऋग्वेद-भाष्यस्योपक्रमे यथा मीमांसकसम्प्रदायमनित्यार्थयोगो वेदेषु नास्तीति प्रतिज्ञाय शबरस्वामिवत् पिता पुत्राभ्यां प्रवाहणबबराभ्यां वायुसायुज्यं दत्वा मन्त्रव्याख्यानसमये तां प्रतिज्ञां विस्मृत्य पूर्णं वेदं अनित्यार्थैः पूरितवान्। अथवा स किङ्करोतु साम्प्रदायिको विद्वान्। तेनाचार्यः शबरस्वामी नोल्लङ्घयितव्यः। मन्त्राश्च यथा शब्दगति व्याख्यातव्याः।

व्यक्त्यावृत्तिवादखण्डनम्

अपर आह "वेदोक्तानां व्यक्तीनां नानित्यत्वम् । प्रतिकल्पं तदावृत्तिर्भवतीति हेतो" रिति ।

अत्र किं प्रमाणम् ।

"सूर्याचन्द्रमसौ धाता यथापूर्वं अकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ।" इति मन्त्रवर्णः प्रमाणमिति चेत् ।

अत्र किमस्ति वेदोक्तानां व्यक्तीनां समर्पकं किमपि पदम् ।

अजहल्लक्षणया वदाम इति चेत् ।

विश्वसमष्टौ यावदनुक्तं तावदेव तद्वचनं लक्षयितुं प्रभवेत् । न तद्गताः काश्चन व्यक्तीरपि । यदि व्यक्तीश्च लक्षयेत्तर्हि सर्वा अपीत्यापत्तिः । इमा एव लक्षयेन्नेमा इति विनिगमकविरहात् ।

तर्हि देवानामसङ्ग्रह इति चेत् ।

न । समष्टिकोटावेव हि ते न व्यष्टिकोटावाधिभौतिकाध्यात्मिकवैभवशालित्वात् । आधिकारिकव्यक्तीर्लक्षयेन्न तद्भिन्ना इति व्यवस्थां कुर्म इति चेत् । यथा स्वमतं भवतां व्यवस्था स्यात् । वयं तु पृच्छामोऽर्थमेव प्रमाणवाक्यस्य । अपि चाधिभूतमध्यात्मं चान्यतरत्र वा कस्यचित् प्रपञ्चांशस्य यो नेता स एवाधिकारिको भवति । तेन मनुष्यव्यक्तीनामाधिकारिकत्वेमं प्रथममनुपपन्नम् ।

**वेदानां साक्षात् पारमेश्वरत्वस्य खण्डनम्**

अन्ये प्राहुः । यथाऽर्थबोधकत्वं लौकिकवैदिकेषु वाक्येषु तुल्यम् । तथा विवक्षामूलकत्वमपि । वाक्यस्य निसर्गो ह्येवम् । विवक्षा च यत् किञ्चित्कर्तृनिष्ठा भवति । तस्माद्वेदाश्च सकर्तृकाः ।

केन । ईश्वरेणेति ब्रूमः। तत्र मन्त्रकाण्डे यस्य यस्य भागस्य य आद्य उपलब्धा स तस्य ऋषिः कथ्यते। नित्यसिद्धस्यैव मन्त्रस्याद्योपलब्धिरन्तर्बहिर्वा श्रवणत एव साध्येति वक्तुं युक्तम् । ईश्वर प्रेरितस्योपलब्धिप्रकारोऽन्यः । ईश्वर आत्मकृतं मन्त्रमन्तर्यामी स्वविभूतिद्वारा ऋषेरन्तःकरणे प्रेरयति । स तत्र पश्यन्ती वाग्रूपो भासेत। यत्र सूक्ष्मे शब्दे समवेतोऽर्थः सूक्ष्मं भासेत सा पश्यन्ती वाक् । अनुभूतिश्च सर्वेषामेषा । यदस्माकं सर्वाण्याभ्यन्तराणि सविषयाणि चिन्तनानि सूक्ष्मशब्दसमवेतान्येव भवन्ति । शब्दं विना न परोक्षस्य कस्यचिदर्थस्य भानमन्तर्बहिर्वा । तदिदमेवर्षीणां मन्त्रदर्शनमुच्यते । तं च दृष्टं मन्त्रमृषिर्वैखर्या बहिः प्रकाशयति । तदिदमेवर्षीणां मन्त्रकरणमुच्यते । आद्योच्चारणमेव करणमित्युपचर्यत इत्युक्तं भवति । एवमीश्वरवाक्यत्वादृचः प्रमाणम् । अन्ये च वेदाः । ईश्वरवाक्यत्वाद्वेदेषु कारणदोषो नावधारयितुं शक्यः । ज्ञानस्य स्वतः प्रामाण्यानङ्गीकारेऽपि नात्र किमपि बाधकम् । ईश्वरवाक्यत्वेन कारणगुणावधारणस्यापि शक्यत्वात् । वेदानां पारमेश्वरत्वे च मन्त्र-ब्राह्मणे प्रमाणे भवतः । "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायतः ।" इति मन्त्रः । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गि-रसः ।" इति ब्राह्मणम् । अनित्यार्थयोगो नास्माकं दोषः ।

सर्वज्ञस्येश्वरस्य सर्वकालव्यापिनी भारतीति प्रत्युत गुणः । यानि ऋचां कार्यत्वे प्रदर्शितानि वचनानि तेष्वहमर्थ ईश्वरो वक्तव्यः । "उरु व्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।" इत्यत्रेश्वरः परोक्षरीत्या विप्रा इत्यात्मानमेव वदतीति वक्तव्यम् । विप्रशब्दस्य सामान्यतो मेधाविवाचकत्वात् । न बहुवचनमीश्वरे नोपपद्यते । मन्त्रेषु ऋषीणां सम्बोधनानि चेश्वेरेणैव क्रियन्त इत्यङ्गीकृते को दोषः । विशेषतः सम्बोधनं च तस्य तस्य विशिष्टत्वात् । सर्वज्ञस्येश्वरस्य सर्वकालव्यापिनी भारतीत्युक्तमेव । शास्त्रयोनित्वादिति शारीरकसूत्रस्य भाष्ये च शङ्करभगवत्पादा इममेव पक्षमङ्गीचक्रुः । सायणाचार्यश्च प्रायो मीमांसकसिद्धान्तमनिरावुर्वन्नपि मनुष्यनिर्मितत्वाभावेनैव वेदानामपौरुषेयत्वमिति वदन्नेतं सिद्धान्तमङ्गीकरोत्येव सादरम् । तस्मादयमेव पक्ष उपादेयः" इति ।

अत्र विचार्यते । पक्षेऽस्मिन्वैदिकवचनप्रामाण्यादेव वेदानां पारमेश्वरत्वमङ्गीकर्तव्यम् । वैदिकवचनमप्रामाण्यं च वेदानां पारमेश्वरत्वादेव अयमन्योन्याश्रयो दोषः ।

नास्त्यन्योन्याश्रयः । न वेदप्रामाण्याद्वेदस्य पारमेश्वरत्वं ब्रूमः । वेदप्रामाण्यं नामेश्वरवाक्यप्रामाण्यम् । अथ कीदृशात्प्रामाण्यात् । आप्तवाक्यप्रामाण्याद्वेदस्य पारमेश्वरत्वम् । कोऽयमाप्तः । यो वेदानां कर्ता स एवात्राप्तः। कोऽनयोर्विशेषो वेदानां कर्तुरीश्वरस्य च । अविज्ञातनामापूर्वः केवलं ग्रन्थकर्तृत्वलक्षणः । विज्ञातनामा सर्वज्ञत्वादि माहाभाग्यवत्त्वेन ज्ञायमानः परः । वेदानाकर्णयन्तो वयं कोऽस्य महातो ग्रन्थस्य कर्तेति प्रथमं जिज्ञासामहे । तदास्माकमिदं प्रमाणमप्रमाणं वेति मीमांसैव न भवति । ग्रन्थे यदा कर्तुर्नामलब्धं

तदा तं कर्तारं निर्धारयामः। तच्चास्माकं लब्धं नामेश्वरस्य। ग्रन्थान्तरेष्वप्येवमेव ग्रन्थकारनाम्नो ग्रन्थे लब्धिरेव ग्रन्थकारं निर्धारयितुं प्रभवति । तदिदमाप्तवाक्यप्रामाण्यम् । साधारणोऽपि मनुष्यो यथावदनुभूतार्थ आप्त उच्यते । नेश्वरत्वं तत्रापेक्षितम्। तादृशादाप्तवाक्यप्रामाण्यादेवोदाहृतयोर्मन्त्रब्राह्मणयोः प्रामाण्यम् । अनन्तरं सर्वस्य वेदस्येश्वरवाक्यत्वे निर्धारिते तस्य प्रामाण्यं सुस्थिरं स्यात् । अत्रेदमुदाहरणं भवति । भारते वयमध्यायान्तेषु वैयासिक्यां संहितायामिति यदा विलोकयामस्तदा व्यास एवमुवाच ततो व्यासप्रोक्तमिदमिति धीर्नोत्पद्यते । अपि तु ग्रन्थकार एव मुक्तवानतो व्यासप्रोक्तमिदमिति धीरुत्पद्यमाना दृश्यते। अनन्तरं व्यासप्रोक्ते यावद्गौरवं तावत्तत्र जायते। तस्मान्नान्योन्याश्रयः। एवं चेन्मास्त्वन्योन्याश्रयः। अन्यदस्ति कष्टम् । ईश्वरवाक्यस्येव भवदुक्ताप्तवाक्यस्य न निरङ्कुशं प्रामाण्यम् । तस्मान्न तदनुसारेण वेदानामीश्वरवाक्यत्वसिद्धिः । नन्विदं विरुद्धम् । यद्याप्तो वक्ता तस्य वाक्यं कुतः प्रमाणं न स्यात्। यो ग्रन्थस्य कर्ता स आत्मनः कर्तृत्वस्य ज्ञानाय किमपि प्रमाणान्तरं नापेक्षते । तत्र तस्य न कदाचिदपि प्रमादः सम्भवति । तस्मात्सर्वोऽपि ग्रन्थकार आत्मनो ग्रन्थकर्तृत्वस्य ज्ञाने निरपेक्षो वक्तव्यः । स्वग्रन्थकरणस्य स्वानुभवगोचरत्वात् । यदि स आत्मनो नामोदाहरति कर्तृत्वेन ग्रन्थे तर्हि यथानुभूतार्थसंवादी वक्तव्यः स्यात् । तस्मात्तस्याप्तत्वं पुरस्कृत्यानुभूतानुवादकत्वं सिध्यतीति चेत् । आप्नोतेः कर्तरि भूतार्थकक्तप्रत्यये कृते सत्याप्त इति रूपं भवति । अयं च शब्दार्थो विषयप्राप्तिपर्यन्तमेव धावति न तदनुवादित्वपर्यन्तम् । तादृशानामाप्तानां वाक्यानि सर्वाण्यपि नैव विश्वसनीयानि । मिथ्यावादित्वस्य च सम्भवात् । प्रकृतेन वयमाक्षिपाम आप्तवाक्यस्य मूलं ज्ञानं भ्रमप्रमादादिदोषदूषितं भवितुं

शक्यमिति । इदमेव शङ्कामहे तद्वाक्यं यथानुभूतसंवादि वा मिथ्या वेति उभयस्यापि सम्भवात् । तद्यथानुभूतसंवाद्येवेति निश्चेतुं वक्तुर्विश्वसनीयत्वम् अपेक्षितम् । वक्तुर्विश्वसनीयत्वं निश्चेतुं वक्तुर्विशिष्टः परिचयोऽपेक्षितः । अयमीदृशगुण एतन्नामेति । तस्मादविज्ञातनाम्नो ग्रन्थकर्तुर्वचनादेवेदृशेषु सन्दर्भेषु न वयं किमपि निर्धारयितुं शक्नुमः । नन्वेवं चेत् रघुवंशादीनि कालिदासादिकविकृतानीति निर्धारयितुमप्यशक्यं स्यात् । विषमो दृष्टान्तः । प्रमणग्रन्थो वेदः । रघुवंशादयः केवलं साहित्यग्रन्थाः । प्रमाणग्रन्थानां प्रामाण्यं न स्वायत्तम् । अपि तु ग्रन्थकाराविपर्यस्तदिव्यज्ञानसापेक्षम् । साहित्यग्रन्थानां निरपेक्षं प्रामाण्यमेव नास्ति प्रथमम् । यत्तु तत्र सहृदयैरर्थ्यमानं रामणीयकं तच्च ग्रन्थस्थशब्दार्थायत्तमेव न ग्रन्थकारगुणायत्तम् । पूर्वदले कर्ता ग्रन्थस्य प्रामाण्याय कस्यचिदभ्यर्हिततमस्य नाम कर्तृत्वेनोदाहरेदिति शङ्कितुं शक्यम् । नोत्तरत्र । शङ्काहेतोरभावात् । कृतमनया चर्चया । भवतो वादमूलमेव प्रथममत्यन्तं दुर्बलम् । वेदकर्तृप्रत्यायकत्वेनोदाहृतयोर्मन्त्रब्राह्मणयोः साक्षात्परमेश्वरं वेदकर्तृत्वेन समर्पयितुं नास्ति शक्तिः । कः साक्षात्परमेश्वरः । यः परमे व्योमनि जगतामध्यक्षः स साक्षात् परमेश्वरः । तद्विभूतिभूतदेवतापर्युदासान्तर्यामिपर्युदासाय च साक्षादित्युक्तिः । मन्त्रे विराट्पुरुषस्य प्रस्तुतत्वात्सर्वेषां च देहिनां तदेकदेशत्वे सर्वदेहिकृतो ग्रन्थसमुदायस्तत्कृत इति धियापि ऋगादीनां तत्कृतत्वोक्तिः सङ्गच्छते । उत्तरस्यामृचि च "तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः" इति सूर्यकिरणबीजकपृथिवीप्रकृतिकं आद्याश्वाद्युत्पादनं च विराट्पुरुषस्य पक्ष एव सङ्गच्छते न साक्षात्परमेश्वरस्य पक्षे । ननु को भेदो विराट्-

पुरुषस्य साक्षात्परमेश्वरस्य च उच्यते । सर्वब्रह्माण्डैः सह विशिष्टस्येश्वरस्य विवक्षायां लोके विराट्पुरुष इति निर्देशः । ''सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्त्वात्यतिष्ठद्दशा-ङ्गुलम् ।'' इत्यादौ वर्ण्यमान उदाहरणम् । सर्वब्रह्माण्डाधिकारिदेवतात्म-स्वरूपेश्वरव्यक्तिमात्रविवक्षायां साक्षात्परेमेश्वर इति निर्देशः । ''यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद ।'' इत्यादौ वर्ण्यमान उदाहरणम् । तस्मात्साक्षाज्जगतामध्यक्षो वेदान्कृतवानित्यत्रेदं प्रमाणं न भवति । विशिष्टस्य प्रकरणं ह्येतत् । ब्राह्मणं च स्पष्टं विशिष्टस्य प्रकरणमवगम्यते । तस्य पूर्णं वाक्यमिदं हि भवति। ''अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि श्वसितानि'' इति। किमुत्सृष्टमत्र वाङ्मये । प्रायः सर्वमीश्वरकार्यत्वेनोक्तम्। किमिदं ब्राह्मणवचनं पुराणेतिहासविद्याश्लोकसूत्रव्याख्यानानुव्याख्यान-वैलक्षण्येन वेदानां साक्षदीश्वररचितत्वं निर्धारयितुं प्रभवेत् । सन्ति च बहूनि बाधकानि वेदाः परमेश्वरस्य साक्षात्कृतय इत्यत्र ।

**१. औपम्यानुपपत्तिः** ''शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः। चकृमा सत्यराधसे।'' इति वसिष्ठस्यार्षः प्रागुदाहृतो मन्त्रः । अत्राहमर्थ ईश्वरेण यद्यन्वितः स्यात् तर्हि यथा नर इत्यौपम्यं न सङ्गच्छेत । यथा नर उक्थं कुर्वन्ति तथा वयमपीति। नर इति नेतॄणां विशिष्टपुरुषाणं नाम यथा छन्दोभाषम् । ''अहं प्रत्नेन मन्मना गिरः शुम्भामिकण्ववत् ।'' इति वत्सस्यार्षं चात्रोदाहर्तव्यम् ।

२. प्रयोजनसङ्कीर्तनानुपपत्तिः "उत ब्रह्मण्या वयं तुभ्यं प्रवृद्धवज्रिवः । विप्रा अतक्ष्म जीरसे ।" इति वत्सस्यार्षे प्रागुदाहृतो मन्त्रः । अत्राहमर्थ ईश्वरेण यद्यन्वितः स्यात् तर्हि जीवस इति प्रयोजन-सङ्कीर्तनं न सङ्गच्छेत । किं चिरं जीवनाय ब्रह्माणि करोतीश्वरः ।

३. नव्यत्वानुपपत्तिः
४. कामानुपपत्तिः "इन्द्र ब्रह्म क्रियमाणा जुषस्व यातेशविष्ठनव्या अकर्म । वस्त्रेव भद्रा सुकृतावसूयू रथं न धीरः स्वपा अतक्षम् ।" इति गौरवीतेरार्षः प्रागुदाहृतो मन्त्रः । अत्राहमर्थ ईश्वरेण यद्यन्वितः स्यात् तर्हि नव्या इति स्वात्मविशेषणं न सङ्गच्छेत । न चोत्तरार्धर्चे वसूयुरिति । वसूसुर्वसुकामो यथा छन्दोभाषम् । ईश्वरो पुराणेभ्यः पुराण आप्तसर्वकामश्च ।

५. अहमर्थानन्वयः सर्वत्राहमर्थश्च नान्वेतीश्वरेण मन्त्रवर्णस्थासु स्तुतिषु । यदीश्वर एव वेदानां कर्ता तर्हि सर्वत्र स्तुतिष्वहमर्थेन मन्त्रवर्णस्थेनेश्वरान्वितेनैव भवितव्यम् । स सर्वत्र ऋषिभिरेवान्वितो दृश्यते । इमानि स्पष्टानि कानिचिदुदाहरणानि। "तं त्वा वयं पतिमग्ने रयीणां प्रशंसामो मतिभिर्गोतमासः।" इति गौतमस्य नोधस आर्षे । अत्र वयं गोतमाः प्रशंसाम इत्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । "अभित्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभिप्रणोनुमः ॥" इति राहूगणस्य गोतमस्यार्षे । अत्र वयं गोतमा अभिप्रणोनुम इति आर्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः। "अवोचाम रहूगणा अग्नये मधुमद्वचः।" इति पुनस्तस्यैवार्षे । अत्र वयं रहूगणा अवोचाम वच इत्यार्षत्वानुकूलः

पारमेश्वरत्वप्रतिकूलोऽर्थः । "अचिकित्वाञ्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मनेन विद्वान् ।" इति दीर्घतमस आर्षे । अत्राचिकित्वानहं चिकितुषः पृच्छामि न विद्वानहं कवीन् पृच्छामीति पारमेश्वरत्वप्रतिकूलोऽर्थः। ऋषिश्चेदहमर्थो नेदमसङ्गतं स्यात् । तस्य दर्शनात्प्रागविद्यायाः सम्भवेन तदनुवादस्य कर्तुं शक्यत्वात् । इदमुत्तरत्र स्पष्टं निरूपयिष्यामः। ईश्वरस्याज्ञानानुपपत्तिर्वोदाहृते स्थले । "पितुर्यत्पुत्रो मम कस्य जायते।" इति हिरण्यस्तूपस्याङ्गिरसस्यार्षे। अत्र मम कस्य पितुरिति पारमेश्वरत्वप्रतिकूलोऽर्थः । ऋषेः पितैव ह्यत्र विवक्षितः । "हृद्रोगं मम सूर्य हरिमाणं च नाशय।" इति प्रस्कण्वस्यार्षे । अत्र मम हृद्रोगं हरिमाणं नाशयेति पारमेश्वरत्वप्रतिकूलोऽर्थः ऋषेरेव हि हृद्रोगो हरिमा च । ईश्वरस्य रोगानुपपत्तिर्वोदाहृते स्थले । "सं मातपन्त्यभितः सपत्नीरिव पर्शवः। निबाधते अमतिर्नग्नताजसुर्वेर्नवेवीयते मतिः। मूषो न शिश्ना व्यन्दन्ति माध्यः स्तोतारं ते शतक्रतो । सकृत्सुनो मघवन्निन्द्र मृळया धापिते व नो भव ।" इति कवषस्यार्षो द्व्यृच इतोऽपि भूयसीनामनुपपत्तीनामुदाहरणं भवति । "असौ चयान उवरादिमं तन्वं मम । अथोत तस्य यच्छिरः सर्वातारोमशा ङ्कृधि।" इत्यपालाया आर्षे । अत्रास्मच्छब्द सम्बन्धिनोऽर्थां ऋषिकायामेव सङ्गच्छन्ते न परमेश्वरे ।

**६. कर्तृत्वानन्वयः** यत्र यत्र मन्त्रेषु सूक्तस्य ततोऽधिकस्य वा भागस्य कर्ता निर्दिश्यते तत्र तत्रेश्वर नाम न दृश्यते । दृष्टानि नामानि त्वार्षत्वानुकूलानि । अत्र कानिचिदुदाहरणानि । "एवा ते हरियोजनासुवृक्तीन्द्रब्रह्माणि गोतमासो अक्रन् ।" इति गौतमस्य नोधस आर्षे । अत्र गोतमासो

ब्रह्माण्यक्रन् इत्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । अत्र ऋषिरात्मानमेव हि परोक्षविधया बहुवचनेन गोतमास इत्याह । लुप्तापत्यप्रत्ययमिदं पदम् । "सनायते गोतम इन्द्रनव्यमतक्षद्ब्रह्म हरियोजनाय । सुनीथायनः शवसाननोधाः प्रातर्मक्षू धियावसुर्जगम्यात्।" इति पुनस्तस्यैवार्षे अत्र गोतमो नोधा ब्रह्म तक्षदित्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । एकवचनमपि गोतम इति लुप्तापत्यप्रत्ययं पदमत्र बोध्यम् । यथा भृगुरिति शुक्रवाचकत्वे। "अकारित इन्द्रगोतमेभिर्ब्रह्माण्योक्ता ।" इति च तस्यार्षमन्त्रोदाहर्तव्यम्। "एवाग्निर्गोतमेभिर्ऋतावाविप्रेभिरस्तोष्ट जातवेदाः"। इति गोतमस्यार्षे । अत्र गोतमेभिरग्निरस्तोष्टेत्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । अत्र ऋषिरात्मानमेव हि परोक्षविधया बहुवचनेन गोतमेभिरित्याह । "तमुत्वा गोतमो गिरा रायस्कामो दुवस्यति ।" इति तस्यैव पुनरार्षं चात्रोदाहर्तव्यम् । "एतत्त इन्द्र वृष्णा उक्थं वार्षागिरा अभिगृणन्ति राधः । ऋज्राश्वः। प्रष्टिभिरम्बरीषः सहदेवोभयमानः सुराधाः।" इति ऋज्राश्वादीनां वार्षागिराणामार्षे । अत्र ऋज्राश्वोऽम्बरीषः सहदेवो भयमानः सुराधा इति वार्षागिरा उक्थ अभिगृणन्तीत्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः। "दिवो दासेभिरिन्द्रस्तवानो वावृधीथा अहोभिरिव द्यौः"। इति दैवोदासेः परुच्छेपस्यार्षे अत्र दिवोदासेभिः स्तवान इत्यार्षत्वानुकूलः पारमेश्वरत्वा प्रतिकूलोऽर्थः । अत्र ऋषिरात्मानमेव हि परोक्ष विधया बहुवचनेन दिवोदासेभिरित्याह । लुप्तापत्यप्रत्ययमिदं पदम् । "एवा ते गृत्समदा शूरमन्मा वस्यवो न वयुनानि तक्षुः" इति गृत्समदस्यार्षे । अत्र गृत्समदा मन्म तक्षुरित्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । अत्र ऋषिरात्मानमेव हि परोक्षविधया बहुवचनेन गृत्समदा इत्याह । "स्वायवो मतिभिस्तुभ्यं विप्रा इन्द्राय वाहः कुशिकासो अक्रन् ।"

इति विश्वमित्रस्यार्षे । अत्र कुशिकासोवाहोऽक्रन्नित्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः । अत्र ऋषिरात्मानमेव हि परोक्षविधया बहुवचनेन कुशिकास इत्याह । लुप्तापत्यप्रत्ययमिदं पदम् । "विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ।" इति तस्यैव पुनरार्षं चात्रोदाहर्तव्यम् । "अभित्वा गोतमा गिरा नूषत प्रदावने ।" इति गोतमस्य वामदेवस्यार्षे । अत्र गोतमा गिरा त्वामनूक्तेत्यार्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलोऽर्थः। अत्र ऋषिरात्मानमेव हि परोक्षविधया बहुवचनेन गोतमा इत्याह । लुप्तापत्यप्रत्ययमिदं पदम् । "तं त्वा सुशिप्रदम्पते स्तोमैर्वर्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः।" इत्यात्रेयस्य ससस्यार्षे । प्राग्वदत्रार्षत्वानुकूल्य- पारमेश्वरत्वप्रातिकूल्ये । "एति प्राची विश्ववारा नमोभिर्देवां ईळाना हविषा घृताची ।" इति विश्ववाराया ऋषिकाया आर्षे । "तस्मा उ ब्रह्मवाहसे गिरो वर्धन्त्यत्रयो गिरः शुम्भन्त्यत्रयः।" इत्यत्रेरार्षे "श्यावाश्वस्ते सवितः स्तोममानशे ।" इति श्यावाश्वस्य । "अद्वेषोनो मरुतो गातुमेतनश्रोता हवं जरितुरेवया मरुत्।" इत्येवया मरुतः । अत्रैवया मरुदिति लुप्तषष्ठीकं पदम् । "एवेदिन्द्रः सुते अस्तावि सोमे भरद्वाजेषु क्षयदिन्मघोनः।" इति भरद्वाजस्य। नूरोदसी अभिष्टुते वसिष्ठैः ।" इति वसिष्ठस्य । "इमा उवः सुदानवो घृतं न पिप्युषीरिषः। वर्धान्काण्यस्य मन्मभिः ।" इति काण्वस्य पुनर्वत्सस्य ।"वैयश्वस्य श्रुतं नरा" इति वैरूश्वस्य विश्वमनसः । "अयं वां कृष्णो अश्विना हवते ।" इति कृष्णस्य । "तावां विश्वको हवते तनूकृथे ।" इति विश्वकस्य । "आवां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।" इति प्रियमेधस्य "अरमश्वाय गायति श्रुतकक्षो अरङ्गवे ।" इति श्रुतकक्षस्य। "श्रुधीहवं तिरश्च्या इन्द्रयस्त्वा सपर्यति।" इति तिरश्चीनाम्नः । "समीरे भासो अस्वरन्निन्द्रं सोमस्य पीतये ।" इति रेभस्य ।"पवते हर्यतो हरिर्गृणानो जमदग्निना

।'' इति जमदग्नेः । ''विमदेन यदीळिता नासत्या निरमन्थतम्।'' इति विमदस्य ''अध प्रियं शूषमिन्द्राय मन्मब्रह्मकृतो बृहदुक्थादवाचि।'' इति बृहदुक्थस्य । ''शतं वा यदसुर्य प्रतित्वा सुमित्र इत्थस्तौद्दुर्मित्र इत्थ स्तौत् ।'' इति नामतो दुर्मित्रस्य गुणतः सुमित्रस्य । सन्त्येतादृशान्यन्यानि च बहून्युदाहरणानि । एषु सर्वेषु स्पष्टोऽर्थ आर्षत्वानुकूलः पारमेश्वरत्वप्रतिकूलः ।

**७. यावदेकर्षिशैलीसादृश्यम्**

इदं चार्षत्वस्यानुकूलं प्रतिकूलं पारमेश्वरत्वस्य । यथा - ''प्रातर्मक्षू धियावसुर्जगम्यात् ।'' इति प्रायः सूक्तान्युपसंहरति नोधाः । ''तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।'' इति कुत्सः । ''विद्यामेषं वृजनं जीरदानुम्।'' इत्यगस्त्यः । ''बृहद्वदेम विदथे सुवीराः'' इति गृत्समदः । ''यूयं पातस्वस्तिभिः सदा नः ।'' इति वसिष्ठः । एतद्दिङ्मात्रप्रदर्शनम् ।

वासिष्ठगणपतिमहामुनिप्रणीतम्

# ऋग्वेदभाष्यम् (२)

## उपोद्घातः

इन्द्रं सूर्यमग्निं सोममन्यांश्च विश्वान्देवान् नमस्कृत्य प्रमाणभूतं पवित्रं गभीरार्थं ऋग्वेदं व्याख्यास्यामः । ऋच इति वेद ऋग्वेदः । स चाग्निमीळे पुरोहितमित्यादिर्यथावः सुसहासतीत्यन्तः । कथमृचः प्रमाणम् ।

**वेदापौरुषेयत्वखण्डनम्**

अत्राहुः पूर्वमीमांसकाः पण्डिताः । "शब्दो नित्यः । तेषामर्थसम्बन्धश्च नित्यः । तस्माच्छब्दा अर्थबोधकाः । अत एव श्रोतुः किमपि ज्ञानमुत्पादयन्ति । ज्ञानस्य च स्वतः प्रामाण्यम् । कारणदोषावधारणं तदपवादः । पौरुषेयेषु वाक्येषु पुरुषबुद्धिदोष-सम्भवात्तज्जन्यज्ञानस्य प्रामाण्यमपोदितुं शक्यम् । वेदास्त्वपौरुषेयाः कर्त्रनुपलब्धेर्हेतोः । तस्माद्वैदिकवाक्यजन्यज्ञानस्य प्रामाण्यं निरप-वादम् । तत्र हि नास्ति कारणदोषावधारणस्यावकाशः ।" इति । इदं मतमनुसृत्यापौरुषेयत्वादृचः प्रमाणम् । ननु ऋग्वेदः पौरुषेयः एव भवितुमर्हति शाकलकसमाख्यालिङ्गादिति चेत् । न । प्रवचनादेव सा समाख्या न कर्तृत्वात् । प्रवचनं च विशिष्टमध्यापनम् । अनन्य-साधारणमध्ययनं वा । अत्र विचार्यते । अस्तु शब्दो नित्यः । अस्तु तस्यार्थसम्बन्धो नित्यः । अस्तु तस्मादर्थबोधकः । अस्तु तज्जन्यं ज्ञानं सति कारणदोषानवधारणे प्रमाणम् । वेदा अपौरुषेया इत्यत्रैवास्माकं सन्देहः । यदुच्यते प्रकृतमृग्वेदमधिकृत्य तस्य शाक-

लकसमाख्या प्रवचनादिति । सा प्रवचनाद्वा भवतु यथा भवन्मतम् । पृथक्पृथगुपलभ्यमानानां मन्त्रभागानामेकसंहितारूपेण करणाद्वा भवतु । तत्र नास्माकमाग्रहः । प्राचीनऋषिच्छन्दोदेवतानुक्रमणिकादि-द्वारोपलब्धा ऋषयो मधुच्छन्दः प्रभृतयस्तु शाकलवन्न परिहर्तुं शक्याः । यस्य वाक्यं स ऋषिर्या तेनोच्यते सा देवतेति ह्याहुरभि-युक्ताः । अग्निमीळे पुरोहितमित्यादिका ऋचो मधुच्छन्दःप्रभृतीनां वाक्यानीत्युक्तं भवति । अर्थप्रकाशनाय कानिचित्पदानि संयोज्य यो यद्वाक्यमुच्चारयति तत्तस्य भवति । स तस्य वाक्यस्य कर्तोच्यते । सिध्यत्येवं मधुच्छन्दःप्रभृतीनामृग्वेदकर्तृत्वम् । नमो मन्त्रकृद्भ्य इति ब्राह्मणमत्रानुकूलं भवति । "सुकर्मपापमन्त्रपुण्येषु कृञः" इति सूत्रेण मन्त्रकृत्पदं व्युत्पादयन्भगवान्पाणिनिश्चात्रोदाहर्तव्यः । "न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु" इति तस्यैवान्यत्सूत्रं चात्र भवति । अनेन शब्दादिषूपपदेषु विशेषतो कृञः प्राप्तं टप्रत्ययं निषिध्य "कर्मण्यण्" इति सूत्रेण सामान्यतोऽण्प्रत्ययस्य बोधयति प्रवृत्तिम् । एवं मन्त्रकारशब्दश्च प्रयोगार्हो विज्ञायते । ननु मधुच्छन्दः-प्रभृतयोऽपि भवन्तु प्रवचनादेव तत्तन्मन्त्रभागर्षयः । मन्त्राणामृषि-वाक्यत्वकथनमौपचारिकं कल्पयितव्यम् । ब्राह्मणोक्तं मन्त्रकरणं च मन्त्रप्रवचनलक्षकं कल्पयितव्यम् । यन्मन्त्रकृत्पदलिङ्गात्प्राप्यते । सूत्रद्वयस्थः पाणिनिश्चैतदनुसारेण नेतव्यः । अन्यथा शबरस्वामिप्रभृतयो महान्तः पण्डिता उल्लङ्घिताः स्युरिति चेत् । न कोऽपि सत्यान्वेषी विमर्शको भिन्नपक्षस्थान्पण्डिताननुल्लङ्घ्य सत्यत्वेनात्मना दृष्टं पक्षं स्थापयितुं प्रभवेत् । तस्मान्न सा काचिदापत्तिः । उपादेयं कारणं ब्रुवन्तु भवन्तः । किमर्थमृजुं मुख्यार्थं विहाय बहुषु स्थलेषूपचारः कल्पयि-तव्यः । नित्यत्वाद्वेदानामनन्यथोपपत्त्या तत्कार्यत्वं यत्र क्वचिदुक्तं भाक्तं वक्तव्यमिति चेत् । कथं वेदानां नित्यत्वं सिद्धं भवताम् ।

5

कर्त्रनुपलब्धेर्हेतोरित्युक्तमेवास्माभिरिति चेत् । विचित्रोऽयं वादः । अस्यायं सारांशो भवति । ऋचामुपलभ्यमानाः कर्तारो गौणाः कल्प्यन्ते । तस्मादृचां कर्तारो नोपलभ्यन्ते । यस्मात्कर्तारो नोपलभ्यन्ते तस्यान्नित्या ऋचः । नित्यत्वादेव ऋचां समुपलभ्यमानानां कर्तॄणां गौणत्वं कल्पयितव्यं भवतीति । मन्त्रनित्यत्वायत्तमृषीणां मन्त्रकृत्त्वस्य गौणत्वं तदायत्ता कर्त्रनुपलब्धिः । कर्त्रनुपलब्ध्यायत्तं मन्त्रनित्यत्वमित्ययमतिसुन्दरश्चक्रकदोषः । ऋषीणां मन्त्रप्रवचनकर्तृत्वादेव तत्तन्मन्त्रर्षित्वं प्रसिद्धेरेव भवतु न नित्यत्वादृचां तेन न चक्रकदोष इति चेत् । सैव नास्ति । क्वचिदपि मधुच्छन्दःप्रभृतीनां मन्त्रपाठकनाम न प्रसिद्धम् । मन्त्रकृत इति तु प्रसिद्धेर्वेदवेदाङ्गलिङ्गानुगृहीतायाः प्रत्युत वः विपरीतं फलितम् । न केवलं वेदवेदाङ्गयोः । काव्येषु चैषा प्रसिद्धिर्दृश्यते । "अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते" इति महाकविः कालिदासः । नन्वन्या प्रसिद्धिरस्ति ऋषयो मन्त्रद्रष्टार इति । सैव मुख्यार्थसंवादिनी । तद्व्यतिरिक्ता मन्त्रकृत इति प्रसिद्धिस्त्वौपचारिकी भवितुमर्हतीति चेत् । विपरीतमुच्यते भवद्भिः । प्रवचनादृष्याख्या इति भवतां वादः । भवद्भिः प्रदर्शिता प्रसिद्धिस्तु दर्शनादृष्याख्या इति वदति । कथं सा भवतां मुख्यार्थसंवादिनी भवेत् । विशिष्टस्याध्ययनस्याध्यापनस्य वा नास्ति हि दर्शनसंज्ञा । ननु साध्यमेवास्माकं मुख्यम् । तच्च नित्यत्वं वेदानाम् । सर्वेऽपि तद्विरोधपरिहारहेतवः स्वीक्रियन्ते । इयानेव परिहारहेतुरस्तीति न प्रतिजानीमहे । ब्राह्मणविषये प्रवचनवादं स्वीकुर्मः । शाखानामविषये च । दर्शनवादं तु मन्त्रविषये । मधुच्छन्दःप्रभृतिभिरग्निमीळे पुरोहितमित्यादयो मन्त्रभागा दृष्टा इति वदामः । ऋषयो मन्त्रद्रष्टार इति प्रसिद्धिरत्र हेतुः । यः सन्तमेव सूर्यं पश्यति स एव सूर्यद्रष्टोच्यते । न सूर्यं कुर्वाणः । एवं सत एव मन्त्रान्पश्यन्तो मन्त्रद्रष्टार उच्येरन् । न

मन्त्रान् कुर्वाणा इति चेत् । रमणीयोऽयं वादो यदि द्रष्टुं मन्त्राः साध्याः । तदेव नास्ति । कथं शब्दस्य चक्षुरिन्द्रियगोचरत्वम् । अर्थापेक्षया सोक्तिरिति चेत् । तत्र नास्माकमाक्षेपः । तेन मान्त्रवर्णिकवाक्यबन्धनित्यत्वं कथं वः सिध्येत् । अर्थापेक्षया मन्त्रद्रष्टृत्वं वाक्यबन्धापेक्षया मन्त्रकृत्त्वं च ऋषीणामिति व्यवहारद्वयमप्यस्माकं निर्विरोधम् । अस्ति चान्यत्रापि कृतिषु दर्शनत्वव्यवहारः । काणादं दर्शनं पातञ्जलं दर्शनमित्यादीन्युदाहरणानि । ननु मन्त्रद्रष्टार इत्यत्र दर्शनं लक्षणया श्रवणं वदामः । सत एव मन्त्रस्याद्यः श्रोता मन्त्रद्रष्टोच्यते । न नूतनतया कर्तेति चेत् । यदि मन्त्रश्रोतार इत्यपि प्रसिद्धमृषीणामभिधानं स्यात् । तदा तदनुसारेण मन्त्रद्रष्टार इति पदं लाक्षणिकं कल्पनीयं स्यात् । न त्वस्ति तत् । यदि श्रवणादेव लेभिरे मन्त्रानृषयः, तर्हि मुख्यार्थसंवादिनी मन्त्रश्रोतार इति प्रसिद्धिः कुतो न स्यात् । अस्ति द्विविधा प्रसिद्धिः । मन्त्रकृत इत्येका, मन्त्रद्रष्टार इत्यन्या । तयोरेव सामरस्यं कल्पयितव्यम् । नोभयत्यागेनाप्रसिद्धं मुख्यार्थसंवादिपदान्तरमन्वेषणीयम् । ननु मास्तु मन्त्रश्रोतार इति प्रसिद्धिः । अस्ति वेदानां श्रुतय इत्यभिधानम् । तेन ऋषीणां श्रवणानि मन्त्रा इति सुलभं शक्यते वक्तुमिति चेत् । न मन्त्राः श्रुतयः । मन्त्रव्याख्यानसमयेषु मन्त्रोदाहरणसमयेषु वा न क्वचिदपि यास्को मन्त्रं श्रुतिपदेनोदाहरति । स उपयुनक्ति निगमपदम् । जैमिनिबादरायणावपि न क्वचिदपि मन्त्रं श्रुतित्वेनोदाहरतः । ताभ्यामुपयुज्येत मन्त्रवर्णपदं प्रायः । न च वैदिकवाङ्मये श्रुतिपदं वेदसामान्यपरतया मन्त्रपरतया वा क्वचिदप्युपयुक्तं दृष्टम् । अथ का श्रुतिः । यत्पदं सूत्रेषु भाष्येषु टीकासु चासकृदुपयुज्यते । उच्यते । वैदिको विधिः श्रुतिः । भव्यस्यैवेति केषाञ्चिदाग्रहः । भूतस्यापीत्यपरे । उभयेऽपि ब्राह्मणेष्वेव विधिवाक्यानि सन्तीति मन्यन्ते तत्सत्यं वा भवतु । न वा । तत्तेषां मतम् । अत्र पूर्वे कण्ठोक्त्या मन्त्राः

केवलमभिधानवाचिनो न विधायका इत्याहुः ।"विधिमन्त्रयोरैकार्थ्य-मैकशब्द्यात् । अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ।" इति पूर्वतन्त्रे दृश्यमानं स पूर्वपक्षसिद्धान्तं मन्त्राविधायकत्वाधिकरणम् अत्र सुधीभिरवलोकनीयम् । अनन्तरास्तु यत्केवलमुपनिषद्वाक्यार्थ-विचारणमेव कृत्वा मन्त्रसंहिता उपेक्षा चक्रिरे । तत्तेषामपि मन्त्राणां विधायकत्वं सन्देहास्पदमिवेति नः प्रतिभाति । प्रकृतमनुसरामः । उभयेषां मीमांसकानां श्रुतिशब्दो वैदिकप्रत्यक्षविधिपर इत्युक्तम् । स च शास्त्रीयः पारिभाषिकः । न स कदाचिदपि मन्त्रपर उपयुक्त उभयोस्तन्त्रयोरिति न मन्त्राः श्रुतयः । नास्ति तस्मान्मन्त्रश्रवण-प्रसिद्धिः । लोके श्रुतिशब्दः सामान्यतो वेदपरतयोपयुज्यत इति चेत् । तच्छास्त्रीयसङ्केताज्ञानमूलकम् । अत्र पश्यतेदं पूर्वतन्त्रस्थं सूत्रम् । "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ।" वैदिक्याः समाख्यातो वैदिकं स्थानं बलीयो धर्मं प्रति प्रामाण्ये । स्थानं च क्रमः । वैदिकात्क्रमाद्वैदिकं प्रकरणं बलीयः । वैदिकात्प्रकरणाद्वैदिकं वाक्यं बलीयः । वैदिकाद्वाक्याद्वैदिकं लिङ्गं बलीयः । वैदिकाल्लिङ्गाद्वैदिकी श्रुतिर्बलीयसीति सूत्रार्थः । अत्र श्रुतिश्च साक्षाच्छ्रवणं कर्तव्यस्य वैदिकवाक्ये । प्रत्यक्षो विधिरिति तात्पर्यम् । एतावता किमायातम् । कर्त्रनुपलब्धे नित्या ऋच इति वादे हेतुरेव प्रथममसिद्ध इति स्पष्टमासीत् । ननु मास्तु कर्त्रनुपलब्धेरिति हेतुः । वाचा विरूप नित्ययेति मन्त्रलिङ्गप्रामाण्याद्वेदानां नित्यत्वं ब्रूमः । साध्यमेव ह्यस्माकं मुख्यम् । तच्च वेदानां नित्यत्वम् । यः कश्चिद्वा भवतु हेतुः । एवं वेदानां नित्यत्वे सिद्धे मन्त्रकृत्त्वमृषीणां गौणं कल्पयितुं शक्यं स्यादिति चेत् । एतेनापि हेतुना न भवतां कार्यं सिध्येत् । यद्यपि भवतां वेदानां नित्यत्वं साध्यं तथापि तद्वेदप्रामाण्यस्य हेतुत्वेन प्रदर्शयितुमेव । एवं च वेदस्य नित्यत्वं स्थापयितुं तस्यैव

प्रामाण्यमाश्रयन्ते भवन्तः । तस्य प्रामाण्यं समर्थयितुं पुनस्तस्यैव नित्यत्वम् । अयमतिसुन्दर इतरेतराश्रयो दोषः । अपि च मन्त्रवर्णोक्तं वाचो नित्यत्वं सामान्यतः शब्दनित्यत्वपरतया च नेतुं शक्यम् । आचार्यो जैमिनिश्चात्र वाचो नित्यत्वं सामान्यतः शब्दनित्यत्वमेव मन्यते । न वैदिकवाक्यबन्धनित्यत्वम् । यदयं सामान्यतः शब्द-नित्यत्वस्य साधनायैव "लिङ्गाच्चे"ति तमिमं हेतुं समुच्चिनोति । एतदेव युक्तम् । पूर्णो मन्त्रार्थश्चास्मिन्पक्ष एव निर्विरोधो भवति । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णो चोदस्व सुष्टुतिम् ।" अयं पूर्णो मन्त्रः । अस्याङ्गिरसो विरूप ऋषिः । अत्र ऋषिरात्मानं सम्बोध्य वदति । हे विरूपवृष्णे कामानां = वर्षकाय अभिद्यवे = अभितो द्योतमानाय तस्मै = प्रकृतायाग्नये नूनं नित्यया वाचा सुष्टुतिं चोद-स्वेति । यद्यत्र नित्यत्वं वाक्यबन्धपरं स्यात् । तदा ऋषेरात्मनः स सम्बोधनमग्निस्तुतिप्रेरणं न सङ्गच्छते । नित्यो ह्ययं च मन्त्रो भवन्-मतेन । कथमनित्यस्य ऋषेः सम्बोधनं प्रेरणं च नित्ये मन्त्रे । विरूपनित्ययेत्येकं पदं कुर्म इति चेत् । तदशक्यम् । पृथक्पद-पाठात् । विरूपशब्दस्य रूपाभाववान्वायुराकाशो वा भवत्वर्थ इति चेत् । न स प्रकृताग्निस्तुतिप्रेरणेऽन्वितो भवति । विशिष्टरूपो मनुष्योऽर्थो भवत्विति चेत् । साधारणरूपः किं पापं कृतवान् । एतादृशानि ऋषीणामात्मसम्बोधनानि दृश्यन्तेऽन्यत्रापि मन्त्रेषु । अत्रेमानि कानिचिदुदाहरणानि । "नोधः सुवृक्तिं प्रभरामरुद्भ्यः" इति गौतमस्य नोधस आर्षे । "इन्द्रं समर्ये महया वसिष्ठ" इति मैत्रावरुणे-र्वसिष्ठस्य । "एवानूनमुपस्तुहि वैयश्वदशमं नवम्" इति वैयश्वस्य विश्वमनसः । "विभूतरातिं विप्रचित्रशोचिषमग्निमीळिष्वयन्तुरम् । अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्यराय पूर्वम्" । इति काण्वस्य सोभरेः । ईदृशमेवात्मसम्बोधनं वक्तुं युक्तमृषेर्वाचा विरूप नित्ययेत्यत्रापि ।

तस्मान्नास्ति तत्र किमपि साधकं भवताम् । अपि च तत्र भवदभिमतेऽर्थे वाचः सिद्धे वा नित्ययेति विशेषणं निःसंशयं भवदभिमतमर्थं बोधयितुं न पारयति । सन्ततयेत्यपि तदर्थस्य सुवचत्वात् । नित्याग्निहोत्रादिषु पदेष्वेवमेव नित्यशब्दो हि सन्ततार्थवाची । नन्वस्त्यन्यत् प्रमाणं वेदस्य नित्यत्वं साधयितुम् । तच्च स्मृतिवचनम् । "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवेति" । तेन साधयामो वेदस्य नित्यत्वमिति चेत् । किं तद्वचनं पौरुषेयम् । उताहो अपौरुषेयम् । पौरुषेयमेव । तथापि वेदमूलकत्वात्प्रमाणमिति चेत् । प्रागुक्त इतरेतराश्रयो दुर्वारः । अपि चात्रापि वाक्छब्दः सामान्यतः शब्दपरतयापि व्याख्यातुं शक्यः । एतेनैवं जातीयकानि स्मृतिवचनानि व्याख्यातानि भवन्ति । दृश्यन्ते च मन्त्राणां कार्यत्वे मान्त्रवर्णिकानि वचनानि । तेषु कानिचिदुदाह्रियन्ते । "एतेनाग्ने ब्रह्मणा वावृधस्व शक्तीवायत्ते चकृमाविदावा" । इत्याङ्गिरसस्य हिरण्यस्तूपस्यार्षे । "शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ।" "उरु व्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्तविप्राः ।" इति साधारणतया । "उत ब्रह्मण्या वयं तुभ्यं प्रवृद्धवज्रिवः । विप्रा अतक्ष्मजीवसे ।" इति काण्वस्य वत्सस्य । "अस्मा इदुस्तोमं संहिनोमि रथं न तष्टेव तत्सिनाय।" इति गौतमस्य नोधसः । "इन्द्रब्रह्मक्रियमाणा जुषस्व याते शविष्ठ नव्या अकर्म । वस्त्रेव भद्रासुकृतावसूयूरथं न धीरः स्वपा अतक्षम् ।" इति शाक्त्यस्य गौरवीतेः । एतेन प्रमाणबलान्नित्या ऋच इति स्थापयितुं दुःशकमिति स्पष्टमभूत् । अनित्यार्थयोगाच्च न मन्त्राणां नित्यत्वम् । यथोदाहृतेषु मन्त्रेषु विरूपनोधोवसि ष्ठवैयश्वसोभरिनामानः पुरुषाः सम्बोधिताः । ते च जन्मवन्तो भूलोके । तस्मादुदाहृतास्ते मन्त्रास्तत्कालजात इति न किं विज्ञायेत । अन्यानि च परःशतानि कुत्सकक्षीवद्दिवोदास दर्भातिसुश्रवस्तुग्रभुज्युवृषणश्वखेलऋज्राश्वा-

म्बरीषसहदेवभयमानसुराधःपार्वप्रभृतीनि जन्मवन्मनुष्यव्यक्तिनामानि मन्त्रेषु प्रसक्तानुप्रसक्त्योदाहृतानि सन्ति । संवादाश्च दृश्यन्ते मन्त्र-काण्डे । यथा लोपामुद्रागस्त्यब्रह्मचारिणाम् । यमयम्योः । ऐलो-र्वश्योः । इदं सर्वमनित्यार्थयोगस्योदाहरणम् । ब्राह्मणेषु चायम् अस्त्यनित्यार्थयोगो भूयान् । भृगुर्वारुणिः, सत्यवचाराथीतरः, तपोनित्यः पौरुशिष्टिः, नाको मौद्गल्यः, उषस्तिश्चक्रामणः, जानश्रुतिः पौत्रायणः, सयुग्वारैक्वः, जनको वैदेहः, जारत्कारव आर्तभागः, भुज्युलो ह्यार्यनिः, कहोळः कौषीतकेयः, गार्गी वाचक्नवी, विदग्धः शाकल्य इत्यादी-न्युदाहरणानि । भवतां नेता शबरस्वामी ब्राह्मणस्थं बबरः प्रावाहणिरित्येकं नामातिक्लिष्टया विधया वायुपरतया व्याख्याय कुसुरुविन्द औद्दलकिरिति पूर्वपक्षोदाहृतमन्यनामापि नित्यपरतया व्याख्यातुमशक्नुवन्नेव वेदवाक्यानां सर्वेषामप्यनित्यार्थयोगदोषः परिहृत इति तृप्तः कृतार्थमात्मानं मन्यमानो निश्चक्राम । स च बबरस्य प्रावाहणेर्व्याख्यानसमये "प्रवाहणस्य पुरुषस्याप्रसिद्धत्वान्न प्रवाहण-स्यापत्यं प्रावाहणि" रिति वदति । अज्ञानमूलोऽयं कारणोपन्यासः । अस्ति प्रवाहणः प्रसिद्धो जीवलस्य पुत्रः पञ्चालानां राजा । यं प्रवाहणं जैवलिं वदन्ति । अयमेव राजर्षिरुद्दालकाय पञ्चाग्निविद्यां कथित-वान् । या क्षत्रियेष्वेव प्रागबभूव न ब्राह्मणेषु । अयमेव राजर्षिः शिलकाय शालावत्याय, चैकितायनाय दाल्भ्याय चाकाशोद्गीथविद्यामुपदिष्ट-वान् । एतदुभयं च दृश्यते छन्दोगानां ब्राह्मणोपनिषदि । सायणाचार्यस्तु स्वकीयस्य ऋग्वेदभाष्यस्योपक्रमे यथा मीमांसकसम्प्रदायमनित्यार्थ-योगो वेदेषु नास्तीति प्रतिज्ञाय शबरस्वामिवत् पितापुत्राभ्यां प्रवाहणबबराभ्यां वायुसायुज्यं दत्त्वा मन्त्राणां भाष्ये तु पूर्णं वेदम् अनित्यार्थैः पूरितवान् । किं करोतु स साम्प्रदायिको विद्वान् । तेनाचार्यः शबरस्वामी नोल्लङ्घयितव्यः । मन्त्राश्च यथा शब्दगतिव्याख्येयाः ।

अपर आह । वेदोक्ताः पुरुषव्यक्तयो नारीव्यक्तयो वा नानित्याः । प्रतिकल्पं तदावृत्तिर्भवतीति हेतोरिति । अत्र किं प्रमाणम् । "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः" इति मन्त्रवर्णः प्रमाणमिति चेत् । अत्र किमस्ति वेदोदाहृतानां पुरुषव्यक्तीनां नारीव्यक्तीनां च बोधकं पदम् । अजहल्लक्षणया वदाम इति चेत् । विश्वसमष्टौ यावदनुक्तं तावदेव तद्वचनं लक्षयितुं प्रभवेत् । न तद्गताः काश्चन व्यक्तीरपि । यदि व्यक्तीरपि लक्षयेत्तर्हि सर्वा अपीत्यापत्तिः । इमा एव लक्षयेन्नेमा इति विनिगमनाविरहात् । तर्हि देवानामसङ्ग्रह इति चेत् । न । समष्टिकोटावेव हि ते । न व्यष्टिकोटौ । आधिभौतिकाध्यात्मिक-वैभवशालित्वात् । अपि च वेदप्रामाण्ये साधयितव्ये परम्परया वा तत्साधनाय तद्विरोधपरिहाराय वा वैदिकवचनं तन्मूलमन्यद्वा वचनं प्रामाण्येन नावतिष्ठेति प्रागेवोक्तम् । अन्योन्याश्रयचक्रादि-दोषसम्भवात् ।

**वेदानां साक्षात्पारमेश्वरत्वस्य खण्डनम्**

अन्ये प्राहुः । "यथार्थ-बोधकत्वं लौकिक-वैदिकेषु वाक्येषु तुल्यम् । तथा विवक्षामूलकत्वमपि । वाक्यस्य निसर्गो ह्येवम् । विवक्षा च यत् किञ्चित्कर्तृनिष्ठा भवति । तस्माद्वेदाश्च सकर्तृकाः । केन । ईश्वरेणेति ब्रूमः । तत्र मन्त्रकाण्डे यस्य यस्य भागस्य यो य आद्य उपलब्धा स तस्य ऋषिः कथ्यते । नित्यसिद्धस्यैव मन्त्रस्याद्योपलब्धिरन्तर्बहिर्वा श्रवणमेव साध्यमिति वक्तुं शक्यम् । ईश्वरप्रेरितस्योपलब्धिप्रकारो-ऽन्यः । ईश्वर आत्मकृतं मन्त्रमन्तर्यामिद्वारा ऋषेरन्तःकरणे प्रेरयति । स तत्र पश्यन्ती वाग्रूपो भाषेत । यत्र सूक्ष्मे शब्दे समवेतोऽर्थः सूक्ष्मं

भासते सा पश्यन्ती वाक् । अनुभूति श्च सर्वेषामेषा । यदस्माकं सर्वाण्याभ्यन्तराणि सविषयाणि चिन्तनानि सूक्ष्मशब्दसमवेतान्येव भवन्ति । शब्दं विना न परोक्षस्य कस्यचिदर्थस्य भानमन्तर्बहिर्वा । तदिदमेवर्षीणां मन्त्रदर्शनमुच्यते । तं च दृष्टं मन्त्रमृषिर्वैखर्या बहिः प्रकाशयति । तदिदमेवर्षीणां मन्त्रकरणमुच्यते । आद्योच्चारणमेव करणमित्युपचर्यते । एवमीश्वरवाक्यत्वादृचः प्रमाणम् । अन्ये च वेदाः । ईश्वरवाक्यत्वाद्वेदेषु कारणदोषो नावधारयितुं शक्यः । ज्ञानस्य स्वतः प्रामाण्यानङ्गीकारेऽपि नात्र किमपि बाधकम् । ईश्वरवाक्यत्वेन कारणगुणावधारणस्यापि शक्यत्वात् । वेदानां पारमेश्वरत्वे च मन्त्रब्राह्मणे प्रमाणे भवतः । "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" । इति मन्त्रः । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" इति ब्राह्मणम् । अनित्यार्थयोगो नास्माकं दोषाय । सर्वज्ञस्येश्वरस्य सर्वकालव्यापिनी भारतीति प्रत्युतगुणः । यानि ऋचां कार्यत्वे प्रदर्शितानि वचनानि तेष्वहमथ ईश्वरो वक्तव्यः । "उरु व्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्मजनयन्त विप्राः" इत्यत्रेश्वरः परोक्षरीत्या विप्रा इत्यात्मानमेव वदतीति वक्तव्यम् । विप्रशब्दस्य सामान्यतो मेधावि-वाचकत्वात् । न बहुवचनमीश्वरे नोपपद्यते । मन्त्रेषु ऋषीणां च सम्बोधनानि चेश्वरेणैव क्रियन्त इत्यङ्गीकृते को दोषः । विशेषतः सम्बोधनं च तस्य तस्य विशिष्टत्वात् सर्वज्ञस्येश्वरस्य सर्वकालव्यापिनी भारतीत्युक्तमेव । "शास्त्रयोनित्वा"दिति शारीरकसूत्रस्य भाष्ये च शङ्करभगवत्पादा इमं पक्षमङ्गीचक्रुः । सायणाचार्यश्च प्रायो मीमांसकसिद्धान्तमनिराकुर्वन्नपि मनुष्यनिर्मितत्वाभावेनैव वेदाना-मपौरुषेयत्वमिति वदन्नेतं सिद्धान्तमङ्गीकरोत्येव सादरम् । तस्मादयमेव पक्ष उपादेय" इति । अत्र विचार्यते । अत्र पक्षे वैदिकवचनप्रामाण्यादेव

वेदानां पारमेश्वरत्वमङ्गीकर्तव्यम् । वैदिकवचनप्रामाण्यं च वेदानां पारमेश्वरत्वादेव । अयमन्योन्याश्रयो दोषः । नास्त्यन्योन्याश्रयः । न वेदप्रामाण्याद्वेदस्य पारमेश्वरत्वं ब्रूमः । वेदप्रामाण्यं नामेश्वरवाक्य-प्रामाण्यम् । अथ कीदृशात्प्रामाण्यात् । आप्तवाक्यप्रामाण्याद्वेदस्य पारमेश्वरत्वम् । कोऽयमाप्तः । यो वेदानां कर्ता स एवात्राप्तः । कोऽनयोर्विशेषो वेदानां कर्तुरीश्वरस्य च । अविज्ञातनामापूर्वः । केवलं ग्रन्थकर्तृत्वलक्षणः विज्ञातनामापर इति विशेषः । अवस्थाविशेष-श्चानयोः । यश्चकार वेदांत्स कर्ता । यः सर्वज्ञः सर्वशक्तः स ईश्वरः । वेदानाकर्णयन्तो वयं कोऽस्य महतो ग्रन्थस्य कर्तेति प्रथमं पृच्छामः । तदास्माकमिदं प्रमाणमप्रमाणं वेति मीमांसैव न भवति । अनन्तरं ग्रन्थं परिशीलयामः । ग्रन्थे यदा नाम लब्धमीश्वरः कर्तेति । तदा तं कर्तारं निधारयामः । तदिदमाप्तवाक्यप्रामाण्यम् । ग्रन्थान्तरेष्वपि सेयमेव ग्रन्थकारपरिज्ञानाय परिशोधनप्रणालिका दृश्यते । साधारणोऽपि मनुष्यो यथावदनुभूतार्थं आप्त उच्यते । नेश्वरत्वं तत्रापेक्षितम् । तस्मादाप्तवाक्यत्वप्रामाण्यादेव "तस्माद्यज्ञात्सर्वहुत" इत्यादेः प्रामाण्यम् । अनन्तरमीश्वरवाक्यत्वे निर्धारिते वेदस्य सर्वप्रामाण्यं सुस्थिरं स्यात् । अत्रेदमुदाहरणं भवति । भारते वयमध्यायान्तेषु वैयासिक्यां संहितायामिति यदावलोकयामस्तदा व्यास एवमुक्तवांस्ततो व्यासप्रोक्तमिदमिति बुद्धिर्नोत्पद्यते । अपि तु ग्रन्थकार एवमुक्तवांस्ततो व्यासप्रोक्तमिदमिति बुद्धिरुत्पद्यमाना दृश्यते । अनन्तरं व्यासप्रोक्ते यावद्गौरवं तावत्तत्र जायते । अङ्गीकुर्मो भवतां वादम् । तथापीदमत्र कष्टम् । ईश्वरवाक्यस्यैव नाप्तवाक्यस्य निरङ्कुशं प्रामाण्यं भवति । नन्विदं विरुद्धम् । यद्याप्तो वक्ता तस्य वाक्यं कुतः प्रमाणं न स्यात् । यो ग्रन्थस्य कर्ता स आत्मनः कर्तृत्वस्य ज्ञानाय किमपि प्रमाणान्तरं नापेक्षते । तत्र तस्य न कदाचिदपि प्रमादः सम्भवति । तस्मात्सर्वोऽपि

ग्रन्थकार आत्मनो ग्रन्थकर्तृत्वस्य ज्ञाने निरपेक्षो वक्तव्यः स्वग्रन्थकरणस्य स्वानुभवगोचरत्वात् । यदि स आत्मनो नामोदाहरति कर्तृत्वेन ग्रन्थे तर्हि यथानुभूतार्थसंवादी वक्तव्यः स्यात् । तस्मादाप्तत्वं पुरस्कृत्यानुभूतानुवादकत्वं तस्य सिध्यतीति चेत् । आप्नोतेः कर्तरि भूतार्थकक्तप्रत्यये कृत आप्त इति रूपं भवति । अयं च शब्दार्थो विषयप्राप्तिपर्यन्तमेव धावति न तदनुवादित्वपर्यन्तम् । तादृशानामाप्तानां वाक्यानि सर्वाण्यपि नैव विश्वसनीयानि । मिथ्यावादित्वस्य च सम्भवात् । प्रकृते न वयमाक्षिपाम आप्तवाक्यस्य मूलं ज्ञानं भ्रम-प्रमादादिदोषदूषितं भवितुं शक्यमिति । इदमेव शङ्कामहे तद्वाक्यं यथानुभूतसंवादि वा मिथ्या वेति । उभयस्यापि सम्भवात् । तद्यथानुभूतसंवाद्येवेति निश्चेतुं वक्तुर्विश्वसनीयत्वं निश्चेतुं वक्तुर्विशिष्टः परिचयोऽपेक्षितः । अयमेतन्नामेदृशगुण इति । तस्मादविज्ञातनाम्नो ग्रन्थकर्तुर्वचनादेवेदृशेषु सन्दर्भेषु न वयं किमपि निर्धारयितुं शक्नुमः । नन्वेवं चेद्रघुवंशादीनि कालिदासादिकविकृतानीति निर्धारयितुमप्यशक्यं स्यादिति चेत् । विषमो दृष्टान्तः । प्रमाणग्रन्थो वेदः । रघुवंशादयः केवलं साहित्यग्रन्थाः । प्रमाणग्रन्थानां गौरवं वक्तृसापेक्षम् । साहित्यग्रन्थानां न तथा । पूर्वदले कर्ता ग्रन्थस्य गौरवातिशयाय कस्यचिदभ्यर्हिततमस्य नाम कर्तृत्वेनोदाहरेदिति शङ्कितुं शक्यम् । नोत्तरत्र । शङ्काहेतोरभावात् । अत्राह । अस्तु शङ्का-हेतुः । तथापि नान्योऽन्याश्रयो दोषस्त्वया वक्तुं शक्यः । आप्तवाक्यप्रामाण्यात्कर्तृप्रत्ययः । ईश्वरवाक्यत्वात्प्रमाणप्रत्यय इति भेदस्य शङ्काहेत्वनपोद्यत्वात् । आप्तवाक्यप्रामाण्य एव हि तव शङ्का । नाप्तवाक्यप्रामाण्येन कर्तृप्रत्यये । शङ्कामात्रं तु प्रामाण्यं नापहन्तुं शक्नोति । यदि भवान् ग्रन्थकर्तुर्वञ्चकत्वं निर्धारयितुं शक्नुयात्तदा भवतो वादोऽस्मानन्यया विधया बाधेत । केवलं भवतः

शङ्क्या न काचिदस्माकं हानिः । एवं चेन्मास्त्वन्योऽन्याश्रयः । वेदकर्तृ-प्रत्यायकयोर्वाक्ययोः साक्षात्परमेश्वरं वेदकर्तृत्वेन समर्पयितुं शक्तिर्नास्तीति ब्रूमः । कः साक्षात्परमेश्वरः । यः परमे व्योमनि जगताम् अध्यक्षः स साक्षात्परमेश्वरः । अन्तर्यामिपर्युदासाय तद्विभूतिपर्युदासाय च साक्षादित्युक्तिः । मन्त्रे विराट्पुरुषस्य प्रस्तुतत्वात्सर्वेषामपि देहिनां तदेकदेशत्वेन सर्वदेहिकृतोऽपि ग्रन्थसमुदाय ईश्वरकृत इत्येवेति वर्णयितुं शक्येऽपि मुख्यत्वादृगादीनां ग्रहणम् । क इव विराट्पुरुषस्य साक्षादीश्वरस्य च भेदस्तव भाषायाम् । किं त्वं विराट्पुरुषं जगताम् अध्यक्षादन्यं मन्यसे । न । भाषाभेदस्य हेतुरेषः । ब्रह्माण्डविशिष्टेश्वर-विवक्षायां विराट्पुरुष इति निर्देशः । यथा "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ।" इत्यादौ ब्रह्माण्डाभिमानिदेवतात्ममात्रविवक्षायां साक्षादीश्वर इति । यथा । "यो अस्याध्यक्षः परमे व्योमंत्सो अङ्ग वेद यदि वा न वेद ।" इत्यादौ उत्तरस्यामृचि च "तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ।" इति सूर्यकिरणबीजकपृथिवी प्रकृतिकाश्वादीनामुत्पादनं विशिष्टपक्ष एव सङ्गच्छते । नाभिमानि-मात्रपक्षे । तस्मात्साक्षाज्जगतामध्यक्षो वेदान् कृतवानित्यत्र नेदं प्रमाणं भवितुं शक्नोति । ब्राह्मणं त्वितोऽपि स्पष्टं विशिष्टस्य प्रकरणम् अवगम्यते । तस्य पूर्णं वाक्यमिदं हि भवति । "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ।" इति । किमुत्सृष्टमत्र वाङ्मये । प्रायः सर्वमीश्वरकार्यत्वे नोक्तम् । किमिदं ब्राह्मणवचनं पुराणेतिहास... ।

*असमाप्तमिदं भाष्यम्*

वासिष्ठगणपतिमहामुनिप्रणीतम्

# ऋग्वेदभाष्यम् (३)

## उपोद्घातः

वसिष्ठस्यार्षे । "इन्द्राय ब्रह्मजनयन्त विप्राः" इति पुनस्तस्यैव। "इन्द्रब्रह्म क्रियमाणा जुषस्वयाते शविष्ठनव्या अकर्म । वस्त्रेव भद्रा सुकृतावसूयूरथं न धीरः स्वपा अतक्षम्।" इति गौरवीतेरार्षे। "तमुत्वा गोतमो गिरा रायस्कामो दुवस्यति" इति गोतमस्यार्षे। "अवोचाम रहूगणा अग्नये मधुमद्वचः।" इति पुनस्तस्यैव। "सनिगायत्रं नव्यांसम्" इति शुनःशेपस्य। "अस्मा इदुस्तोमं संहिनोमि रथं न तष्टेव तत्सिनाय ।" इति नोधस आर्षे। "उत ब्रह्मण्या वयं तुभ्यं प्रवृद्धवज्रिवः विप्रा अतक्ष्म जीवसे" इति वत्सस्यार्षे । अन्यानि चैवं जातीयकानि सन्ति बहूनि वचनानि। विस्तरभयान्नोदाहृतानि। अन्यदस्ति महत्प्रतिबन्धकमपौरुषेयत्ववादिनाम् । यदि प्रवचनादेवार्षत्वं मन्त्राणां तर्हि मन्त्रेषु विद्यमानोऽहमर्थस्तत्तदृषिभिर्नान्वितो भवेत् । ऋषिवाक्यार्थयोरसम्बन्धात् । येन यद्रचितं वाक्यं तत्राहमर्थस्तेनैवान्वेतीति वाक्यस्वभावः। यद्यपौरुषेयो वेदस्तत्राहमर्थे नैव न भवितव्यम् । कर्तुरभावात् । सता वा सर्वसाधारणेन भवितव्यम् । न यत् किञ्चिद्व्यक्तिमात्रान्वितेन । न च यत् किञ्चिज्जातिमात्रान्वितेन । मन्त्रेषु दृश्यमानोऽहमर्थस्तु सर्वत्र ऋषिणा तज्जात्या वान्वेति । सर्वसाधारण्येन समर्थयितुमशक्यानि कानिचिदुदाहरणानि प्रदर्श्यन्ते । "तं त्वा वयं पतिमग्ने रयीणां प्रशंसामो

मतिभिर्गोतमासः ।" इति गौतमस्य नोधस आर्षे । "अभित्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभिप्रणोनुमः।" इति गोतमस्थार्षे । "अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् ।" इति काण्वस्य वत्सस्यार्षे । "आसुगम्याय सुगम्यं प्रातारथेनाश्विना वा सक्षणी हुवे पितेव सोभरी ।" इति सोभर्या आर्षे । "पितुर्यत्पुत्रो मम कस्य जायते"। इति हिरण्यस्तूपस्यार्षे । "गर्भेनुसन्वेषामवेदमहं देवानां जनिमानि विश्वा" इति वामदेवस्यार्षे । अन्यच्चास्ति । मन्त्रेषु यान्यात्म-सम्बोधनानि दृश्यन्ते तानि तत्तदृषिभिरेवानुयन्ति। मन्त्रेष्वहमर्थ-स्तत्तदृषिभिरेवान्वेतीत्यत्रेदमपि प्रबलं लिङ्गम्। अत्रेमानि कानि-चिदुदाहरणानि। "नोधः सुवृक्तिं प्रभरा मरुद्भ्यः"। इति नोधस आर्षे । "इन्द्रं समर्ये महया वसिष्ठ" इति वसिष्ठस्यार्षे। "एवा नूनमुपस्तुहि वैयश्वदशमं नवम्।" इति वैयश्वस्य विश्वमनस आर्षे । विभूतरातिं विप्रचित्रशोचिषमग्निमीळिष्वयन्तुरम् । अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम्।" इति सोभरेरार्षे । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्।" इति विरूपस्यार्षे । अत्र विरूप नित्ययेति द्वे पदे । तथा पृथक्पदपाठदर्शनात् । अपि च मन्त्रेषु परोक्षरीत्या प्रथमपुरुषेण तत्तदृषीणां नामलाञ्छनानि बहुषु स्थलेषु दृश्यन्ते । तदपि मन्त्राणामपौरुषेयत्वविरोधेनार्षत्वे प्रबलं लिङ्गम् । अत्रेमानि कानिचिदुदाहरणानि। "शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः।" इति शुनःशेपस्यार्षे । "यमग्निं मेध्यातिथिः कण्व ईधऋतादधि।" इति कण्वस्यार्षे । "प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अङ्गिरस्वन्महिव्रतप्रस्कण्वस्य श्रुधी हवम्।" इति प्रस्कण्वस्यार्षे। "अवीवृधन्तगोतमा इन्द्रत्वे स्तोमवाहसः"। इति गौतमस्य वामदेवस्यार्षे। "एतत्त्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभिगृणन्तिराधः । ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः

सुराधाः।" इति वार्षागिराणामृज्राश्वाम्बरीषसहदेवभयमानसुराधसामार्षे। "दिवोदासेभिरिन्द्रस्तवानो वावृधीथा अहोभिरिव द्यौः।" इति दैवोदासेः परुच्छेपस्यार्षे । दीर्घतमामामते यो जुजुर्वान्दशमे युगे । अपामर्थं यतीनां ब्रह्मा भवति सारथिः।" इति दीर्घतमस आर्षे ।"महां इन्द्रो य ओजसा पर्जन्यो वृष्टिमां इव। स्तोमैर्वत्सस्य वावृधे।" इति वत्सस्यार्षे। "अग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये । सोभर्या उपसुष्टुतिं मादयस्व स्वर्णरे ।" इति सोभर्या आर्षे । "शतं वा यदसुर्यप्रतित्वासुमित्र इत्थास्तौद्दुर्मित्र इत्थास्तौत् । आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावोयद्दस्युहत्ये कुत्सवत्सम् ।" इति कौत्सस्य गुणतः सुमित्रस्य नामतो दुर्मित्रस्यार्षे। ऋषीणामात्मस्तुतयश्चापौरुषेयत्वप्रतिकूलाः । अनित्यार्थसंयोगश्च वेदानामपौरुषेयत्ववादस्य नितान्तं प्रतिकूलः । अत्र तत्रभवान् पूर्वमीमांसाभाष्यकारो बबरः प्रावाहणिरित्येकं पदं वायुपरतया व्याख्याय कृतार्थमात्मानं मन्यमानो निश्चक्राम । सन्ति परःसहस्राणि वेदेष्वनित्यव्यक्तिवाचकानि पदानि । यथा प्रागुदाहृतेषु मन्त्रेषु गोतमादीनि पदानि । अन्यानि च कानिचित्प्रदर्श्यन्ते ब्राह्मणस्थानि । भृगुर्वारुणिः सत्यवचा राथीतरः, तपोनित्यः पौरुशिष्टिः, नाको मौद्गल्यः, शिलकः शालावत्यः, चैकितायनो दाल्भ्यः, प्रवाहणो जैवलिः, उषस्तिश्चाक्रायणः, जानश्रुतिपौत्रायणः, सयुग्वारैक्वः, शौनकः कापेयः, अभिप्रतारीकाक्षसेनिः, हारिद्रुमतो गौतमः, सत्यकामो जाबालः, उपकोसलः कामलायनः, आरुणिरुद्दालकः, श्वेतकेतुः, प्राचीनशाल औपमन्यवः, सत्ययज्ञः पौलुषिः, इन्द्रद्युम्नो भाल्लवेयः, जनःशार्कराक्ष्यः, बुडिल आश्वतराश्विः, अश्वपतिः कैकयः, याज्ञवल्क्यः, मैत्रेयी, दृसबालाकिर्गार्ग्यः, अजातशत्रुः काश्यः, जनको वैदेहः, आश्वलः, जारत्कार्तव आर्तभागः, भुज्युर्लाह्यायनिः, कहोळः कौषीतकेयः, गार्गी वाचक्नवी, विदग्धशाकल्यः, पिप्पलादः, सुकेशा भारद्वाजः, शैब्यः

सत्यकामः, सौर्यायणी गार्ग्यः, कौसल्य आश्वलायनः, भार्गवो वैदर्भिः, कबन्धी कात्यायनः - इत्येवमादीनि । एतेषामनुदाहृतानामन्येषां च वैदिकानामनित्यव्यक्तिवाचकानां प्रकरणाविरोधेन नित्यपरतया व्याख्यानमपौरुषेयत्ववादिना कर्तव्यं स्यात् । दृष्टानि तदनुसारिणां च व्याख्यानानि तत्प्रतिकूलानि । तावदेष मीमांसकानां परिहारो नावतिष्ठते न यावत्सर्वेषां वैदिकानामनित्यव्यक्तिवाचकानां नित्यपरतया व्याख्यानं ते सम्पूर्णं कुर्युः । यथावत्परिहृतो वैषदोषो नार्षत्वप्रतिद्वन्द्वी । स्थितमेव नित्यार्थशालिनोऽपि वाक्यस्य वक्तृसापेक्षत्वम् । न वयं वदामो वाक्यस्थानि पदानि केनापि कुलालेन घटा इव क्रियन्त इति । तेषामानुपूर्व्येव कृतका भवति। यथा विवक्षं वक्तृभिः पदानि वाक्यतया सङ्ग्रथ्यन्ते । तस्मान्महता प्रयत्नेन भवद्भिः साधितमपि शब्द-नित्यत्वमस्मान्न बाधते ।

**वर्णमात्रनित्यत्ववादः**

परे तु वार्णा एव नित्याः । पदेषु वर्णानुपूर्वी च कृतकैव । वाक्येषु पदानुपूर्वी कविकृता । पदेषु वर्णानुपूर्वी तु प्रथमं भाषाकारकृता । अनन्तरं लोकव्यवहारवशात्सा विविधं विपरिणम्यते च । एष एव सर्व भाषास्वभाव इत्याहुः ।

**वेदानां साक्षात्पारमेश्वरत्वस्य खण्डनम्**

अपरे प्राहुः । "ईश्वरश्चकार वेदान् । तेषु यस्य यस्य भागस्य यो य आद्यो लब्धा स तस्य तस्य भागस्य ऋषिः । कथ्यते । ईश्वरवाक्यत्वाद्वेदेषु कारणदोषो नावधारयितुं शक्यः । ज्ञानस्य स्वतःप्रामाण्यानङ्गीकारेऽपि नात्र किमपि बाधकम् । ईश्वरवाक्यत्वेन कारणगुणावधारणस्यापि शक्यत्वात् ।

वेदानां पारमेश्वरत्वे मन्त्रब्राह्मणे प्रमाणे भवतः । "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।" इति मन्त्रः । "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस" इति ब्राह्मणम्। शास्त्रयोनित्वादिति शारीरक-सूत्रस्य भाष्यस्थले शङ्करभगवत्पादा एतन्मतमन्वगृह्णन् । वेदार्थ-प्रकाशकारस्तु तदेतन्मतमवलम्ब्यैव मीमांसकानामपौरुषेयत्वं मनुष्यनिर्मितत्वाभावेन, नित्यत्वमाकाशादिवन्नित्यत्वेन च समर्थित-वान् । अत्रेदं विचार्यते यद्यप्यस्मिन्मते वाक्यनित्यत्वविरोधो वार्येत तथापि बहूनि सन्ति बाधकानि । प्रथमं बाधकमिदं यत्प्रामाण्येश्वर-वाक्यत्वयोरितरेतराश्रयो दोषः । वेदानां हि प्रामाण्यादीश्वरवाक्यत्वम्, ईश्वरवाक्यत्वात्प्रामाण्यम् । द्वितीयं बाधकमृष्याख्यादर्शनम् । यथैतत्सर्वथाऽप्यपौरुषेयत्वस्य प्रतिद्वन्द्वि तथा साक्षात्परमेश्वरत्वस्यापि। यदि साक्षात्परमेश्वर एव कर्ता तदा मन्त्रेषु ऋषिकृतिप्रसङ्ग एव न स्यात् । स च बहुषु स्थलेषु विद्यते । दिङ्मात्रं प्रागुदाहृतमस्माभिः । मन्त्रेष्वहमर्थऋषिभिरेवान्वेति कर्त्रा साक्षात्परमेश्वरेण नान्वेतीति तृतीयं बाधकम् । इदमपि यथा सर्वथाऽप्यपौरुषेयत्वस्य प्रतिद्वन्द्वि तथा साक्षात्परमेश्वरत्वस्यापि । विशेषतश्च बाधकं वक्तव्यम् । पूर्वत्राहमर्थस्य सर्वसाधारण्यमेकदेशे वा दर्शयितुं साध्यम् । अत्र साक्षात्परमेश्वरान्वितत्वं सर्वत्र मृग्यमिति । न चार्षाणां स्तोत्राणामनुवादं परमेश्वरो निजया भाषया कृतवानिति वाच्यम् । तेषामनीश्वरवाक्यत्वापत्तेः । अर्वाचीनकालयोगादाकाशादिसदृशनित्यत्वविरोधाच्च । मन्त्रेषु नानाविधाः प्रार्थना दृश्यन्ते । तच्चतुर्थं बाधकं वेदानां साक्षात्परमेश्वर-त्वस्य । अत्र द्वे असङ्गती । पूर्णकामस्य कामप्रार्थनेत्येका । सा चात्मानमवरां देवतां वोद्दिश्येत्यपरा । न च परार्थं प्रार्थना इति वाच्यम् । एवं चेत्प्रार्थनाभिः सर्वसाधारणाभिर्भवितव्यम् ।

देशकालाभ्यामपरिच्छिन्नाभिश्च । न च तथा दृश्यते। "असौ च या न उर्वराऽऽदिमां तन्वं मम । अथोत तस्य यच्छिरः सर्वातारो मशाकृधि।" इत्यादीन्युदाहरणानि । येषु भवदीयो वेदार्थप्रकाश एवास्मदनुकूलः । अवरस्तुत्यापत्तिश्च यदि पारमेश्वरा एव वेदा अङ्गीक्रियेरन् । अवराणामेव स्वकीयकार्याध्यक्षरूपापेक्षयापि तत्र स्तुतत्वात्प्रायेण । न च परार्थमेवावरस्तुतिरीश्वरकृतिरिति वाच्यम्। स्वासाध्यस्यावरसाध्यस्याभावात् । एष परावरनिर्णयश्च भवन्मतानुसारेणात्रास्माभिः स्वीकृतः। भवन्तो हि मित्रवरुणार्यमेन्द्राग्निवायुसोमनासत्यादीनवरानेव ब्रुवन्ति। ईश्वरस्य सर्वात्मकत्वोक्तिस्त्वन्या । तेनेश्वरस्य परत्वं साध्येत नेश्वरविभूतीनां मित्रादीनाम् । विविधस्वविभूतिसेवाप्ररोचनायापि विभूतिस्तुतिरिति चेदेवमपि मुख्यं स्वस्तोत्रमत्यल्पं विभूतिस्तोत्रमेव भूयिष्ठमिति वैषम्यम् । न च भूयसामल्पाधिकारिणां सत्त्वादेतद्वैषम्यमिति वाच्यम् । परावरस्तोत्रविषयेऽपि तादृशाधिकारितारतम्यकल्पनस्यान्याय्यत्वात् । बालेभ्योऽपि प्रधानगायत्र्युपदेशाल्लिङ्गाज्जपस्तोत्रादौ सोपानक्रमेण विभूत्यारम्भपरमोपसंहारत्वनियमो नास्तीति विज्ञायते । किं च परमेश्वर एव वेदानां कर्ता "अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्" इति स्त्रीलिङ्गेनात्मनो निर्देशो नोपपद्यते । आर्षत्वसिद्धान्ते तु स्त्रीत्वादृषिकाया एतादृशो निर्देश उपपन्नो भवति। किं च परमेश्वर एव वेदानां कर्ता "अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत्।" इति स्वस्य कण्वेनौपम्यं सूर्यस्य खद्योतेनेव न सङ्गच्छते । किं च यदि परमेश्वर एव वेदानां कर्ता "एतेनाग्ने ब्रह्मणा वावृधस्व शक्तीवायत्ते चकृमा विदावा । उत प्रणोष्यभिवस्यो अस्मान्त्सं नः सृजसुमत्या वा जवत्या" इत्यत्र पूर्वोत्तरवाक्यार्थयोरसङ्गतिः स्यात्। "(चकृम)" इत्यत्रास्मदर्थः परमेश्वरेणान्वेतव्यः । अस्मानित्यत्राध्येत्रा मनुष्येणेति न इत्यत्र च । प्रार्थनानां मनुष्यार्थत्वे नैवोपपत्तेः । किं च

यदि परमेश्वर एव वेदानां कर्ता "अचिकित्वाञ्चिकितुषश्चिदत्र कविन् पृच्छामि विद्मनेन विद्वान् ।" इत्यत्र स्वस्याज्ञान प्रकटनं न सङ्गच्छेत । एवं "पाकः पृच्छामि मनसाऽविजान"न्नित्यादावपि । किं च यदि परमेश्वर एव वेदानां कर्ता "एकं सद्विप्रा बहुधा वदन्तीति विप्रोक्त्यनुवादो नोपपद्यते । किं च यदि परमेश्वर एव वेदानां कर्ता "यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद" इत्यत्र संशयो नोपपद्यते । स्वस्य ज्ञाताज्ञातविषये परमेश्वरस्यापि सर्वज्ञस्य संशय इति परिहासास्पदं स्यात् । एतानि स्वल्पान्यप्यनवमान्यानि ससबाधकानि। मन्त्रब्राह्मणयोरुभयोरपि बहूनि भूतानि चरितान्युपलभ्यन्ते । संवादाश्च बहवः । तेनार्वाचीनकथानुवादकत्वम् ईश्वरस्यापद्यते । तद्द्वादशं बाधकम् । अत्र तत्तत्कथानन्तरं वेदरचने वेदानामाकाशादिसदृशं नित्यत्वं न सिध्येत् । सर्गादावेव रचने सर्वज्ञ ईश्वरो भावि दृष्ट्वा कथाः कथितवानिति वक्तव्यम् । तर्हि परिमितकालकथामात्रकथनं कुतो हेतोः । भाविनो भूतत्वेन कथनं च कुतः । एवं संवादविषयेप्यूह्यम् । वैदिकाः कथासंवादाः सर्वेपि तत्तदृषिकालानुकूला एव दृश्यन्ते । न हि तत्तदृष्यपेक्षयार्वाचां तत्रोल्लेखः । ऋग्वेदे प्रकृते यावदेकर्षि तावद्भाषाशैली सादृश्यं दृश्यते । ऋषिभेदे शैली भेदश्च । एकैकस्यार्षमेकैकं चमत्कारं पुष्णाति । एकैकमुपसंहारवैलक्षण्यं दर्शयति । इदं सर्वमृष्याख्यानुकूलम् । यथा हृदयङ्गम उपमाचमत्कारः पराशरस्यार्षे । रूपकातिशयोक्तिचमत्कारो दीर्घतमसः । शब्दचित्रत्वं परुच्छेपस्य । अर्थप्रसादो मधुच्छन्दसः । इत्यादि । "यूयं पातस्वस्तिभिः सदा नः" इति प्रायो वसिष्ठः सूक्तान्युपसंहरति । "विद्यामेषं वृजनं जीरदानुम् ।" इत्यगस्त्यः । "प्रातर्मक्षूधियावसुर्जगम्यात्" इति नोधाः। "बृहद्वदेम विदथे सुवीराः" इति गृत्समदः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः" इति कुत्सः।

# आदिवेदमीमांसा

## प्रथमं प्रामाण्यकाण्डम्

### प्रथमं प्रकरणम्

### वेदापौरुषेयत्वखण्डनम्

इन्द्रं विश्वस्य राजानं ब्रह्माणं ब्रह्मणां पतिम् ।
आत्मानं सर्वभूतानां वन्द्यं वन्दामहे वयम् ॥ १॥

संशोध्य मन्त्रराशिं निधिमिव गुप्तं महान्तमार्याणाम् ।
सारं परिगृह्णन्तः कुर्मो वयमादिवेदमीमांसाम् ॥ २॥

**मीमांसकमतानुवादः**

प्रत्यक्षानुमानवद्वेदाः प्रमाणमित्यत्र वैदिकमतानुयायिषु न कस्यापि विवादः । कारणे तु परीक्षकाणां मतिभेदो भवति । तत्र मीमांसको ब्रूते । "नित्यः शब्दः । शब्दार्थसम्बन्धश्च नित्यः । अतः शब्दो ज्ञातसम्बन्धस्य श्रोतुः किमपि ज्ञानमुत्पादयेत् । ज्ञानं च स्वतः प्रमाणम् । कारणदोषावधारणं तदपवादः । अन्यथा ह्यनवस्था स्यात् । पौरुषेयेषु वाक्येषु पुरुषबुद्धिदोषसम्भवात्तज्जन्यस्य ज्ञानस्य

प्रामाण्यमपोदितं भवितुं शक्यम् । न तथा वेदवाक्यजन्यज्ञानस्य । वेदानां कर्त्रनुपलब्धेर्हेतोरपौरुषेयत्वात् । सति हि कारणे दोषशङ्कावकाशः । नन्वस्मिन्पक्षे प्रकृते जिज्ञासितार्थऋग्वेदः पौरुषेय एव भवितुमर्हति शाकलकाख्यालिङ्गादिति चेन्न । प्रवचनादियम् आख्या । न कर्तृत्वात् । प्रवचनं च विशिष्टमध्यापनमनन्यसाधारणम् अध्ययनं वा । नन्वविशेषतः सर्वाणि वाक्यानि पौरुषेयाणि वाक्यार्थस्य पदार्थेभ्यो भिन्नत्वात् । पदार्थानां पदसम्बद्धत्वेऽपि वाक्यार्थो हि पुरुषबुद्धिसम्बद्ध इति चेत् । न । पदार्थेभ्यो वाक्यार्थस्याभिन्न त्वात् ।"

**पदनित्यत्वखण्डनम्**

अत्र विचार्यते किं पदानां नित्यत्वाच्छब्दस्य नित्यत्वम् । आहोस्विद्वर्णानाम् । नाद्यः । संस्कृतभाषाजन्यप्राकृतपदानां सादित्वस्य प्रसिद्धत्वात् । न केवलं प्राकृतपदानाम् । तज्जन्यदेशभाषापदानां च । ननु संस्कृतभाषापदान्येव नित्यानि । तावता चरितार्थ्यं वेदापौरुषेयत्ववादिन इति चेत् ।

तत्र किं प्रमाणमिति पृच्छामः । बलवत्प्रमाणं विना संस्कृत-शब्दरूपाण्यसङख्यानि नित्यानीति को वा श्रद्दध्यात् । नास्ति प्रत्यक्षम् । आकाशादिवददर्शनात् । प्रत्युत प्रतिकूलं प्रत्यक्षम् । उत्पत्तिनिरोधदर्शनात् ।

नन्वर्थप्रत्यायकत्वाच्छब्दस्य नित्यत्वमनुमीयते । पूर्वमवस्थितेभ्य एव शब्देभ्योऽर्थप्रत्यय उपपद्यते न साद्यस्केभ्य इति । यावुत्पत्ति-निरोधावुच्येते ते अभिव्यक्तितिरोधाने । अत एव पदानि सृजामीति जनो न प्रत्येतीति चेत् ।

नेदमनुमानं स्थातुं प्रभवेत् । लिङ्गस्य नैकान्तिकत्वात् । उत्पत्तिनिरोधवद्भिरपि शब्दैरर्थप्रत्ययो हि नानुपपन्नः एवं जातीयकः शब्द एतस्मिन्नर्थे वर्तत इति व्यवहारसौकर्याय सङ्केतः । उत्पत्ति-निरोधवतीभ्यो हस्तचेष्टाभ्यश्चार्थप्रत्ययो लोके दृश्यते । लधुत्वाच्छब्दानेवार्थप्रत्यायनायाश्रयन्ते जनाः । तदुक्तमाचार्येण यास्केन। "अणीयस्त्वाच्च शब्देन संज्ञाकरणं लोके ।" इति ।(निघण्टु-१. २.) । अपि च संस्कृतभाषापदानां तदेतदर्थप्रत्यायकत्वं लिङ्गं प्राकृतदेशभाषापदानामर्थप्रत्यायकत्वेन सह तुल्ययोगक्षेमम् ।

नन्वेकेनोच्चारणयत्नेन संव्यवहारोऽर्थसम्बन्धश्च न शक्येते कर्तुमिति चेत् । य उच्चारयति न सोऽर्थसम्बन्धं करोति । सङ्केतान् विज्ञाय निजमभिप्रायं परस्मै प्रकटयितुं शब्दान्प्रयुनक्ति अनुवदति वा सङ्केततोऽर्थबोधकं परकीयं वाक्यम् । तत्र ज्ञातसङ्केतस्यैव श्रोतुरर्थप्रत्ययः स्यात् ।नाज्ञातसङ्ङ्केतस्य । निसर्गत एव यदि शब्दोऽर्थं बोधयेत् । अज्ञातसङ्केतश्चार्थं गृह्णीयात् । लोके पित्रादिभिः कृतानि मनुष्यव्यक्तिनामानि शास्त्रेषु शास्त्रकारैः कृतानि पारिभाषिकपदानि च सङ्केतबलादेवार्थं बोधयन्ति दृश्यन्ते । तस्मान्न वक्तुं शक्यं मनुष्यैः शब्दानामर्थसम्बन्धः कर्तुमशक्य इति । अर्थप्रत्यायनाय शब्दसङ्केतानकार्षुः केऽपि पूर्वे महान्तः पुरुषाः । न तेषां च परिणामो न व्यवहारधारायाम् । सङ्केतानां वैविध्यान्मूलभाषावैविध्यम् । परिणामाद्भाषातो भाषान्तरोत्पत्तिः । एतत्सर्वं भाषातत्त्व-परीक्षकैर्बहूभिरनुमाननिदर्शनैर्निर्धारितमिति नात्र वितन्यते । संस्कृतभाषापरिणामस्य दिङ्मात्रमुत्तरत्र प्रदर्शयिष्यामः ।

वर्णानामुत्पत्तिपक्षे शब्दरूपजातिषु सङ्केतग्रहः । अस्मिन्पक्षे

शब्दस्योच्चारणं नामकरणम् । तत्सजातीयशब्दसंस्कारस्तत्र निमित्तमात्रमेव भवेत् ।

अभिव्यक्तिपक्षेऽपि न पदानां नित्यत्वम् । वर्णानामानुपूर्व्येणाभिव्यञ्जनस्य पुरुषायत्तत्वात् । वर्णा एव हि तिष्ठन्ति व्यापिनः । न पदानि । वर्णेभ्यः पदानि नातिरिच्यन्त इति चेत् । सत्यम् । अत एव वर्णेभ्यः पृथङ्न तिष्ठन्ति स्वतन्त्रतया पदानीति ब्रूमः । यदिदममितं शब्दवैभवम् । सवर्णप्रस्तारस्य महिमा । वर्णप्रस्तारश्चानुपूर्व्येण वर्णाभिव्यञ्जने प्रतितिष्ठति । आनुपूर्व्येणाभिव्यञ्जनं च पुरुषायत्तम् । तस्मादनित्यानि पदानीति सिध्यति । पदानित्यत्वं नाम वर्णक्रमबन्धानित्यत्वम् । तथापि पदस्य वर्णनित्यत्वात्पदानि नित्यानीति यद्याग्रहः । अस्तु नाम तादृशं निरुपद्रवं नित्यत्वम् । तच्च प्राकृतदेशभाषापदेषु मनुष्यव्यक्तिनामसु वृद्धिगुणादिषु पारिभाषिकपदेषु निरर्थकेषु खष्कचिष्कादि शब्दरूपेषु च तुल्यम् ।

**पदस्थवर्णानित्यत्वसाधनम्**

वस्तुतस्तु यद्व्यापकानां वर्णानामभिव्यक्तिरुच्यते; सा च यथादेशं वर्णैकदेशभूतानां तरङ्गाणां वक्तव्यो न पूर्णानां वर्णानाम् । यदि व्यापकानां वर्णानां पूर्णतयाऽभिव्यक्तिरिष्येत तर्हि क्वचिदुच्चार्यमाणं शब्दं सर्वः सर्वत्र गृह्णीयात् । स च तरङ्गो निमित्तव्यापारवशाद्वायुवशाज्जलाशय इव व्यापकाक्षरमहोदधावुत्पद्यते । तालवृन्तचालनवशान्महावायौ वायुतरङ्गाद्वा । यथा जलतरङ्गो जलमयस्तथा वर्णतरङ्गो वर्णमय इति न पृथग्वक्तव्यम् । निमित्तव्यापारशान्तौ सवर्णतरङ्गः स्वप्रकृतिभूते वर्णे विलीयते यथा वायुव्यापारशान्तौ जलाशयतरङ्गः यथा वा

तालवृन्तव्यापारशान्तौ वायुतरङ्गः । यत्रावरणापगमे नाभिव्यक्तिस्तत्र यथास्थितस्य पूर्णस्यैकदेशस्य वोपलब्धिः सूर्यवत् । यत्र कर्मेन्द्रियव्यापारेणान्येन वा तादृशेनाभिव्यक्तिः तत्र सूक्ष्मतः स्थूलतरङ्गप्रादुर्भावो वाच्यो वायुवत् । वर्णविषये न वयं कमप्यावरणापगममनुभवामः । निमित्तव्यापारवशेन किमपि सञ्चलनमेवानुभवामः । अभिव्यक्तो वर्णतरङ्गश्च निमित्तबलानुसारेण मन्द्रो मध्यमस्तारो वा भवति । निमित्तस्वभावानुसारेण स्वरविशेषं च प्रपद्यते । यं कण्ठस्वरमाहुः। आवरणापगमे नाभिव्यक्तावीदृश-विशेषासम्भवः । तस्मात्पुरुषप्रयत्ननिष्पाद्यः प्रतिपुरुषं भिन्नस्वरो वर्णतरङ्ग एवास्माभिरनुभूयमानो वर्णः । न यथा स्थितो व्यापकः । न वा यथा स्थितस्यैकदेशः । ईदृशो वर्णतरङ्गः पुरुषस्य कार्यं यदि न भवेत् तर्हि घटोऽपि पुरुषस्य न कार्यम् । कुलालहस्तव्यापारादिना निमित्तेन कयाप्याकृत्याऽभिव्यक्ता मृत्तिकैव हि सा । तथा च वर्णानां नित्यत्वपक्षेऽपि वर्णसमूहः पदजालस्थोऽनुभूयमानः पौरुषेय इति सिद्धम्।

अथ पुनराह । भवतु वर्णानामेव नित्यत्वं मूलभूतानाम् । पदरूपाणां तु प्रवाहनित्यतया नित्यत्वमुच्यते । अभिव्यञ्जकपुरुषपरम्पराया अनादित्वेन प्रवाहनित्यतया नित्यत्वात् ।

एवमपि न ते कार्यसिद्धिः वर्णनित्यत्वस्य भवदभिमतं प्रयोजनं गतम् । अभिव्यञ्जकपुरुषपरम्परायाः पाणौ पतितानि परिदृश्यमानानि शब्दरूपाणि । एतेन संसारप्रवाहे नित्यत्वमेव वैय्याकरणैरिव त्वया शब्दरूपाणामुक्तं स्यात् । अस्त्येव पौरुषेयत्वं भयङ्करम् । अदोषत्वमेव प्रामाण्यसाधकं शब्दस्य नानादित्वम् । अनादावपि

पुरुषपरम्परायां व्यामोहस्य सम्भवात् । वस्तुतत्त्वं तु प्रागुक्तम् ।

**शब्दार्थसम्बन्धविचारः**

अथ पुनरन्यया युक्त्या मीमांसकः प्रत्यवतिष्ठते । उक्तं शब्दार्थयोः सम्बन्धो नित्य इति । त्वं ब्रूषे साङ्केतिकः कृतक इति । नेति ब्रूमः । यदि कृतकस्तर्हि सम्बन्ध-कर्तुर्नाम विस्मर्तुमशक्यम् । तस्मादनुमीयते शब्दार्थसम्बन्धः सहज इति । एवं चेदनन्तशब्दरूपाणां पृथक् पृथगवस्थिततत्वं प्रसज्येतेति चेत् । न वर्णैरिवास्माकं कार्यसिद्धेः । पदं वा बोधयेदर्थम् । वर्णो वा बोधयेद्वर्णान्तरसंस्कारसहितः । लाघवाद्वर्ण इति ब्रूमः । युक्तेश्च । अर्थप्रतीतिकाले पदस्यान्तिमो वर्ण एव हि दृश्यते । पूर्वे भवन्ति तिरोहिताः । पूर्ववर्णजनितसंस्कारसहितस्यान्तिमस्य वर्णस्योपरि तिष्ठेदर्थप्रत्यायनभारः । तथापि वर्णस्य वर्णान्तरसंस्कारकृत्पुरुष आपद्येतेति चेन्न । एकत्राकाशेऽवस्थितानां वर्णानां परस्परसङ्घर्षणवशेन विविधसंस्कारसाहित्यस्य सम्भवात् ।

यदुच्यते पदस्थवर्णरूपाणि वर्णतरङ्गा इति । ततो नास्माकं हानिः । भवन्तु वर्णतरङ्गाः । भवन्तु वा यथास्थितवर्णैकदेशाः । वर्णत्वप्रत्ययादेवार्थप्रत्ययः । तस्मान्मूलवर्णानामेव बोधकत्वं सिध्येत् । एवं स्थितानामेव वर्णानां बोधकत्वे सिद्धे सङ्केतं विना बोधकस्यानुपपत्तिर्वारिता स्यात् । उभयथा बोधकत्वस्य सम्भवे शब्दार्थसम्बन्धः कृतको वा वाच्यः सहजो वा । आद्ये कर्तुर्विस्मरणं परिहार्यम् । द्वितीयेन किञ्चित् । तस्माल्लाघवाद्द्वितीयः पक्षो ज्यायान्।

अन्यतश्च हेतोर्द्वितीयः पक्षो ज्यायान् । यदि शब्दार्थसम्बन्धः कृतकः तर्हि कर्तुः प्राक् पुरुषपरम्परायां संव्यवहार एव न स्यात् ।

अत्र चिन्त्यते । किं शब्दार्थयोः परस्परसम्बन्धः सहजः ? उताहो शब्दस्यार्थेन । नाद्यः । अर्थे तन्नामात्मकशब्दस्याश्रवणात् । शब्दं विनापि प्रत्यक्षानुमानाभ्यां अर्थप्रतीतेश्च । न द्वितीयः । शब्दश्रवणेन सर्वेषामर्थप्रतीत्यदर्शनात् । यः शब्दो ज्ञातसङ्केतायार्थं बोधयति । स एवाज्ञातसङ्केतायार्थं न बोधयति । एवमन्वयव्यतिरेकाभ्यां सङ्केतग्रहणादेवार्थबोध इति सिध्यति । ननु यः शब्दश्रवणेनार्थं न प्रतिपद्यते तमज्ञातसम्बन्धं ब्रूमः । नैषा युक्तिः । यः सहजः स कथं न ज्ञायेत । अतीन्द्रियत्वादिति चेत् । कस्यचिदपि नार्थप्रत्ययः । अतीन्द्रियसम्बन्धस्य दुर्विज्ञेयत्वात् । उपदेशाद्विज्ञायत इति चेत् । यो विज्ञायते स सङ्केतः । न युष्माकमतीन्द्रियः सम्बन्धः ।

सहजसम्बन्धवादिभिरप्यङ्गीकर्तव्यम् । शब्दार्थयोः कृतकश्च सम्बन्धोऽस्तीति । मनुष्यव्यक्तिभिः सह शब्दसम्बन्धस्य कृतकत्वं हि प्रत्यक्षम् । यथा युधिष्ठिरादिभिर्नामभिः पाण्डवाग्रजादयो व्यक्तयः प्रतीयन्ते तथा घटादिभिः शब्दैः कुम्भादयः । सम्बन्धग्रहणेन कश्चिद्विशेषो दृश्यते । येन केषाञ्चित् साङ्केतिकः केषाञ्चित्सहजः सम्बन्ध इति विभज्य ज्ञातुं शक्नुमः । न कर्तुर्विस्मरणं सम्बन्धसहजत्वस्य स्वरूपम् । न वाऽर्थप्रत्ययोपकारि ।

यदुच्यते वर्णेनान्तिमेनार्थबोध इति तच्छपथमात्रम् । त्वयोच्यमानं पूर्वजनितसंस्कारसहितत्वं च पुरुषस्योच्चारणकाले वा ? उताहो प्रागेव वा । आद्ये संस्कारस्य पुरुषप्रयत्ननिष्पाद्यत्वात्संस्कारं विना वर्णस्य

बोधकत्वासम्भवाच्च पुरुषायत्तं स्याच्छब्दार्थसम्बन्धकरणम् । द्वितीये तादृशसंस्कारसहितैकवर्णाभिव्यञ्जनेनैव कार्यसिद्धिः । अनुभवे त्वभिव्यक्तेषु न कश्चित्पुरुषयत्ननिरपेक्षः संस्कारविशेषो दृश्यते वर्णेषु । यो दृश्यते विशेषः स चोच्चारकशक्तिस्वभावविशेषमूलकः । अन्तिमं वर्णं श्रुत्वा पदस्यार्थं प्रतिपद्यते । तस्मादन्तिमो वर्णो बोधक इति यदुच्यते साऽपि युक्तिरसारा । श्रवणमन्यत् अर्थप्रतिपत्तिरन्या । उभे अपि ज्ञाने। एकं श्रावणम् । अन्यदान्तरङ्गम् । तयोर्व्यवधानस्य सूक्ष्मत्वेऽपि पौर्वापर्यमस्तीत्यङ्गीकर्तव्यम् । तस्मादर्थप्रतीतिकाले नास्ति चरमोऽपि वर्णः । सङ्केतग्रहणकाल एव योऽभूत् पुरुषस्यान्तःकरणे संस्कारः अस्य पदस्यायमर्थ इति । स एव तत्पदश्रवणेनेद्बुद्धोऽर्थं बोधयतीति तत्त्वम् । स च संस्कारोद्बोधो न केवलं शब्दश्रवणेन अपितु शब्दस्मारकलिपिदर्शनेनापि भवेत् । मननोद्बुद्धः स एव संस्कारो वक्तुर्वचनरचने कवेश्च काव्यरचने हेतुः । संस्कारश्चासौ सूक्ष्मध्वनि-रूप एव प्रादुर्भवति । तामेतां पश्यन्तीं वाचमाहुस्तान्त्रिकाः । द्योतितार्था सूक्ष्मा वाणी पश्यन्तीत्युक्तं भवति । एवं च स्थितानामेवाकाशे वर्णानामर्थबोधकत्वमित्येतत्प्रत्युक्तं भवति । पुरुषसङ्केतनिरपेक्षं वर्णानां बोधकत्वप्रत्याख्याने नैव शब्दार्थसम्बन्धस्य नित्यत्वं प्रत्युक्तं स्यात् । अथापि प्रतिपाद्यशुद्धये भूयश्च परीक्षामहे ।

अयि ! आकृतिः पदार्थ इति तव सिद्धान्तः । सा किं जातिः । उताहो जातिलिङ्गम् । उभयथा हि दृश्यन्ते शास्त्रेषु प्रयोगाः । येषामाकृतिर्जाति-लिङ्गं तेषामाकृतेरन्याजातिः । यदाहाचार्यो गौतमः - "आकृति-र्जातिलिङ्गाख्या । समानप्रसवात्मिका जातिः" । इति न्यायसूत्रम् (२-१-७०,७१) । केषाञ्चिदाकृतिर्जातिरित्यनर्थान्तरम् । यथोक्तं पातञ्जले महाभाष्ये - "यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं

स शब्दः । नेत्याह । आकृतिर्नाम सा ।" अत्राकृतिशब्देन जाति-रुच्यते । जातेरेव च्छिन्नेष्वच्छिन्नत्वात् ।

जातिरेवाकृतिरस्तु । एवं चेदिदं पृच्छामः । जातयः किं स्वतन्त्राः सन्ति जगति ? उताहो व्यवहारसौकर्याय पुरुषबुद्धिकल्पिताः ? यदि स्वतन्त्राः त र्हि द्रव्यादिभ्यः पृथगनुभूयेरन् । न चानुभूयन्ते । यत्र देवदत्तो मनुष्य उच्यते न तत्र देवदत्तात्पृथङ्मनुष्योऽनुभूयते । देवदत्तस्य मनुष्यत्वेनानुभूतिरेव सामान्यानुभूतिरिति चेत् । न केवलमियं सामान्यानुभूतिः विशेषानुभूतिश्च भवति । व्यक्त्यपेक्षया मनुष्यत्वं भवतु सामान्यम् । तथापि प्राणित्वापेक्षया भवति विशेषः । एवमेव पदार्थः सामान्यं भवति विशेषश्च । अनयोः परस्परविरुद्धयोरनुभवयोः कथमेकत्र समन्वयः ? केनाप्याकृतिविशेषेण सन्तं देवदत्तं विलोक्य तमितरप्राणिभ्यो विभज्य द्विपात्स्वन्तर्भाव्यपुरुष आह मनुष्य इति । तदेतद्विभजनमन्तर्भावनं च पुरुषबुद्धेः स्वभावः । यानि लिङ्गानि स्युः कञ्चन पदार्थमितरेभ्यो विभज्य वक्तुम्; अन्येषु पदार्थेषु चान्तर्भाव्य वक्तुम्; तानि द्रव्यगुणकर्मभ्यो नातिरिच्यन्ते । तानि लिङ्गानि भेदकत्वे विलक्षणान् धर्मानाहुः । सङ्ग्राहकत्वे समानान् धर्मान् । तस्मान्न लिङ्गं विशेषः सामान्यं वा । पुरुषस्य ग्राहकस्य व्यावृत्त-बुद्धिर्विशेषः । अनुवृत्तबुद्धिः सामान्यम् । अथवा वैधर्म्यमूलक-भेदबुद्धिर्विशेषः । साधर्म्यमूलका भेदबुद्धिः सामान्यम् । अत एव द्रव्यगुणकर्माण्येव सतः पदार्थनाहुः । सत्ता चात्र पुरुषबुद्धिनिरपेक्षा स्थितिः । सामान्यविशेषौ पुरुषबुद्धितन्त्रौ पदार्थौ भवतः । न स्वतन्त्रतया स्तः । अत एवोक्तमाचार्येण कणादेन - "सामान्यं विशेष इति बुद्ध्यपेक्षम् ।" इति वैशेषिकसूत्रम् (१.२.३) । किं फलितम् । मीमांसकाभिप्रेतः शब्दार्थः पुरुषबुद्धिरूप इत्युक्तं भवति । यदि

शब्दार्थसम्बन्धः पुरुषसङ्केतनिरपेक्षः तर्हि पदानामाकृतिरर्थो न स्यात् । आकृतिर्हि व्यवहारसौकर्यायपुरुषबुद्धिकल्पितः पदार्थः । बुद्धिकल्पितत्वं नाम बुद्धिलक्षणत्वं ततोऽव्यतिरेकात् । नन्वेवं चेदनित्या प्रसज्येत सत्ता । न । तस्याश्च सर्वानुगतमूलबुद्धेरव्यतिरेकात् । एवं चेदस्माकं आकृतयः कुतो न नित्याः स्युः । विषयाधीनबुद्धित्वादिति ब्रूमः । अत एव ता अपरसत्ता इत्युच्यन्ते । यद्यपि वस्तुतः शुद्धचिद्रूपा सत्तैका तथाप्युपाधिवशाद्बहुधा प्रतिभाति ।

ननु द्रव्यगुणकर्मणां नियतं किमपि रूपमाकृतिः । तदनुसृत्यैव पुरुषस्य बुद्धिरनुवृत्ता व्यावृत्ता वा भवति । सेयमाकृतिः स्वतन्त्रा । न पुरुषबुद्धितन्त्रेति चेत् । आकृतेर्द्रव्यगुणकर्मभ्योऽर्थान्तरत्वं न सिध्येत् । तन्नियतरूपस्य ततोऽव्यतिरेकात् । अस्तु का हानिरिति चेत् । सिध्यन्ति गोमनुष्यादिशब्दानामाकृतयोऽर्थाः । न ब्राह्मण-क्षत्रियादिशब्दानाम् । नास्ति हि किमपि नियतं रूपं ब्राह्मणत्वादि-प्रवृत्तिनिमित्तं मनुष्ये । यदस्ति वंशविशेषजत्वं जातिलिङ्गं न तत्तस्य नियतं रूपम् ।

अन्यतश्च हेतोः शब्दार्थसम्बन्धः साङ्केतिकः । यदि सहजः लोके मूलभाषाबाहुल्यं न स्यात् । भाषातो भाषान्तरोत्पत्तिश्च न भवेत् । सहजार्थसम्बन्धत्वेन कीर्तितानां संस्कृतशब्दानां लोकव्यवहारे प्रचालित्वाभावश्च न भवेत् ।

यदुच्यते संस्कृतभाषाशब्दानामर्थसम्बन्धस्य साङ्केतिकत्वे तस्मात्सङ्केतकृतः प्राक् संव्यवहारानुपपत्तिरिति । तदनेन व्याख्यातम् । सम्प्रत्यपि हि न तैर्लोके संव्यवहारः । अस्तु प्रागपि ।

या काचित्सहजार्थसम्बन्धा भाषाङ्गीकर्तव्या पुरा संव्यवहाराय सैव संस्कृतभाषाऽस्त्विति चेत् । पुरुषाणां शब्दस्य निसर्गेण प्रायो वर्णात्मकत्वात्तेषां विशेषैरेव प्रथमं भाषोदयः । पश्चात्पण्डितैस्तस्या एव लक्षणैर्नूतनपदसंयोजनेन संस्करणेन नियमबन्धनेन च स्वरूपं किमपि वितन्यते । तस्मान्नाङ्गीकार्या सहजार्थसम्बन्धाया काचिद्भाषा एवं सामान्यतः शब्दस्य पौरुषेयत्वसिद्धेर्वेदानां पौरुषेयत्वं बलादनिच्छताऽप्यङ्गीकर्तव्यं स्यात् ।

यदुच्यते कर्त्रनुपलब्धेर्वेदा अपौरुषेया इति । तत्र हेतुश्चिन्त्यः । प्रकृतस्य ऋग्वेदस्य शाकलकाम्नायाख्या प्रवचनाद्वा भवतु । पृथक् पृथगुपलभ्य-मानानां मन्त्रभागानामेकसंहितारूपनिबन्धनाद्वा भवतु । तत्र नास्माकमाग्रहः । प्राचीनऋषिच्छन्दोदेवतानुक्रमणिकादिद्वारोपलब्धा ऋषयो मधुच्छन्दःप्रभृतयस्तु न शाकलवत्परिहर्तुं शक्याः ।

असमाप्तम्

# ऋग्वेदविमर्शिनी

## उपोद्घातः

*अस्य लेखस्य प्रारम्भिकोंऽशः नोपलभ्यते ।*

...अभ्यर्हितानामल्पाच्तरपूर्वनिपातस्यापि प्रकृते वक्तुं शक्यत्वादयम् अहेतुः । सिद्धान्तमाह । तान् प्रत्येतदुच्यत इति । पूर्वपक्षमूल-हेतोरेवासिद्धत्वान्न किञ्चिदपि वक्तव्यम् । अर्थज्ञानस्य तु यज्ञानुष्ठानार्थ-त्वादिति । स्याद्ब्राह्मणानाम् । न मन्त्रसंहितानामपि । ब्राह्मणेष्वपि नोपनिषदाम् । उपनिषदामर्थज्ञानं न यज्ञानुष्ठानार्थमित्याचार्यो-ऽप्यङ्गीकरोतीति मन्ये । तस्मान्मन्त्राणामर्थज्ञानं यज्ञानुष्ठानार्थमित्यंश एवात्र विमृश्यते । किं विनियोगतो यज्ञानुष्ठानार्थं मन्त्रार्थज्ञानम् । उताहो तात्पर्यतश्च । यदि विनियोगतः स्यात् तर्हि ब्रह्मयज्ञार्थमपि भवेत् । जपार्थमपि भवेत् । पारायणार्थमपि भवेत् । एतेष्वपि हि विनियुज्यन्ते मन्त्राः । इष्टापत्तौ अर्थज्ञाने यजुर्वेदस्य प्राधान्यं त्वया साधयितुमशक्यम् । जपपारायणब्रह्मयज्ञेषु ऋग्वेदप्राधान्यस्य त्वयैवाङ्गीकृतत्वात् । शंसनादाविव जपादावप्यर्थज्ञानावश्यकत्वं न केनापि वारयितुं शक्यते । ननु बहवोऽविज्ञातार्था अपि जपपारायण-ब्रह्मयज्ञान् कुर्वाणा दृश्यन्त इति चेच्छंसनादिकुर्वन्तश्च दृश्यन्ते तथा । वेदानामक्षरमात्रग्रहणतृप्तिदुरभ्यासस्यैवेदं फलम् । तात्पर्यतो यज्ञानुष्ठानार्थ एव मन्त्रा इति वक्तुमशक्यम् । गभीरार्थानां मन्त्रलिङ्गानां नानामुखत्वात् । वस्तुतस्तु प्रमाणभूतान्यार्षदर्शनान्यलौकिकार्थ-

बोधनायैव प्रवृत्तानि । क्वचित्तत्त्वावगतये क्वचिद्योगसाधनाय क्वचित्कर्मभ्यश्च योऽर्थ उपयुक्तो भवति । आर्षमन्त्रदर्शनानां यथा प्रमाणत्वं तथा पवित्रत्वमप्यस्तीति याज्ञिवैर्यज्ञेषु, जापकप्रभृतिभिर्जपादिषु च, विनियुक्तत्वमुपपद्यते । न तावता तेषां सर्वतोमुखं प्रमाणत्वं विस्मर्तव्यम् तादृशं सर्वतोमुखप्रमाणग्रन्थं को नाम तात्पर्यतो यज्ञानुष्ठानोपयोगित्वेन सङ्कुचितं कर्तुं शक्नुयात् । एकस्मिन्कर्मणि विनियुक्तस्य मन्त्रस्यान्यार्थत्वं न युक्तमिति वक्तुमशक्यम् । त्वन्मतेऽप्येकस्यैव मन्त्रस्य बहुषु कर्मसु विनियोगदर्शनात् । यथा अग्निमीळे पुरोहितमिति मन्त्रो ब्रह्मयज्ञे, जपे, उपाकर्माङ्गमण्डलादिहोमे च विनियुक्तो भवति । प्रातरनुवाक आग्नेये क्रतौ च विनियुक्तः सूक्तान्तर्गतत्वात् । अपि चार्थज्ञानस्य यज्ञानुष्ठानोपयोगित्वमन्यत् । विनियोगोऽन्यः । तत्रार्थज्ञानस्य न सम्बन्धः । शब्दत एव हि विनियोगो भवति । यज्ञानुष्ठाने विशिष्टफलाधायकत्वं यज्ञानुष्ठानोपयोगित्वम् । तत्रैवार्थज्ञानस्य सम्बन्धः । अर्थज्ञानसहितस्योच्चारणस्य विशिष्टफलाधायकत्वात् । न केवलमर्थज्ञानं मन्त्राणां यज्ञेषु विशिष्टफलाधायकत्वाय । अपि तु जपादिष्वपि । यज्ञजपादिकं विनापि प्रमाणान्तरागोचरविषयपरिज्ञानाय च भवति । तस्मादेकदेशतो यज्ञानुष्ठानोपयोगित्वमवलम्ब्यार्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वादित्युक्तिः शपथमात्रम् । तत्प्राधान्यं काचिदृगेवाहेति। ऋगाह ऋत्विजां कर्माणि । न वेदानां तरतमभावम् । तस्मादिदं चिन्त्यम् । यज्ञस्य मात्रास्वरूपं विमिमीत इति । अङ्गिनो होमस्य तत्कर्मत्वादित्यर्थः। यजुर्यजतेरिति । योगरूढिरेवेयम् । याज्यादिष्वपि यजति योगात् । अन्यथा होतर्यजेति प्रेरणं न सङ्गच्छेत । तस्मान्नेदं निर्वचनमसाधारणत्वेन यजुषां यागनिष्पादकत्वं साधयितुं शक्नुयात् । अध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्येति । इदं

चिन्त्यम् । अध्वर्युर्विनिष्पादयतु नाम यज्ञस्य मात्राम् । न तावता यजुर्वेद एव यज्ञस्य मात्रां विनिष्पादयतीत्यर्थो वक्तुं शक्यः । अध्वर्युकृतानामपि यज्ञेऽङ्गिस्थानीयानां मुख्यानां होमानां होतृप्रयोज्य-याज्यामूलकत्वात्प्रत्युत ऋग्वेद एव यज्ञस्य मात्रां विनिष्पादयतीति वक्तुमुचितम् । ऋत्विक्प्राधान्यानुसारि तद्वेदप्राधान्यमित्यापातत एव रमणीयः सिद्धान्तः। पूर्वपक्षोदाहृतानां द्वितीयतृतीयचतुर्थ-हेतूनामपरिहृतत्वाद्यजुर्वेदप्राधान्यवादस्य दौर्बल्यं सुतरां स्पष्टम् । प्रथमस्य यज्ञसम्बद्धत्वाद्द्वितीयस्य प्रामाण्यसम्बद्धत्वाच्च तयोरर्थ-प्राधान्यसूचकत्वं नेति वक्तुमशक्यम् । तृतीये च न केवलमुच्चारणाय सर्वैरितरैर्वेदैरादिवेद आद्रियते । विशिष्टार्थप्रतिपादकत्वादेव तादृश आदरः । वस्तुतस्तु वेदानां प्रमाणत्वं पवित्रत्वं च तुल्यमेव भवति । तस्मान्न तेषु तरतमभावः कल्पनीयः । ऋग्वेदो बहुविषयावबोधक इतरे तदपेक्षयाल्पविषयावबोधका इति विशेषः । न तावता तारतम्यकल्पनं युक्तम् । प्रमाणत्वपावनत्वयोर्वेदत्वप्रयोजकयोः सर्वत्राविशेषात् । बहुभङ्गीनी ब्राह्मणानि भवन्ति । एकत्र श्लाघयन्ति ऋचम् । यद्वै यज्ञस्य यजुषा साम्ना क्रियते शिथिलं तद्यदृचा तद्दृढमित्याद्युदाहरणम् । अन्यत्र श्लाघयन्ति यजुः । तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष इत्याद्युदाहरणम् । इतरत्र श्लाघयन्ति सामानि । ऋचां सामरस इत्याद्युदाहरणम् । भाक्तास्ताः सर्वा उक्तयः वेदसद्भावं साधयितुं पूर्वपक्षमारचयति । ननु वेद एव तावन्नास्तीति । अनावश्यकोऽयं पूर्वः पक्षः । उपलभ्यमानं ग्रन्थं मूढोऽपि नास्तीति ब्रूयात् । यश्च वेदं नाङ्गीकरोति स वेदो नास्तीति न ब्रूयात् । अपि तु वेदः काव्यादिवत्कृतकः । तस्मात्प्रामाण्ये प्रमाणान्तरसापेक्ष इत्येव ब्रूयात् । न हि तत्र लक्षणं प्रमाणं चास्तीति । अस्त्येव प्रमाणं श्रावणप्रत्यक्षम् । वस्तुसत्ता तु प्रमाणमेवापेक्षते न पण्डितकृतं

लक्षणमपि । प्रमाणसिद्धस्यैव वस्तुनः सामान्यविशेषाभ्यामवगमनाय पण्डितैर्लक्षणानि क्रियन्ते । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरितीति । किमत्र लक्षणं पण्डितकृतम् । उताहो लोकप्रसिद्धं किमपि भेदकम् । आद्ये पण्डिता एवेयं पृथिवी मा आप इति जानीयुः । न पामराः। द्वितीये काञ्चनादेः काञ्चनादित्वेनैव सिद्धिर्न वह्न्यादित्वेन तस्माद्वस्तुसिद्धये प्रमाणमेवालम् । लक्षणं तु पण्डितकृतं वस्तुविवेकायेत्यनवद्यः पन्थाः । अस्तीति निश्चयः सिद्धिः । सतः सामान्यविशेषाभ्यां ज्ञानं विवेकः । गृहीतस्य पदार्थस्य क्वचित्सामान्यमेव लोकप्रसिद्धिद्वारा गृह्येत न विशेषः । यथा वनस्पतीनामविज्ञातानां प्रत्यक्षे । क्वचिद्विशेष एव गृह्येत सामान्यं यथा काञ्चनस्य ग्रहणे । तत्रापि न यावत्सामान्यग्रहणं न च यावद्विशेषग्रहणम् । एवमगृहीतयावत्सामान्यविशेषस्यापि वस्तुनः प्रत्यक्षस्य सिद्धिः केन वार्येत । प्रत्यक्षानुमानोपमानागमेष्विति । आगमाख्यं प्रमाणं वेद इत्यर्थः । "आगमाख्यः प्रमाणभूतः कश्चिच्छब्दराशिर्वेद इति वेदस्य लक्षणम् अस्ति । तस्माद्वेदोऽस्ति" इति तात्पर्यं पूर्वपक्षानुसारेण यदि पश्यामः । न मन्वादिस्मृतिष्वतिव्याप्तेरिति । नेति पूर्वपक्षिणा किं लक्षणमेवाक्षिप्यते । उताहो तद्द्वारा वेदसद्भावश्च यदि लक्षणमात्रम् आक्षिप्यते वेदसद्भावमङ्गीकृत्य । तर्हि सिद्धान्तीचरितार्थः । वेद एव तावन्नास्तीति पूर्वपक्षस्य पतितत्वात् यदि तद्द्वारा वेदसद्भावश्चाक्षिप्यत इत्युच्येत । तर्हि अतिव्याप्तिदोषदानं न सङ्गच्छते यावल्लक्ष्यव्याप्तिपुरःसरं लक्ष्यान्तरव्यापनं ह्यतिव्याप्तिः । लक्ष्यसद्भावानङ्गीकारे नैतत् सिध्येत् । वस्तुतस्तु नातिव्याप्तिः । स्मृतीनां स्वयमप्रमाणत्वात् । प्रत्यक्षवेदविरोधहेतुदर्शनदोषरहिताः स्मृतयो वेदं खिलमनुमापयन्ति । स चानुमितो वेदः प्रमाणं भवतीति हि दार्शनिकानां सिद्धान्तः । समयबलेनेति । अनुमापितवेदद्वारैव

स्मृतीनां सम्यक्परोक्षानुभवसाधानत्वमिति न तत्र लक्षणसङ्गतिः । अपौरुषेयत्वे सतीति विशेषणादिति । शबरस्वामिप्रभृतीनां मतेनेयमुक्तिः । न वेदस्यापि परमेश्वरनिर्मितत्वेनेति । पूर्वपक्षी वेद एव तावन्नास्तीति स्वपक्षमुत्सृज्य सन् वेदो नापौरुषेयः परन्तु परमेश्वरनिर्मित इति पक्षाय शङ्करादिमतमनुसृत्यायात इति चित्रम् । अभ्युपगम्यवादे वा लक्षणमेवाक्षिप्येत कथं वेदस्य सद्भावः । प्रागुक्तातिव्याप्तिरेव ह्यनुगता भवति । शरीरधारिजीवपुरुष-निर्मितत्वाभावादिति । अपौरुषेयपदे पुरुषशब्दस्य शरीरधारी जीव एवार्थ इत्यर्थः । न सहस्रशीर्षापुरुष इत्यादिश्रुतिभि- रिति । इदं चिन्त्यम् । स्यान्नाम विश्वशरीरः परमेश्वरः । तथापि न जीवकोटिस्थः। तस्मात्पूर्वपक्षिणोद्दिष्टानातिव्याप्तिः । रूढेरनुसारेण जीवशब्दो न परमात्मपरः । तस्मादाक्षेपाणामवकाशाय जीवशब्दस्त्यक्तव्यः शङ्कावाक्ये । कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणेति । परमेश्वरशरीरं हि विश्वमयमन्यद्वा मायाकल्पितं न कर्मफलरूपम् । न जीवविशेषैरिति । इदं चिन्त्यम् । नाग्निवायुसूर्या जीवविशेषाः । अपितु परमेश्वरस्यैव कार्यभेदाद्भिन्नमायाकल्पितोपाधिमत्यो विभूतयः । यथोत्तरत्र निरूपयिष्यामः । ईश्वरस्याग्न्यादिप्रेरकत्वेनेति । इदं वाक्यं प्रक्षिप्तं स्यात् । अन्यथा पूर्वपक्षिणः पुनः शङ्काया अनवकाशः । अपरिहार्यस्य समाधानस्य मिलितत्वात् । यद्याक्षेप्तुं शक्यमेवेदमपि समाधानं तदनाक्षिप्य कथमुत्तरत्र चलनं सङ्गच्छेत । मन्त्रब्राह्मणात्मकः शब्दराशिरिति । ग्रन्थान्तराणि तु मन्त्रब्राह्मण-भिन्नान्येव हि भवन्ति । तस्माल्लक्षणस्यास्य क्वचिदपि नाति-व्याप्तिरित्यर्थः । न ईदृशो मन्त्र ईदृशं ब्राह्मणमित्यनयोरिति । अत्र नेति पूर्वपक्षिणा किं लक्षणमेवाक्षिप्यते । उताहो मन्त्र-ब्राह्मणस्वरूपाविवेक एव प्रकाश्यते । नाद्यः दोषस्याप्रदर्शनात् ।

प्रदर्शितो हेतुश्चाज्ञानमूलकः मन्त्रब्राह्मणविभागस्य प्राचां ग्रन्थेषु स्पष्टत्वात् । प्रकृता ऋक्संहिता तु निःसंशयं सर्वमन्त्रमयी । तस्माद्द्वितीय एव भवति । तदिदं पूर्वपक्षिणस्तात्पर्यं भवति । नाहं जानामि मन्त्रब्राह्मणविभागम् । तस्मात्ते लक्षणं नाङ्गीकरोमि । यदि वदसि ईदृशो मन्त्रः ईदृशं ब्राह्मणमिति तर्हि तवेदं लक्षणमङ्गीकर्तुं शक्यं स्यादिति । अद्य सिद्धान्तिन आचार्यस्य भारो लघुः संवृत्तः । मन्त्रब्राह्मणविभाग एव तेन दर्शयितव्यः । तदा लक्षणवान्वेदः । स चास्तीति पूर्वपक्षीसन्तृप्येत् । अवसित एतावता लक्षणपूर्वपक्षकोला-हलः । नापि तत्सद्भावे प्रमाणं पश्याम इति । उक्तमस्ति श्रावणं प्रत्यक्षमिति । आत्माश्रयत्वप्रसङ्गादिति । नायमात्माश्रयः । न ऋग्वेदं भगवोऽध्येमीत्यादिवाक्यं वेदस्य सत्तां साधयति । श्रावणप्रत्यक्षसिद्धस्य कस्यचिच्छब्दराशेर्नामविभागमेव करोति । अभिज्ञानशाकुन्तलादि-नाम्नामभिज्ञानशाकुन्तलादिग्रन्थेभ्य एव यथावगतिरेवं वेदेऽपीति तुल्यो न्यायः। वेदवाक्यस्य वेदसत्तासाधनत्वमेव खण्ड्यत इति चेत् । इदमपि न सङ्गच्छते । साधयदिदं वाक्यं वेदवाक्यं न वा । आद्ये सिद्धा वेदसत्ता । द्वितीयेनात्माश्रयः । वस्तुतस्तूपलभ्यमानस्य ग्रन्थस्य सत्तां साधयितुं न शब्दप्रमाणापेक्षा । प्रत्यक्षादिकं शङ्कितुमप्ययोग्यमिति । इदं वचनं साहसमूलम् । श्रावणप्रत्यक्षस्य सत्त्वात् । चाक्षुषप्रत्यक्षस्य च लिपिद्वारा । वेदविषया तु लोकप्रसिद्धिरिति । किमशृण्वतो लोकस्यैषा प्रसिद्धिरिति भ्रान्तिः । किं शृण्वतोऽपि श्रवणं मिथ्या । उताहो वेदादन्यः एवायमग्निमीळे पुरोहितमित्यादिः श्रूयमाणः शब्दराशिरित्यतो भ्रान्तिः । नाद्यः । बहुभिः श्रूयमाणत्वाद्वेदस्य । न द्वितीयः । अबाधित-ज्ञानत्वात् । न तृतीयः । सर्वेषां नाम्नां व्यवहारमूलकत्वाद्व्यवहारस्य चाग्निमीळे पुरोहितमित्यादेः शब्दराशेर्वेदनामकत्वेऽनुकूल ।

असमाप्तमिदं भाष्यम्

## ऋग्वेदमन्त्रभाष्यम्

# प्रथमं मण्डलम्

### प्रथमसूक्तस्य भाष्यम् (१)

प्रथमोऽनुवाकः

प्रथमाष्टके प्रथमोऽध्यायः

भाष्यादौ मङ्गलाचरणश्लोकः

इन्द्रं विश्वस्य राजानं
ब्रह्माणं ब्रह्माभिर्नुतम् ।
आत्मानं सर्वभूतानां
वन्द्यं वन्दामहे वयम् ॥

सूक्तम् (१)

अग्निमिति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । अग्नि-र्देवता । गायत्री छन्दः ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ १॥

भाष्यम् - यज्ञस्य देवाराधनस्य । पुरोहितं पुरोहितवन्नेतारम् । होतारं

ऋत्विजम् देवानां यागे होतृनामकमृत्विजं देवाह्वानकर्मबिभ्राणम् इत्यर्थः । रत्नधातमम् अतिशयेन रत्नानां पोषयितारम् । अग्निं देवम् अग्निनामकं देवतात्मानम् । ईळे स्तौमि (अहमिति शेषः) ।

मन्त्रस्य होत्रा प्रयोज्यत्वादत्राहंपदार्थः कर्ता होतेति सायणः । न केवलं होत्रा प्रयोज्योऽयं मन्त्रः । अध्येत्रा च ब्रह्मयज्ञे प्रयोज्यो भवति । मन्त्रस्य ऋषेर्वाक्यत्वादृषिः कर्तेति तु युक्तम् । सिद्धं मन्त्रं प्रयुञ्जानो भावयतां नामात्मानं स्तुतेः कर्तारम् । सोऽन्यो विषयः ।

पृथिवीशरीर आत्माऽग्निर्नामदेवतात्मा भवति । अग्निं पृथिवीस्थानं देवं कथयतां प्राचामुक्तिर्भौतिकाग्निप्रदर्शनमात्रेण न तृप्ता स्यात् । तृप्ता चेदग्निरचेतना देवता प्रसज्येत । ननु पृथिवीलोकवासी कश्चन पुरुष-विधोऽग्निर्देवो भवतु । सिध्यत्येवम् । तथाप्यन्यो दोषः स्यात् । पृथिव्यचेतना प्रसज्येत । न चेष्टापत्तिः । नानाविधसचेतन-मातुरचेतनत्वाभ्युपगमस्यान्याय्यत्वात् । वैदिकतदीयस्तवाना-मनर्थकत्वापत्तेश्च । भवतु सचेतनैव को दोष इति चेत् । तर्हि पृथिव्येव महती चेतनावती प्रधानदेवता प्रसज्येत । अग्निश्च तद्विभूतिः । लोकवास्यपेक्षया लोकस्योत्कृष्टत्वात् । तच्चानिष्टम् । प्राचीनैरग्नेः प्रधानदेवतात्वेनाभ्युपगमात् । तस्माद्यथोक्तमनवद्यम् । एतच्चोत्तरत्र सन्दर्भेषु भूयोऽपि निरूपयिष्यामः ।

पृथिव्या अन्तरात्मा अग्निरेव पार्थिवानां प्राणिनां सर्वेषामन्तरात्मा भवति । तं वैश्वानरमाहुर्विश्वेषां नराणामयमित्यर्थयोगात् । पश्यत च्छान्दोग्योपनिषदि वैश्वानरविद्याम् । वैश्वानरः कथ्यते तत्र सर्वेषा-मात्मा । अग्निरेवात्र शरीरिणां वागिन्द्रियं भवति । तमाहुर्जातवेदसं

जातानि वेदांसि ज्ञानान्यस्मादित्यर्थयोगात् । "अग्निर्वाग्भूत्वा मुखं प्राविशत् ।" (ऐतरेयोपनिषद्) इत्यादीनि शास्त्रवचनान्यत्र प्रमाणम् । पार्थिवो भौतिकाग्निर्देवस्याग्नेरन्या विभूतिः ।

भौतिकरूपेण हव्यानि गृह्णन् वागिन्द्रियरूपेण मन्त्रानुच्चारयन् जीवरूपेणात्मानमर्पयन् अग्निर्यज्ञं नयति । तदिदमग्नेर्यज्ञपुरोहित-त्वम् ।

कथमग्निर्देवानां यागे होता । अत्रैष विचारः । परमात्मनो दिव्यविभूतयो यत्पचन्ति विश्वम् । स देवयागः । तत्र महायागे सत्रयाग इव यजमाना एव ऋत्विजः । अग्निस्तत्र यजमानानामन्यतमः । ऋत्विजां मध्ये होता च भवति । देवानां यागे देवानां ह्वानं कथमुपपन्नमिति चेत् । यजनभूमिस्थदिव्यविभूतयो यजमानाः प्रदेशान्तरदिव्यविभूतयो यजनीया इति भेदेन ह्वानोपपत्तिः । इह पृथिव्येव देवयजनभूमिः । अत्रोत्तमाय पाकाय पृथिव्यन्तरात्मा भगवानग्निर्मध्यमोत्तमलोकस्थदिव्य-विभूतीराह्वयते । एतदग्नेर्देवतानां यागे होतृत्वम् ।

अयं च देवानां यागे न केवलं पृथिव्याम् । अस्माकं शरीरेषु च चलेत् यदि वयमवकाशं दद्मः । सात्मसमर्पणा निरहङ्कारा निःसङ्कल्पा महापाकाभिमुखी स्थितिरेवावकाशदानम् । अत्र जीवाग्निरेव यजमानो होता च भवेत् । तमिममाध्यात्मिकं देवयागमन्तर्यागमाहुः।

अथ नामनिर्वचनम् । अग्रणीपदस्याङ्गनीपदस्य वा विकृतं रूपमग्निरिति यास्को मन्यते । अग्रं नयति देवानामग्रं प्रणीयते यज्ञेषु वेत्यग्रणीः । अङ्गानि सन्नममानो नयति काष्ठादिकं प्रति अङ्गानि प्राणिनां नयति

चालयति जीवरूपेण वेत्यङ्गनीः । अक्नोपनपदस्य विकृतं रूपमग्निरिति स्थौलीष्ठीविर्नाम निरुक्तकारो मन्यते । न क्नोपयति स्नेहयतीत्यक्नोपनः रूक्षण इत्यर्थः । एति दहति नयति चेत्ययनदग्धनीः तत्रायनादकारं दग्धाद्गकारं च गृहीत्वा नीरित्यत्र दीर्घं ह्रस्वं कुर्मश्चेदग्निरिति रूपं सिध्यतीति शाकपूणिर्नाम निरुक्तकारो मन्यते । एत्यनक्ति नयती त्ययनाक्तनीः । तस्मादाद्यन्तपदयोरेकाक्षरग्रहणविकरणे प्राग्वत् । अक्तात् ककारस्य ग्रहणम् । तस्य च गकारादेशः । तेनाग्निरूपसिद्धिरिति शाकपूणेरेव मतान्तरम् । एतैः प्राचीननिर्वचनविशेषैरस्माकं द्वौ चारित्रिकौ विषयौ विदितौ भवतः । लोकव्यवहारमनुसृत्यास्ति गीर्वाण-भाषाया अपि परिणाम इत्येकः । प्राचामपि व्यवहारे लाघवायैककाक्षर-ग्रहणं नामभ्यः पूर्णनामार्थप्रत्ययायाभ्यासस्थमित्यपरः ॥ १ ॥

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवां एह वक्षति ॥ २ ॥**

भाष्यम् - पूर्वेभिः प्राचीनैः । ऋषिभिर्मन्त्रकृद्भिः । उत किं च । नूतनैः नवैः । ऋषिभिः । ईड्यः स्तुत्यः । सः प्रसिद्धः । अग्निः पार्थिवो देवः । देवान् अन्यान् देवतात्मनः । इह देवयजनभूमौ । आ वक्षति आवहतु आनयत्वित्यर्थः ।

बहिर्यागे देवानामानयनं तदीयमनःसन्निधापनम् । अन्तर्यागे तदीयदिव्यशक्तिसन्निधापनम् एवमुत्तरत्राप्यूह्यम् ॥ २ ॥

**अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ।**
**यशसं वीरवत्तमम् ॥ ३ ॥**

भाष्यम् - अग्निना करणभूतेन । दिवे दिवे प्रतिदिनम् पोषम् एव वर्धमानमेव । यशसं यशोयुक्तम् । वीरवत्तमम् अतिशयेन वीरपुत्राद्युपेतम् । रयिम् धनसम्पदम् । अश्नवत् प्राप्नुयात् । (यजमान इति शेषः) ॥ ३ ॥

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥ ४ ॥

भाष्यम् - अग्ने । (त्वम्) अध्वरं हिंसारहितम् । यम् । यज्ञम् । विश्वतः सर्वतः । परिभूः असि व्याप्तो भवसि । सः इत् स एव यज्ञः । देवेषु देवान् । गच्छति प्राप्नोति ।

प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालियगार्हपत्याग्नीध्रीयस्थानेष्वग्नेः सद्भाव एव विश्वतोव्याप्तिरिति सायणः । तस्मिन्पक्षे नित्ययज्ञानामसङ्ग्रहः । सोमयागेषु च न कस्यचित्परिहारः । भौतिकज्वालाभिः समर्प्यमाणस्य हविषः परया वाचोच्चार्यमाणानां मन्त्राणाम् आत्मनस्तेजसा समर्प्यमाणस्य मनसश्च परिभवनमग्नेर्यज्ञे विश्वतो व्याप्तिरिति वासिष्ठः ।

यज्ञस्य हिंसारहितत्वं च पशुहिंसारहिततत्वमेवेति ऋजुरर्थः । राक्षसादिकृतहिंसारहितत्वमिति सायणः । प्रकृते "नह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्तीति तदुक्ता यज्ञस्याध्वरोपपत्तिः । मन्त्रे स एवार्थश्चेदुद्दिष्ट अध्वरशब्दस्योद्देश्यविशेषणत्वं वाक्यसम्प्रदायविरुद्धम् । तस्मिन्नर्थे यं यज्ञमग्निर्विश्व तः पालयति सोऽध्वरो भवतीति वाक्यं स्यात् । तस्मात्पशुयागप्राशस्त्यरक्षणायैव तत्र भवानीदृशं पन्थानमवलम्बितवानिति वक्तव्यम् ॥ ४ ॥

**अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।**
**देवो देवेभिरागमत् ॥ ५॥**

भाष्यम् - होता । कविक्रतुः क्रान्तप्रज्ञः । स्वायत्तीकृतप्रज्ञ इत्यर्थः । सत्यः आत्मस्वरूपः । चित्रश्रवस्तमः अतिशयेनाद्भुतकीर्तिः । अग्निः । देवः । देवेभिः देवैः सह आ गमत् आगच्छतु ।

अग्नेर्देवानामानयनेन देवैः सहागमनं व्याख्यातम् । देवयजनभूमावग्ने सन्निधानं चात्र साक्षात्प्रार्थ्यत इति विशेषः ॥ ५॥

**यदङ्गदाशुषे त्वमग्ने भद्रं करिष्यसि ।**
**तवेत्तत्सत्यमङ्गिरः ॥ ६॥**

भाष्यम् - अङ्ग भोः । अग्ने । त्वम् । दाशुषे समर्पकाय । यत् । भद्रं मङ्गलम् । करिष्यसि । अङ्गिरः हे अङ्गानां रस वाग्रूप हे अङ्गिनां रस आत्मरूप वा हे अङ्गिरो नामक ऋषित्वेनावतीर्णदेवेति वा । तत् तन्मङ्गलम् । तव इत् तवैव । सत्यं अवितथम् । इदमिति शेषः ।

देवतात्मनाऽग्निना दत्तं कर्मफलं जीवात्माऽग्निर्भुनक्तीति देवजीवयो-रभेदमेवं मन्त्रो रमणीयया भङ्ग्या वदति ।

कर्म स्वयं नश्वरमप्यपूर्वमुत्पाद्य तद्द्वारा यजमानाय फलप्रदं भवतीत्येकः पक्षः । आराधनरूपत्वात्कर्मदेवतायाः प्रीतिं सम्पादयेत् । प्रीता च देवता यजमानाय फलप्रदा स्यात् । अलमपूर्वकल्पनेनेत्यन्यः पक्षः । इममुत्तरं पक्षं यदङ्गेति मन्त्रवर्णोऽनुगृह्णात्यत्राग्नेः फलप्रदत्वेनाभिधानात् ॥ ६॥

उपत्वाऽग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥ ७॥

राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥ ८ ॥

भाष्यम् - अग्ने । दिवे दिवे प्रतिदिनम् । दोषावस्तः नक्तं दिवम् । बहिर्यागपक्षे सायं प्रातरिति लाक्षणिकोऽर्थः । अन्तर्यागपक्षे वाच्य एव विशालोऽर्थः । धिया बुद्ध्या । नमः नमस्कारम् । बहिर्यागपक्षे त्वं महानुत्कृष्ट इति भावम् । अन्तर्यागपक्षे अन्वेषणमुद्रया मङ्ज्जनमुद्रया वा शिरस्तो हृदयायावनतिम् । भरन्तः बिभ्राणाः । वयम् । त्वा त्वाम् । उप समीपे । आ इमसि आगच्छामः । उपास्महे इत्यर्थः ॥ ७॥

कीदृशं त्वाम् । राजन्तं प्रकाशमानम् । अध्वराणां हिंसारहित-यज्ञानाम् । गोपां रक्षकम् । ऋतस्य सत्यस्यात्मस्वरूपस्य । दीदिविं प्रकाशकम् । स्वे स्वकीये । दमे बहिर्यागपक्षे गृहे । अन्तर्यागपक्षे शरीरे । वर्धमानम् अक्षीणम् ॥ ८॥

स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥ ९॥

भाष्यम् - अग्ने । सः । (त्वम्) नः अस्मभ्यम् । सूनवे पुत्राय । पितेव । सूपायनः शोभनोपायनः भव । नः अस्माकम् । स्वस्तये अमृतत्वाय । सचस्व समवेतो भव । अस्माभिः सहेति शेषः । उपायन-शब्दस्य देयवस्तुषु लोके रूढिः । सायणस्तु तस्यात्र प्राप्तिमात्रमर्थं मन्यते ॥ ९॥

ऋग्वेदमन्त्रभाष्यम्

# प्रथमं मण्डलम्

## प्रथमसूक्तस्य भाष्यम् (२)

अथातो वैश्वामित्रस्य मधुच्छन्दस आर्षं गायत्रमाग्नेयं सूक्तं व्याख्या-स्यामः । तत्र नवर्चो भवन्ति । तास्वियमाद्या भवति ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

भाष्यम् - पुरोहितमाहवनीयात्मना पूर्वस्यां दिशि हितमिति यास्कः । पुरोहितवत्कार्यसम्पादकमिति सायणः । देवानां पुरःसरत्वात् पुरोहितमिति परे । अग्नेर्वयं प्रथमस्यामृतानामित्यन्यत्र निगमश्च भवति । पूर्वयोर्मतयोर्यज्ञस्येति सम्बन्धः । उत्तरस्मिन्मते यज्ञस्येत्यस्य देवमित्यनेन सम्बन्धः । देवमभिमानिनं पुरुषविधम् । देवाः पितरो मनुष्या इति पुरुषविधा एव हि व्यवह्रियन्ते । एतेनाचेतनस्तुति-वैयर्थ्यशङ्का वारिता । तेजो देव एव सन् यज्ञस्य च देवो भवति प्रथमः । न पुनर्यज्ञस्यैव । अपितु वाच इत्यप्याह । ऋत्विजं होतारं वागात्मकत्वात्सर्वेषां च देवानां ह्वातारमृत्विजम् । होतॄणामृत्विजां लोके न देहसम्बन्धाद्धोतृत्वम् । अपितु वाग्द्वारैव । सा च वागग्निरूपेति सर्वत्राग्निरेव होता बोद्धव्य इत्युक्तं भवति । अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादीनि ब्राह्मणानि चात्रोदाहर्तव्यानि । अन्तर्यागे वा होतारं नामर्त्विजं वागात्मकत्वात् । दक्षिणा वाग्धातेति ब्राह्मणमत्र भवति । रत्नधातममतिशयेन रत्नानां श्रेष्ठवस्तूनामुपासकेभ्यो देयानां धारयि-

तारम् । अग्निम् । ईळे स्तौमि । होत्रा प्रयोज्यत्वान्मन्त्रस्य होताऽत्र कर्तेति सायणः । नैषा युक्तिः । न केवलं होत्रा प्रयोज्योऽयं मन्त्रः । अध्येत्रा च ब्रह्मयज्ञे प्रयुक्तो भवति । उपासकेनापि जपे प्रयुक्तो भवति । ऋषिरेव कर्तेति युक्तम् । तस्य हि मन्त्रो वाक्यं भवति । यस्य वाक्यं स ऋषिरिति कात्यायनः । कोऽयमग्निर्नाम । यदि केवलं यज्ञवाचोरभिमानी देवः । तदात्वे इद्धूयते हविरित्यादि न सङ्गच्छते । तस्मात्तेजश्च पार्थिवं स भवति । यज्ञवाचोरभिमानी च स भवति । ननु पार्थिवस्य ज्योतिषो हव्यवाहनत्वाद्यज्ञाभिमानित्वमुपपद्यताम् । वागभिमानित्वं कस्मात् सम्बन्धात् । तेजोमयी वागिति चेदितरयोश्च ज्योतिषोरिह भागः । तेजस्त्वविशेषात् । अविशेषात्तेज एवाग्निर्भवतु । वायोरग्निः। अग्नेराप इत्यादौ सामान्यतः तेजः परमेवाग्निपदं पश्याम इति चेदिदं सिध्यति । अन्यत्र तु दोषः । आग्नेयेषु सूर्येन्द्रयोश्च भागः स्यादिति चेत् । पार्थिवमेव ज्योतिर्भवतु प्रकृतोऽग्निः । वयं न वदामो वाक् सामान्यस्याग्निर्दैवतमिति । वाक् चतुष्प्रकारा दृश्यते । परा पश्यन्ती मध्यमा वैखरी चेति । तत्र परस्यास्तु दैवतं परमेवाविकृतं सत्पदवाच्यं तेजः । पश्यन्त्या आदित्यः । मध्यमाया माध्यमिकं तेजः । वैखर्या अयमेवाग्निः । उपपद्यते च वैखरीरूपस्य होतृत्वम् । अथ यज्ञस्य पार्थिवेन ज्योतिषा सम्बन्धः प्रत्यक्षः । पार्थिवस्य ज्योतिषो वाचश्च देवतया सह कीदृशः सम्बन्ध इति मीमांसा । स्वस्वामिभावसम्बन्धे तादात्म्यानुपपत्तिः । न चाङ्गाङ्गिभावसम्बन्धः स्थानभेदात् । नापि स्वरूपसम्बन्धः । भूतेन्द्रियदेवतात्मनां सुतरां भेदात् अस्तु स्वरूपसम्बन्ध एव । ननूक्तं भूतेन्द्रियदेवतात्मनां सुतरां भेदान्नेति । अविद्ययैव तात भेदो भासते । शारीरं तेज एव शब्दायमानं वाग् भवति । शरीरं च पृथिवीतो नातिरिच्यते । नन्वस्तु भूतेन्द्रिययोरेकं तत्त्वम् । देवतात्मा कथं पार्थिवोऽग्निः । उच्यते । यथा पृथिव्याः सारः

शरीरम् । तथा शरीरस्य सारो हृदयम् । अत्रेयमुपनिषद् भवति । "या वै सा पृथिवी । इयं वावसा यदिदमस्मिन्पुरुषे शरीरम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते । यद्वैतत्पुरुषे शरीरम् । इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्त" इति । हृदयाग्रेरस्मदन्तर्यामिनो देवतात्मा प्रथमो नान्यः । सोऽभिमानिनो विषयिणो विज्ञानात्मनः स्वरूपं भवतीति केचित् । अन्तर आत्मा भवतीत्यन्ये । उभयं च तात्पर्ये तुल्यम् । तमन्तर्यामिणं वेदान्ताः कथयन्ति । स एव वैश्वानरः । कथं तस्य देवतात्वमिति चेत् । परस्मादव्यतिरिक्तत्वात् । "न तं विदाथ य इमाजजानाऽन्यद्युष्माकमन्तरं बभूवे"त्यन्यत्र निगमश्चास्मिन्विषये भवति । कथं तस्य पुरुषविधत्वमिति चेत् स सूक्ष्मः पुरुषविध एव । "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ट" इति ह्याहुः । सर्वस्यापि प्रथमोपासकस्य स्वान्तर्यामित एवानुग्रह इत्युक्तं भवति । स चाभिमानिनं भेददृष्ट्युपरञ्जितमुपासकमन्य इवानुगृह्णाति । स एव ज्ञानिना स्वात्मत्वेनानुभूयते विज्ञानस्य हि स आत्मा । तन्मूलत्वात्तस्य । तत्रैवोपरतत्वाच्च । इममेवार्थं भगवानुद्दालकः पुत्रायोपदिदेश । "तत्त्वमसीति" तमेवं त्रिविभूतिं भगवन्तं प्रथममृषयस्त्रिभिर्नामभिरभिष्टुवन्ति । तान्येतानि भवन्ति । अग्निर्जातवेदा वैश्वानर इति । भूतमग्नीरूढेः । इन्द्रियं जातवेदाः । वाचा हि सर्वाणि ज्ञानानि जायन्ते । अन्तर्यामी वैश्वानरः । विश्वेषां हि नराणामेषो-ऽन्तरः । स्तुतिष्वभेदादेकैकमपि नाम सर्वगुणमुपपद्यते ।

अथेयं द्वितीया भवति ।

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवां एह वक्षति ॥ २॥**

भाष्यम् - पूर्वेभिः पुरातनैः । नूतनैरुत नवीनैश्च । ऋषिभिर्मन्त्र-द्रष्टृभिः । ईड्य ईडितुं शक्यः । सोऽग्निः । देवान् । इह कर्मणि । आवक्षत्यावहतु । देवानां आह्वानं होतृत्वेन व्याख्यातम् । ऋषिभिरित्यनेनैतदाह । नानृषिर्यथावद्भगवन्तं स्तोतुं शक्नुयादिति । नूतनैरुतेत्यनेनैतदाह । नर्षित्वं कालसापेक्षमिति ।

अथेयं तृतीया भवति ।

**अग्निना रयिमश्नवत् पोषमेव दवे दिवे ।**
**यशसं वीरवत्तमम् ॥ ३॥**

भाष्यम् - अग्निना सुहुतेन सूपासितेन वा साधनभूतेन । दिवे दिवे दिने दिने । पोषमेव वर्धमानमेव । यशसं यशोयुक्तं पात्रेषु विनियोज्यत्वात् । वीरवत्तममतिशयेन वीरपुरुषोपेतम् । अत्र वीराश्च वीरत्वगुणयुक्ताः पुरुषाः पुत्रपौत्रादयो विवक्षन्ते । भोगेन सूपयोगेन च ते धनेन सम्बध्यन्ते । इदं वीरत्वं यदविच्छिन्नाग्नित्वं । न च नास्ति तस्य पदस्य विक्रान्तत्वमर्थः । रयिं धनम् । अश्नवत् । प्राप्नोति । आरा-धक इति शेषः । किमग्न्याराधनस्य पुरुषनिर्व्यपेक्षमपूर्वजननद्वारा फलदातृत्वम् । आहोस्विदाराधनतुष्टात्फलमिति संशयः । तत्र प्रथमं पक्षं जैमिनीयाः श्रयन्ते । द्वितीयं बादरायणीयाः । उभयं च विधया

कयाचिदविप्रतिषिद्धं मन्यते वासिष्ठः । न कर्मणि कर्मणि फलं दातुं पुरुषो व्यापृतो भवति । अस्य कर्मण एतत्फलमिति काञ्चिन्नियतिम् एव कृतवानिति विद्मः । लौकिकान्यपि कर्माणि नियतफलानि दृश्यन्ते । एवमेव वैदिकान्यपि कर्माणि भवितुमर्हन्ति । नियति-कारकत्वात्पुरुषात्फलोपपत्तिः । साक्षात्कर्मतः । नियतिबलजन्या फलदातृत्वशक्तिरेव कर्मणि ध्वस्तेऽप्यध्वस्ता मीमांसकैरपूर्वसंज्ञया व्यवह्रियते । किं सूर्यमण्डलान्तर्वर्ती पुरुषः कर्मफलानां नियतिं कृतवान् । उताहो वैश्वानरः । पूर्व एव भवतु । ननूक्तं "स चाभिमानिनं भेददृष्ट्युपरञ्जितमुपासकमन्य इवानुगृह्णाति" इति । नायं विरोधः । नियतिवादश्चास्माकं प्रायोवादः । नास्माभिरुच्यते सर्वथाप्यनुग्राहक उत्तम इति । अपि तु विहितकर्मफलनियतिकारक एवेत्युक्तम् । उपासनातिशयादित एवानुग्रहः स्यात् । न तत्र नियत्यपेक्षा ।

अथेयं चतुर्थी भवति ।

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**
**स इद्देवेषु गच्छति ॥ ४॥**

भाष्यम् - हे अग्ने । यम् । अध्वरं हिंसारहितं यज्ञम् । विश्वतः सर्वतः परिभूर्व्याप्तः । असि । स इत्स एव यज्ञः । देवेषु । गच्छति । नान्य इत्यर्थात् सिध्यति । भूतात्मना वेदिं व्याप्तः । ऋत्विजो वागात्मना । वैश्वानरात्मना च यजमानस्य हृदयम् । इदं त्रयं च यो वेद तस्यैव यज्ञं प्रथमो विश्वतो व्याप्तो भवति । यो न वेद तस्य यज्ञं व्याप्नुवन्नप्यव्याप्त एव स्यात् । तस्याहुतयः सर्वा अपि पाचकाग्नये दत्तानीन्धनानीव न प्रयोजनाय भवेयुः । इदमेवाह स इद्देवेषु गच्छतीति । कथमध्वरो

यज्ञः । हिंसारहितत्वादेव । नित्येऽग्निहोत्रे न कामपि हिंसां पश्यामः । यज्ञश्च नित्यादग्निहोत्रान्नातिरिच्यते । ननु ज्योतिष्टोमादयश्च यज्ञा उच्यन्ते । तेऽप्यध्वरा इत्याह । तत्र ध्वरश्च वैधत्वान्न ध्वरः । तथापि यज्ञस्याध्वरसंज्ञा कथमुपपद्यत इति चेत् । यत्र ध्वरो ध्वरो नेत्यावृत्तिं कुर्मः । परस्त्वाह । ज्योतिष्टोमादयश्च भवन्तु यज्ञाः । भवन्तु चाध्वराः । वैधध्वरव्याख्यायां तु वयं भिद्यामहे । ये मांसभुजस्तानेव सध्वरविधिः साक्षात्स्पृशति । स च नियमाय । यदि मांसमश्नाति देवेभ्यः समर्प्य हुतशेषमश्नीयादिति । एतेन पितृभ्यो मांसार्पणविधिश्च व्याख्यातः । "देवान् पितॄन्त्समभ्यर्च्य खादन्मांसं न दोषभाक्" इति स्मृतिश्चैतमेवार्थं स्पष्टीकरोति । यः सर्वथा निवृत्तमांसस्तमयं विधिर्न स्पृशति । ऋतौ भार्यामुपेयादिति विधिर्न हि वानप्रस्थं बाधते । ननु हिंसानिवृत्तिमात्रफलश्चेज्ज्योतिष्टोमादिः कृतं यज्ञैर्निवृत्तमांसानाम् । न । न वयं हिंसानिवृत्तये ज्योतिष्टोमादिरिति । तत्र मांसाहुतिरेव हिंसानिवृत्तिफलकेति ब्रूमः । विना मांसाहुतिं करोतु यज्ञं निवृत्त-मांसः । यथा मांसार्पणं विना श्राद्धम् । नन्वेवं प्राचां कल्पोऽनादृतः स्यात् । न । अस्ति ह्युपायः । यथा प्राचां कल्प आदृतः स्यात् । यथा च यागः समांसो न स्यात् । स कः । पिष्टेन कल्पितः पशुः । अस्ति च केषाञ्चिच्छिष्टानामेष आचारः ।

अथेयं पञ्चमी भवति ।

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरागमत् ॥ ५॥

भाष्यम् - होता । कविक्रतुः क्रान्तप्रज्ञः । सत्यः कालत्रयेऽप्यबाध्यः ।

चित्रश्रवस्तमोऽतिशयेन चित्रकीर्तिः । अग्निर्देवः । देवेभिः देवैः सह । आगमत् आगच्छतु ।

अथेयं षष्ठी भवति ।

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।**
**तवेत्तत्सत्यमङ्गिरः ॥ ६॥**

भाष्यम् - अङ्ग भोः । अग्ने । दाशुषे हविर्दत्तवते भक्ताय । त्वं । यत् । भद्रं मङ्गलं । करिष्यसि । तन्मङ्गलं । हे अङ्गिरः । तवेत्तवैव । सत्यमवितथम् । तवानुग्रहात्सम्पन्नो भूत्वा यजमानो भूयस्तुभ्यमेव दद्यादिति यावत् । अनुग्रहप्राप्ता सम्पदपात्रेषु विनियुक्ता न स्यादिति मन्त्रहृदयम् । कथमङ्गिरा अग्निः । यदङ्गानां रसस्तदङ्गिरा अग्निरित्येके । यदयमग्निरङ्गिरानाम ऋषिरभूत्तदस्याङ्गिरस्त्वमिति परे । सर्वान्तरस्याङ्गिरस्त्वमिति । कोऽयं सङ्कोच इति चेत् । आदावङ्गिरसो विज्ञानात्मना स्वरूपत्वेनानुभूत इत्ययं वैश्वानरोऽङ्गिरा अभिहितः । अत्र "त्वमग्ने प्रथमो अङ्गिरा ऋषि"रित्यन्यत्र निगमश्च भवति ।

अथेमे सप्तम्यष्टम्यौ भवतः ।

उपत्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥ ७॥

राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥ ८॥

भाष्यम् - हे अग्ने । राजन्तं भासमानम् । अध्वराणां यज्ञानाम् । गोपां रक्षकम् । ऋतस्य सत्यस्य । दीदिविं प्रकाशकम् । स्वे स्वकीये । दमे गृहे । वर्धमानं हविः समिदाज्यादिभिरविच्छिन्नत्वेन पुष्टिं यान्तम् । त्वा त्वाम् । दोषावस्तः सायं प्रातः । वयम् । नमोऽन्नम् । भरन्तो धारयन्तः । धिया मन्त्रेण सूक्तेन वा । उपैमसि उपगच्छामः । एवमृषिः स्वकीयमाचारं वदति । ऋषीणामाचारश्चास्माकं प्रमाणम् । तस्मात्सायं प्रातरग्निरुपासितव्यस्तेन योऽस्यानुग्रहमिच्छतीत्युक्तं भवति।

अथेयं नवमी भवति ।

**स नः पितेव सूनवेऽग्नेसूपायनो भव ।**
**सचस्वा नः स्वस्तये ॥ ९॥**

भाष्यम् - हे अग्ने । सः । त्वम् । नोऽस्मभ्यं । सूनवे पुत्राय । पितेव । सूपायनः शोभनोपायनः । भव । शोभनान्युपायनानि देहीत्यर्थः । नः अस्माकम् । स्वस्तये । सचस्व समवेतो भव समवेतो भव ॥

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य गणपतेः कृतिः
अग्निमीळे सूक्तभाष्यं समाप्तम् ।

ऋग्वेदमन्त्रभाष्यम्

# प्रथमं मण्डलम्

## प्रथमचतुर्णां सूक्तानां भाष्यम्

माधुच्छन्दसे दर्शनेऽग्निमीळ इति नवर्चं प्रथमं सूक्तमाग्नेयम् । यथा

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

यज्ञस्य। पुरोहितमग्रे हितं नेतारमित्यर्थः। होतारमृत्विजं देवानां यागे । रत्नधातममतिशयेन श्रेष्ठवस्तूनां धारयितारं पालयितारं वा । अग्निमेतन्नामकं देवं देवतात्मानम् । ईळे स्तौम्यहम् । देवानां याग आध्यात्मिकः । नास्मादृशानामिव पुरुषविधानाम् । ब्राह्मणेषु दृष्टास्तत्कथाः कर्मस्तुत्यर्थवादत्वान्न स्वार्थे प्रमाणं भवन्ति । ध्रुवया स्मृत्या सम्पूर्णात्मसमर्पणेन च मनोमये महेन्द्राभिमुखे सोऽयं देवानां यागो भक्तस्यान्तः पाकाय प्रवर्तते । तत्र निजया शक्त्या दीप्यन् मूलाधारस्थोऽग्निर्देवानां ह्वाता भवति । अतो होतर्त्विगुच्यते । तमेवाग्निं वागिन्द्रियमाहुः । तदेकमग्नेराध्यात्मिकं स्वरूपम् । नास्याग्नेराह्वानं व्यर्थं भवति । सर्वे देवाः स्वस्वविभूतिभूतेषु प्राणेषु शक्त्युल्लासात्प्रादुर्भूय साधयन्त्यन्तर्यागम् । ईळे डकारस्य स्थाने ळकारः प्राचां भाषायाम् ॥ १॥

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवां एह वक्षति ॥ २॥**

पूर्वेभिः पुरातनैः । नूतनैरुत अधुनातनैरपि । ऋषिर्भिः ईड्यः स्तुत्यः । सोऽग्निः । इह यागदेशे । देवान् । आवक्षति आवहतु । वहतेर्लेटिरूपं वक्षतीति । सिब्बहुलमिति सिप्प्रत्ययः लेटोऽडाटावित्यडागमश्चाभिस ऐसादेशस्य च्छन्दसि वैकल्पिकत्वात् पूर्वेभिरिति ॥ २॥

**अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ।**
**यशसं वीरवत्तमम् ॥ ३॥**

अग्निना । दिवे दिवे प्रतिदिनम् । पोषमेव वर्धमानमेव । यशसं यशो-युक्तम् । वीरवत्तममतिशयेन वीरपुरुषोपेतम् । रयिं धनम् । अश्नवत् प्राप्नुयात् । यष्टा स्तोतोपासको वा । अग्निनेति करणे तृतीया । यशसम् इत्यच्प्रत्ययान्तं रूपम् । स च प्रत्ययो मतुबर्थे ॥ ३॥

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**
**स इद्देवेषु गच्छति ॥ ४॥**

अग्ने । यम् । अध्वरं हिंसारहितम् । यज्ञम् । विश्वतः सर्वतः हविरदन् ज्वलनरूपः मन्त्रान् वदन् वाग्रूपः अन्नसन्तर्पणेन तृप्तिं गच्छन् जाठररूपः महेन्द्रप्रवणत्वेन मूलस्वरूपं जानन् जीवरूपश्चेत्यर्थः । परिभूर्व्याप्तः । असि त्वम् । स इत्स एव यज्ञः । देवेषु । गच्छति । नान्य इत्यर्थः । यज्ञस्य सध्वरस्यापि सद्भावात्तन्निरसनायाध्वरविशेषणम् । सायणाचार्यस्तु सर्वोऽपि यज्ञः सध्वर इति मन्यमानोऽध्वरशब्दस्य

राक्षसकृतहिंसारहितमित्यर्थं वदति । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्तीति तस्य कारणोपन्यासः । यदि सर्वोऽपि यज्ञोऽग्निना सर्वतः पालितः स्यात्तर्हि स इद्देवेषु गच्छतीति वचनम् अनर्थकम् । न चेदस्माकमिव यज्ञविशेषवाचक एवाध्वरशब्दः प्रसज्येत । तदेतदनृजुना पथाऽर्थकथनं हिंसासहितानां यज्ञानां सर्वथा साधनायैव । अन्यच्चास्मिन्नर्थे विसंष्ठुलत्वम् । मन्त्रे यज्ञमध्वरं पूर्वमनूद्यानन्तरं तस्याग्निना विश्वतो व्याप्तत्वं पाक्षिकमुपन्यस्यते । पक्षान्तरे त्वध्वरो यज्ञोऽग्निना व्याप्तश्च न भवेत्सामग्रीलोपे। एवं स्थिते कथमध्वरत्वस्याग्नेर्विश्वतो व्याप्तेश्च कार्यकारणभावः । अपर आह । न ध्वरो ध्वरो यत्रेत्यध्वर इति । उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुख इत्यादाविव मध्यमपदलोपसमासः । इदमपि हिंसापक्षपात-विलसितम् । यत्र मध्यमपदे लुप्तेऽपि शेषपदार्थसामर्थ्यादेव पूर्णार्थस्फूर्तिस्तत्र मध्यमपदलोपो युक्तः। अत्र त्वन्यथैवार्थः स्फुरति । स च नानुपपन्नः । अनुपपन्न एव हिंसाश्रुतिविरोधादिति चेत् । तासां सध्वरेषु यज्ञेषु गतेर्नास्त्यनुपपत्तिः । इमं विषयमधिकृत्य दशममण्डलस्थे वासुक्रे दर्शने भूयो निपुणं विचारयिष्यामः । तदस्य विषयस्य युक्तं स्थलम् ॥ ४॥

**अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।**
**देवो देवेभिरागमत् ॥ ५॥**

होता । कविक्रतुः क्रान्तप्रज्ञः कविशब्दस्यात्र क्रान्तवचनत्वात् । क्रान्तकर्मा वा । क्रतुशब्दो हि प्रज्ञायां कर्मणि च पठ्यते निघण्टौ । क्रान्तप्रज्ञत्वं जीवरूपत्वात् । क्रान्तकर्मत्वं ज्वलनरूपत्वाद्वाग्रूप-त्वाच्च । सत्य आत्मरूपत्वात् । चित्रश्रवस्तमः । अतिशयेन चित्र-

कीर्तिः । अग्निर्देवः । देवेभिः सह । आगमत् आगच्छतु । मनसा सान्निध्यं ददद्देवान्यजतामित्यर्थः । अडागमस्य च्छन्दसि वैकल्पिकत्वाद्गमदिति लुङ्रूपम् । "छन्दसि लुङ् लङ् लिट्" इति लोडर्थेऽत्र लुङ् ॥ ५॥

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।**
**तवेत्तत्सत्यमङ्गिरः ॥ ६॥**

अङ्गाग्ने । त्वम् । दाशुषे आत्मानं समर्पयते । हविर्दत्तवत इत्यधियज्ञम् । यत् भद्रं मङ्गलम् । करिष्यसि । हे अङ्गिरः देहि रसभूत प्रत्यगात्मन् । सत्यं शाश्वतमिति यावत् । तद्भद्रम् । तवेत्तवैव । फलस्य भोक्तुरात्मा हि त्वम् ॥ ६॥

**उपत्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।**
**नमो भरन्त एमसि ॥ ७॥**

हे अग्ने । दिवे दिवे प्रतिदिनम् । दोषावस्तः रात्रावहनि च सायं प्रातरित्यर्थ औचित्यात् । वयम् । नमोऽन्नम् नमस्कारोपलक्षितां स्तुतिं वा । भरन्तः सम्पादयन्तः सन्तः । धिया बुद्ध्या स्थिरस्मरणपूर्वकमिति यावत् । त्वा त्वाम् । उप समीपे । एमसि आगच्छामः । सायं प्रातरग्न्युपासनस्येदं लिङ्गम् । इमसीत्यत्रेदन्तो मसीतीकारः ॥ ७॥

**राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।**
**वर्धामनं स्वे दमे ॥ ८॥**

राजन्तम् । अध्वराणां यज्ञविशेषाणाम् । गोपां रक्षकम् । ऋतस्य सत्यस्य । दीदिविं प्रकाशकम् । ज्ञानप्रदमिति यावत् । स्वे दमे गृहे । वर्धमानम् । त्वेति पूर्वेण सम्बन्धः ॥ ८॥

**स नः पितेव सूनवेऽग्ने सूपायनो भव ।**
**सचस्वा नः स्वस्तये ॥ ९॥**

हे अग्ने । स त्वम् । नः । सूनवे पितेव सूपायनः शोभनोपायनो भव । नः स्वस्तये अविनाशाय अमृतत्वायेति यावत् । सचस्व समवेतो भव । स्वस्याप्रमादेनात्मरूपेऽग्नौ निष्ठात्मकः समवायो ह्यमृतत्वस्य हेतुः ॥ ९॥

## सूक्तम् (२)

वायवायाहीति नवर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः । वायव्यैन्द्र-वायव्यमैत्रावरुणास्तृचाः । गायत्री छन्दः ।

**वायवायाहि दर्शते मे सोमा अरङ्कृताः ।**
**तेषां पाहि श्रुधी हवम् ॥ १॥**

दर्शत दर्शनीय । आधिदैविकरूपापेक्षयेयमुक्तिः । हे वायो । आयाहि । इमे सोमाः । अरङ्कृताः अलङ्कृताः संस्कृता इति यावत् । तेषां सोमानां द्वितीयार्थे षष्ठी तान् सोमानित्यर्थः । पाहि पिब । हवं

आह्वानं मे । श्रुधि शृणु । दर्शतेत्यौणादिकतच्प्रत्ययान्तं रूपम् । अरं लकारस्थाने रेफः प्राचां भाषायां प्रायः । पाहीति च्छान्दसः पिबादेशाभावः । श्रुधि शृण्वित्यादिना हेर्धिः । अन्येषामपि दृश्यत इति संहितायां श्रुधी हवमिति दीर्घः ॥ १॥*

**वायो उक्थेभिर्जरन्ते त्वामच्छा जरितारः ।**
**सुत सोमा अहर्विदः ॥ २॥**

हे वायो । सुतसोमाः सोमयाजिनः । अहर्विदः कालज्ञाः । जरितारः स्तोतारः । उक्थेभिः स्तोत्रैः । त्वामच्छ त्वामभिलक्ष्य । जरन्ते स्तुवन्ति । अच्छा जरितार इति निपातस्य चेति संहितायां दीर्घः ॥ २॥

**वायो तव प्रपृञ्चती धेना जिगाति दाशुषे ।**
**उरूची सोमपीतये ॥ ३॥**

हे वायो । तव उरूची उरूगतिः । धेना शब्दरूपा शक्तिः । प्रपृञ्चती प्रकर्षेण सम्पर्कं कुर्वन्ती । दाशुषे आत्मानमर्पितवते द्वितीयार्थे षष्ठी आत्मार्पकमिति यावत् । जिगाति गच्छति । किमर्थं । सोमपीतये शीर्षामृतपानाय अन्तः प्राणशक्तिः प्रणवात्मिकोद्रिक्ता हि शीर्षामृतं प्रवर्तयति स्वयं चानुभवति योगिन आत्मसमर्पकस्य । सिद्धावस्थोक्ति-रेषा ॥ ३॥

**इन्द्रवायू इमे सुता उप प्रयोभिरागतम् ।**
**इन्दवो वामुशन्ति हि ॥ ४॥**

हे इन्द्रवायू । इमे । सुताः प्रयोभिरन्नैर्दातव्यैः सह । उप समीपे । आगतम् आगच्छतम् । हि यस्मात् । इन्दवः सोमाः । वाम् । उशन्ति कामयन्ते । इन्दुमत आत्मनः काम इन्दुष्वारोप्यते । गमतेर्लोटि मध्यमद्विवचने बहुलवचनाच्छपो लुकिकृते अनुदात्तोपदेशे-त्यादिनानुनासिकलोपे गतमिति सिध्यति ॥ ४ ॥

**वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।**
**तावायातमुपद्रवत् ॥ ५॥**

हे वायो । वाजो बलमस्या अस्तीति वाजिनी शक्तिः साऽनयोर्वसतीति वाजिनीवसू । इन्द्रः चात्त्वमपि । सुतानां सुतान् चेतथः जानीथः । तौ। द्रवत् शीघ्रम् । उप समीपे । आयातम् ॥ ५॥

**वायविन्द्रश्च सुन्वत आयातमुपनिष्कृतम् ।**
**मक्ष्वित्था धिया नरा ॥ ६॥**

हे वायो । नरा नेतारौ । इन्द्रः चात्त्वमपि । सुन्वतो यजमानस्य । धिया स्थिरस्मरणरूपया बुद्ध्या । मक्षु त्वरया । इत्था सत्यम् । निष्कृतं संस्कृतम् । हविः । उपायातम् । नरेति सुपांसुलुगित्यादिनाडादेशः ॥ ६॥

**मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।**
**धियं घृताचीं साधन्ता ॥ ७॥**

घृताचीं शीर्षामृतरसप्रापिकाम् । धियं ध्रुवां स्मृतिम् । साधन्ता साधयन्तौ । पूतदक्षं पवित्रबलं मित्रम् । रिशादसं शत्रुभक्षकं वरुणं

च । हुवे आह्वयामि । साधन्तेत्यत्रडादेशः प्राग्वत् । अन्तर्भावि तण्यर्थं रूपमिदम् । व्यत्ययेन च शप् ॥ ७॥

**ऋतेन मित्रावरुणावृतावृतस्पृशा ।**
**क्रतुं बृहन्तमाशाथे ॥ ८॥**

ऋतावृधा सत्यस्य वर्धकौ । ऋतस्पृशा सत्यं स्पृशन्तौ । हे मित्रा-वरुणौ । ऋतेन सत्येन बृहन्तं क्रतुं देवयागम् । आशाथे व्याप्तवन्तौ युवाम् । ऋतावृधावित्यन्तर्भावितण्यर्थं रूपम् । न हि वृतीत्यादिना पूर्वपदस्य दीर्घः । आनशाथे । स्थाने आशथे नुडभावश्छान्दसः । लडर्थे लिट् । लुङ लङ लिटां सर्वार्थत्वाच्छन्दसि ॥ ८॥

**कवी नो मित्रावरुणा तुविजात उरुक्षया ।**
**दक्षं दधाते अपसम् ॥ ९॥**

कवी मेधाविनौ । तुविजाता तुविजातौ बहुजन्मानावित्यर्थः । उरुक्षया बहुनिवासौ । मित्रावरुणा मित्रावरुणौ । नः अस्माकम् । दक्षं बलं अपसं कर्म च । दधाते धारयतः । निद्रावस्थायां विश्वपुरुषमयो मित्रः जाग्रदवस्थायां प्राज्ञपुरुषरूपो वरुणश्च नष्टाविव भवतः । पुनर्जाग्रद् अवस्थायां मित्रः निद्रावस्थायां वरुणश्च जाताविव स्याताम् । तदिदं तु विजातत्वं मित्रावरुणयोः । उरुक्षयत्वं बहुपिण्डवासात् ॥ ९॥

## सूक्तम् (३)

अश्विनाविति द्वादशर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः । अश्विनाविन्द्र-विश्वेदेवासरस्वत्यस्तृचाः । गायत्रीछन्दः ।

**अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।**
**पुरुभुजा चनस्यतम् ॥१॥**

द्रवत्पाणी चलहस्तौ । शुभः शुभस्य कर्मणः । पती प्रभू । पुरुभुजा बहुभोजिनौ । हे अश्विनौ । यज्वरीः । यागनिष्पादिकाः । इषोऽन्नानि । चनस्यतं । भोक्तुमिच्छतम् । यज्वरीरिति ङ्वनिप्प्रत्ययान्तं रूपम् । चनस्यतमत्रान्नवाचकाच्चनस इच्छार्थकः स्यात् । तात्पर्ये त्वन्नेच्छा च भोक्तुमिच्छा । अतो नेष इत्यस्य धातुस्थश्चनः शब्दो न पुनरुक्तिः ॥१॥

**अश्विना पुरुदंससा नरा शवीरया धिया ।**
**धिष्णया वनतं गिरः ॥२॥**

पुरुदंससा बहुकर्माणौ । नरा नेतारौ । धिष्ण्या । बुद्धिमन्तौ । हे अश्विना अश्विनौ । गिरः अस्माकं स्तुतीः । शवीरया गतिमत्या अस्मत्प्रवणयेत्यर्थः । धिया बुद्ध्या । वनतं सम्भजतम् । शवीरयेतीरन् प्रत्ययान्तस्य शुधातोः रूपम् ॥२॥

**दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।**
**आयातं रुद्रवर्तनी ॥३॥**

दस्रा शत्रूणां नाशयितारौ । रुद्रो द्यौर्मार्गो ययोस्तौ रुद्रवर्तनी । नासत्या असत्यरहितावश्विनौ । वृक्तबर्हिषः यजमानस्य सुताः सोमाः । युवाकवः दध्यादिना मिश्रिताः सन्तीति शेषः । आयातम् । युवाकव इति यौतेः काकुप्रत्ययान्तं रूपम् । रूद्रो द्यौरिति भूमिकायां प्रतिपादितम् । अश्विनोर्नासत्यत्वं च ॥ ३॥

**इन्द्रायाहि चित्रभानो सुता इमे त्वायवः ।**
**अण्वीभिस्तना पूतासः ॥ ४॥**

चित्रभानो चित्रकिरण ! हे इन्द्र ! इमे । अण्वीभिरङ्गुलिभिस्तना शश्वत् । पूतासः शोधिताः । सुताः सोमाः । त्वायवः त्वत्कामा भवन्ति । आयाहि । त्वायव इति युष्मच्छन्दादिच्छार्थे क्यजन्तं रूपम् ॥ ४॥

**इन्द्रायाहि धियेषितो विप्रजूतः सुतावतः ।**
**उपब्रह्माणि वाघतः ॥ ५॥**

हे इन्द्र । धिया बुद्ध्या । इषितो वाञ्छितः । विप्रजूतः । विप्रेण मेधाविना मया स्थितप्रज्ञेनेति यावत् । जूतः प्रेरितः । सुतावतः सोमयुक्तस्य । वाघत ऋत्विजः ब्रह्माणि मन्त्रान् प्रति । उपायाहि ॥ ५॥

**इन्द्रायाहि तूतुजान उपब्रह्माणि हरिवः ।**
**सुते दधिष्व नश्चनः ॥ ६॥**

हरिवः हरियुक्त । हे इन्द्र । तूतुजानस्त्वरमाणस्त्वम् । ब्रह्माण्युपायाहि । सुते सोमोपलक्षिते यागे । नः चनोऽन्नम् । दधिष्व धारय । तुजेर्लिटि

कानचि तूतुजान इति रूपम् । हरिव इत्यत्र । मतुपो मकारस्य छन्दसि वत्वम् । सम्बुद्धौ रुत्वं च नुमागमसंयोगान्तलोपाभ्यामनन्तरं नकारस्य । दधिष्वेति दधाते र्लेटि रूपम् ॥ ६॥

**ओमासश्चर्षणी धृतो विश्वे देवास आगत ।**
**दाश्वांसो दाशुषः सुतम् ॥ ७॥**

ओमासः रक्षकाः । चर्षणीधृतः मनुष्याणां धारकाः । दाश्वांसः दातारः । विश्वेदेवासः सर्वे देवाः । दाशुषो हविर्दत्तवतो यजमानस्य । सुतं सोमं प्रति । आगत आगच्छत । ओमास इत्यवतेर्मन्नन्तं रूपम् । आज्जसेरसुगिति च्छन्दसि वैकल्पिकः सुगागमः ॥ ७॥

**विश्वेदेवासो अप्तुरः सुतमागन्त तूर्णयः ।**
**उस्रा इव स्वसराणि ॥ ८॥**

अपस्त्वरयन्तीत्यप्तुरः । तूर्णयः वेगवन्तः । हे विश्वेदेवाः । उस्राः सूर्यकिरणाः । स्वसराणि दिनानीव । सुतमस्माकं सोमं प्रति । आगन्त । आगच्छत । अत्र शपो लुगेव । नानुनासिकलोपः । तप्तनप्तनथनाश्चेति तबादेशेऽपि दितिप्रतिषेधात् ॥ ८॥

**विश्वेदेवासो अस्त्रिध एहिमायासो अद्रुहः ।**
**मेघं जुषन्त वह्नयः ॥ ९॥**

अस्त्रिधः नाशरहिताः । एहिमायासः एहिर्व्याप्ता माया प्रज्ञा येषां ते सर्वज्ञा इत्यर्थः । अद्रुहः द्रोहरहिताः । वह्नयो वोढारः । विश्वेदेवास ः ।

मेघं हविः । जुषन्त सेवन्ताम् । लोडर्थे लङ् । अडाभावश्छान्दसः ॥ ९ ॥

**पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
**यज्ञं वष्टु धियावसुः ॥ १० ॥**

पावका पावनी । वाजिनीवती शक्तिमती । धियावसुः बुद्ध्या सह वसन्ती । सरस्वती देवी । वाजेभिरात्मशक्तिभिः । यज्ञं वष्टु कामयतां लक्षणया वहत्वित्यर्थः । यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाहेति ब्राह्मणमत्र भवति । धियावसुरित्यत्र समासे छान्दसस्तृतीयाया अलुक् । सरस्वत्याश्च धियावसुत्वं वाग्रूपत्वात् । वाग्वै धियावसुरिति ब्राह्मणमत्र भवति । वाचश्च धिया सह वासः शब्दस्यार्थसम्बन्धात् । वक्तुर्विवक्षितोऽर्थस्तस्य धियो हि नातिरिच्यते । पावकादीनां छन्दसीति त्वप्रतिषेधो ण्वुलि ॥ १० ॥

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।**
**यज्ञं दधे सरस्वती ॥ ११ ॥**

सूनृतानां सत्यानाम् । चोदयित्री प्रेरयित्री । सुमतीनां शोभनबुद्धीनां चेतन्ती संज्ञापयन्ती । सरस्वती वाग्देवी । यज्ञं दधे धारितवती । वागिन्द्रियमग्नेः स्वरूपमेकम् । सरस्वती तु शब्दशब्दमयवागात्मिकेति विशेषः ॥ ११ ॥

**महो अर्णः सरस्वती प्रचेतयति केतुना ।**
**धियो विश्वा विराजति ॥ १२ ॥**

सरस्वती । महः सर्वत्र व्यापकत्वाद्विभु । अर्णः सूक्ष्माब्रूपमन्तरिक्षम् । केतुना प्रज्ञानेन प्रचेतयति चैतन्यवत्करोति । विश्वाः सर्वाश्च धियः । विराजति प्रकाशयति । अन्तर्भावितण्यर्थोऽत्र राजतिः । नेदं विशालमन्तरिक्षं केवलं जडं शुष्ककाष्ठादिवत् । अपि तु चैतन्यवन्महेन्द्रशक्त्या सरस्वत्येति ऋषिर्दर्शयति । वाचः परस्या एतद्वर्णनम् । सान्तरिक्षगा विभुर्नित्या च । सर्वाणि ज्ञानानि समष्टेर्व्यष्टीनां च तत्र प्रतितिष्ठन्ति । तदेवाह धियो विश्वा विराजतीति । सर्वं च ज्ञानं शब्दप्रतिष्ठमस्माकमनुभवेऽपि । यतो वयमव्यक्तं शब्दायामहे यज्जानीमः ॥१२॥

## सूक्तम् (४)

सुरूपकृत्नुमिति दशर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः ।
इन्द्रो देवता । गायत्री छन्दः (१,२,४-१०), विराट् छन्दः (३) ।

**सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।**
**जुहूमसि द्यवि द्यवि ॥१॥**

सुरूपकृत्नुं सुरूपस्य व्यक्तरूपस्य जगतः कर्तारमिन्द्रम् । द्यवि द्यवि दिने दिने ऊतये रक्षणाय । गोदुहे पयोदोहनाय लक्षणया गोशब्दोऽत्र पयो वाची । सुदुघामिव सुष्ठुदोग्ध्रीं धेनुमिव । जुहूमसि आह्वयामः ॥१॥

**उप नः सवना गहि सोमस्य सोमपाः पिब ।**
**गोदा इद्रेवतो मदः ॥२॥**

हे सोमपाः सोमस्य पातरिन्द्र । नः सवना सवनानि प्रति उपागहि । सोमस्य सोमं पिब । द्वितीयार्थे षष्ठी । अनन्तरं रेवतः श्रीमतः ते । मदः । गोदा इत् गोप्रद एव । भवत्विति शेषः । गो शब्दः सर्वत्र प्रार्थनासु भूधेनुतेजसामन्यतमस्य वाचकः । अध्येता जापको वा यथा कामं तेष्वन्यतममर्थं भावयेद्यत्र न विशिष्टोऽर्थो मन्त्रत एव गम्येत । गतमित्यनेन गहीति रूपं व्याख्यातम् ॥ २॥

**अथा ते अन्तमानां विद्याम सुमतीनाम् ।**
**मानो अतिख्य आगहि ॥ ३॥**

अथानन्तरम् । ते अन्तमानां सन्निकृष्टानाम् । इतरेषां विप्रङ्कृष्टानाम् इत्यर्थाल्लभ्यते । सुमतीनां शोभनानानां विद्याम जानीयाम । द्वितीयार्थे षष्ठी । नः अस्मान् । अति अतिक्रम्य माख्यः माचकथः । आगहि अतीन्द्रियान्विषयान्वक्तुमित्यर्थाल्लभ्यते ॥ ३॥

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् ।**
**यस्ते सखिभ्य आवरम् ॥ ४॥**

ऋषिरनया विविदिषुं ब्रूते । विग्रं मेधाविनं गुरुं परेहि गच्छ । गत्वा च तं विपश्चितं । अस्तृतं केनाप्यहिंसितम् । इन्द्रं पृच्छे । किं रूप इन्द्र इति । यो गुरुः ते सखिभ्यो मित्रेभ्यः । वरं श्रेष्ठमिन्द्रस्वरूपम् । आख्यातवानिति शेषः । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्याद्यस्यैव प्रपञ्चः । पृच्छा विपश्चितमिति संहितायां छान्दसो दीर्घः ॥ ४॥

**उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत ।**
**दधाना इन्द्र इद्दुवः ॥ ५॥**

इन्द्रे । दुवः परिचर्याम् । दधाना इत् दधाना एव । नः अस्माकं सम्बन्धिनः । ब्रुवन्तूत । स्तुवन्तु चेन्द्रम् । हे निदः इन्द्रनिन्दकाः पुरुषाः । अन्यतश्चित् न केवलमितः प्रदेशात् इतरस्माच्चेन्द्रस्तुतिप्रदेशात् निरारत निर्गच्छत। लोडर्थे लुङ ॥ ५॥

**उत नः सुभगां अरिर्वोचेयुर्दस्मकृष्टयः ।**
**स्यामेदिन्द्रस्य शर्मणि ॥ ६॥**

हे दस्म शत्रूणां नाशयितरिन्द्र । अरिरुत शत्रुरपि । कृष्टयो मनुष्याः । विशेष्ये बहुवचने विशेषणस्यैकवचनं छान्दसम् । नः । सुभगान् सुन्दरान् श्रेष्ठानिति लक्षणयाऽर्थः । वोचेयुरुच्यासुः । इन्द्रस्येदिन्द्रस्यैव । शर्मणि सुखे । इन्द्रकृत एव सुख इत्यर्थः । स्याम भवेम । छन्दस्युभयथेति आशीर्लिङः सार्वधातुकत्वेन स लोपः । ततो वक्तेराशीर्लिङि वोचेयुरिति रूपम् । जुसादेशाङप्रत्ययो मागमया सुडागमाः प्रागेव भवेयुः ॥ ६॥

**एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ।**
**पतयन्मन्दयत्सखम् ॥ ७॥**

आशवे व्यापकायेन्द्राय । आशुं व्यापकम् । यज्ञश्रियं यज्ञसम्पद्रूपम् । नृमादनं जनहर्षकम् । पतयत्पतयन्तं प्राप्नुवन्तमित्यर्थः । मन्दयत्सखं मन्दयन् । हर्षयन्निन्द्रः सखा यस्येति तादृशम् । ईं इमं सोमम् । आभर सम्पादय । यजमानेति सम्बुद्धिरध्याहार्या । पतयदिति लिङ्गव्यत्ययः ।

छन्दसि सर्वविधीनां वैकल्पिकत्वादुपधावृद्धेरभावः ॥ ७॥

अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः ।
प्रावो वाजेषु वाजिनम् ॥ ८॥

हे शतक्रतो बहुप्रज्ञेन्द्र । अस्य सोमस्य द्वितीयार्थे षष्ठी । पीत्वा । वृत्राणां चैतन्यशक्त्यावरकाणां शत्रूणाम् । घनः प्रवेष्टुं भेत्तुं वाऽशक्यो दृढः । अभवः । वाजेषु युद्धेषु । वाजिनं शक्तिमन्तमात्मभक्तम् । प्रावः अरक्षः । व्यापकः स सोमः । यस्य पानादिन्द्रो वृत्राणामजेयो भवति ॥ ८॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो ।
धनानामिन्द्र सातये ॥ ९॥

हे शतक्रतो इन्द्र । वाजिनं शक्तिमन्तम् । तं तादृशं । त्वा त्वाम् । वाजेषु युद्धेषु । धनानाम् । सातये साधनाय । वाजयामः शक्तिमन्तं कुर्मः । स्तोत्रेण प्रबोधनमेवात्र वाजनम् ॥ ९॥

यो रायोवनिर्महान्त्सुपारः सुन्वतः सखा ।
तस्मा इन्द्राय गायत ॥ १०॥

य इन्द्रः रायो धनस्यावनिः रक्षकः । महान् विभुः । सुपारः सुष्ठुपारयिता । सुन्वतो यजमानस्य । सखा मित्रभूतः । तस्मै इन्द्राय । गायत । हे सखाय इति सम्बुद्धिरध्याहार्या ॥ १०॥

## अग्नेरष्टादश नामानि

अग्निः, होता, कविक्रतुः, अङ्गिराः, विश्पतिः, हव्यवाहः, दीदिवान्, गृहपतिः, जिह्वास्यः, हव्यवाट्, दूतः, पावकः, विप्रः, मनुर्हितः, द्रविणोदाः, प्रथमः, ऊर्जंपतिः, यविष्ठः ।

## *द्वितीयसूक्तस्य प्रथमो मन्त्रः

वायवायाहीति नवर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः । वायव्यैन्द्रवायव्यमैत्रावरुणास्तृचाः । गायत्रीछन्दः ।

वायवायाहि दर्शते मे सोमा अरङ्कृताः ।
तेषां पाहि श्रुधी हवम् ॥ २. १ ॥

दर्शत दर्शनीय । वायो हे वायुनामकदेव । आ याहि आगच्छ। अरङ्कृताः संस्कारैरलङ्कृताः । सोमाः सोमनामकवल्लीरसाः । इमे सिद्धा इत्यर्थः । तेषां तान् । पाहि पिब । हवं मदीयाह्वानं श्रुधि  शृणु ।

देवयजनभूमौ देवताया आगमनमग्नेर्देवतानयनेन व्याख्यातम् । तत्राग्निरानेता देवानाम् । अत्र देवः स्वयमागन्तेति विशेषः । सन्निधानं तु तद्वदेवात्रापि । एवमुत्तरत्रापि देवागमनप्रार्थनासूह्यम् ।

अन्तर्यागे मन एव सोमः । सङ्कल्पा एव सुताः सोमाः । तेषामात्मनि होमो यागः । सङ्कल्पमूलान्वेषणे सङ्कल्पा आत्मनि भवेयुर्हुताः । सुतस्य सोमस्यैकवचनेन निर्देशे अहंवृत्तेरात्मनि होमोऽवगन्तव्यः ।

तादृशहोमेन निःसङ्कल्पत्वसिद्धिः प्रथमं स्यात् । अनन्तरमन्तर्यागस्य नित्यमुत्तरं कर्म चलेत् । यथा बहिर्यागे सोमयागादनन्तरं नित्याग्निहोत्ररूपमुत्तरं कर्म । इयमेकाऽन्तर्यागे सोमसंस्था ।

अन्यस्यामन्तर्यागसोमसंस्थायां सहस्रारप्रदेश एव सोमः । कुण्डलिनीशक्त्युल्लासेन द्रावितात्तस्माद्द्रवन्त्यमृतधारैव सुतः सोमः । तस्यात्मनाऽऽस्वादनं स्वस्य सोमपानम् । देवतायाश्च । आत्माभिन्नत्वा-द्देवतायाः । इयमन्यान्तर्यागे सोमसंस्था ।

अन्तर्यागे देवतायाः सोमपानमात्मद्वारेति स्थितम् । बहिर्यागे तु सर्वस्य हविषो ग्रहणमग्नेः साक्षात् । देवतान्तरस्याग्निद्वारा । अन्तर्यागे जीवाग्निद्वारा बहिर्यागे भौतिकाग्निद्वारेत्युभयत्रापि तुल्यमग्निद्वारा ग्रहणम् । योगिनोऽपि परस्यानुभवानात्मसात्कर्तुं प्रभवन्ति चेत् किमु वक्तव्यं माहाभाग्यवतीनां देवतानां विषये ।

वातीति वायुरिति वायुशब्दस्य व्युत्पत्तिः । गतिगन्धनयोर्वातिर्वर्तते । उभयथाऽपि प्रकृतेऽर्थसङ्गतिः ।

यद्यपि भौतिको वायुरचेतनस्तथाऽपि तामात्मविभूतिमभिमन्यमानो देवतात्माऽन्यो वर्तते । तस्यान्तरिक्षं शरीरम् । स एव श्रोता हवस्य । पाता सोमस्य ।

महत्यो देवतास्तिस्र एवेति सर्वानुक्रमणिकाकारः कात्यायनो निरुक्तकारो यास्कश्च कथयतः । "तिस्र एव देवताः क्षित्यन्तरिक्षद्युस्थाना अग्निर्वायुः सूर्य इति ।" इदं कात्यायनस्य वाक्यम् ।

ऋग्वेदमन्त्रभाष्यम्

# प्रथमं मण्डलम्

## प्रथमसूक्तस्य भाष्यम् (३)

### सूक्तम् (१)

(प्रथमाष्टकस्य प्रथमोऽध्यायः)

अथ विज्ञाननिधिमादिवेदं शाकलकसंहिताक्रमेण व्याख्यास्यामः । ऋग्वेदसंहितायां दश मण्डलानि । तेषु प्रथमं मण्डलं शातर्चिनमुच्यते । शतमृचो दर्शनं यस्य स शतर्ची । ते शतर्चिन ऋषयः । किञ्चिदूनाः शतं शताधिका वा ऋचोऽत्र शतशब्देन विवक्ष्यन्ते । मधुच्छन्दाः, मेधातिथिः, शुनःशेपः, हिरण्यस्तूपः, कण्वः, प्रस्कण्वः, सव्यः, नोधाः, पराशरः, गोतमः, कुत्सः, कक्षीवान्, परुच्छेपः, दीर्घतमाः, अगस्त्यश्चेति पञ्चदशशतर्चिन ऋषयः । यद्यपि प्रथमे मण्डले पञ्चदशभ्यो दर्शनेभ्योऽन्यानि च चत्वारि दर्शनान्येकैकसूक्तानि विद्यन्ते तथापि प्राधान्येन शतर्चिनामिति शातर्चिनं मण्डलम् । तत्र चतुर्विंशतिरनु-वाकाः । नवोने द्वे शते सूक्तानाम् । त्रिसूक्तः प्रथमोऽनुवाकः, चतुःसूक्तो द्वितीयः, चतुःसूक्ते तृतीयेऽन्त्यवर्जितानि त्रीणि सूक्तानि चेति । वैश्वामित्रस्य मधुच्छन्दसो दर्शनम् । तृतीयस्यान्त्यं सूक्तं तु माधुच्छन्दस्य जेतुः । तेष्वेकादशसु सूक्तेषु पूर्वाणि नव गायत्राणि । उत्तरे आनुष्टुभे ।

माधुच्छन्दसे दर्शनेऽग्निमीळ इति नवर्चं प्रथमं सूक्तमाग्नेयम् । यथा-

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

यज्ञस्य बहिर्यागस्यान्तर्यागस्य च पुरोहितमग्रे हितम् । नेतारमित्यर्थः । होतारं तन्नामकम् ऋत्विजम् । बहिर्यागेऽन्तर्यागे च । रत्नधातमम् अतिशयेन श्रेष्ठवस्तूनां धारयितारं पालयितारं वा । अग्निं तन्नामकम् देवम् । ईळे स्तौमि । अहमिति शेषः ।

आग्नेयसूक्तसमुच्चयार्थपरिशीलनादिदमवगम्यते । जीवो वागिन्द्रियं जठराग्निश्चेति त्रीणिरूपाण्यध्यात्ममग्नेः । दिवो महो विद्युत्पार्थिवो ज्वलनश्चेति त्रीण्यधिभूतम् । तेषु वागिन्द्रियं ब्रह्मणस्पतेरपि रूपं वर्ण्यते । विद्युदिन्द्रस्य च । दिवो महो रुद्रस्य चेन्द्रस्य च । कथमत्र विरोधपरिहारः ? अन्यश्चास्ति तत्त्वदृष्ट्या विरोधः । अधिभूतं पार्थिवो ज्वलनोऽध्यात्मं जठराग्निरित्युपपद्यते पचनक्रियासाधर्म्यात् । जीवस्तु कथं स्यात् ?

अत्र ब्रूमः । सामान्यतो ज्योतिरेवाग्निः । न केवलं पार्थिवज्योतिः । ज्योतिश्च चतुर्विधम् । आत्मा दिवो महो विद्युज्ज्वलनश्चेति । अन्तरिक्षान्तरव्यापी परमाकाशो द्यौरुच्यते दृश्यप्रपञ्चमध्ये । दृश्यस्य परस्ताच्छुद्धस्यैव परमाकाशस्य द्यौरित्यभिधानम् । यदादित्योऽपि क्वचित् द्यौरुच्यते तत्तत्र दिव्यमहसो बाहुल्यात् । दिवोऽस्ति गुप्तं व्यापकं तेजः । तदेव शब्दविद्युतोर्मूलम् । तत्सारभूयिष्ठमेव वागिन्द्रियम् । तस्यैव भुवनानि पचतः कालाख्या । अयं दिवो मह इति शब्दस्यार्थः इतःपरं तदेतद्दिवो महो लघुना कालपदेन व्यवहरामः । एवं ज्योतिःस्वरूपस्याग्नेर्जीवादिरूपेण कालादिरूपेण च वर्णनं नायुक्तम् । एतेन द्वितीयो विरोधश्च परिहृतो भवति । सिध्यत्येवम् । अग्निः पृथिवीस्थान इति प्राचीनार्योक्तिस्तु प्रत्युक्ता स्यात् । अस्त्यन्यः समन्वयो यथा सोक्तिः प्रत्युक्ता न स्यात् । सर्वाण्यपि प्रार्थनानि फलवन्ति स्युः

सति श्रोतरि । असति श्रोतर्यरण्यरोदनतुल्यानि भवेयुः । जीवः सोपाधिक एव शृणुयान्न जीवतत्त्वम् । वागिन्द्रियजठराग्निकालविद्युज्ज्वलनानां श्रोतृत्वं तु सर्वथा नोपपद्यते । तस्मादाग्नेयानां सूक्तानामध्येतृभि-र्जप्यमानानां श्रोता कश्चिद्वक्तव्यः । असंवद्धप्रलापिनो वा महर्षयो वक्तव्याः । पूर्वमेव साध्यं नोत्तरम् । अस्ति पृथिव्या आत्मा । न जडा पृथिवी । अस्माकं जीवानां यथेदं शरीरं तथा कस्यचिन्महतो जीवस्य पृथिवी शरीरमित्युक्तं भवति । स एव जीवो महानग्नेराधिदैविकं स्वरूपम् । स एव श्रोताऽऽग्नेयस्य स्तोत्रस्य । तेनार्थवन्त्यग्निमुद्दिश्य प्रार्थनानि । एष पृथिवी शरीरोऽग्निः कूटस्थः पा र्थिवानां जीवानाम् । वर्जयित्वा तं यः केवलेन कर्मणा तरितुमिच्छति सोऽर्धमेव जानाति । तस्याग्नेः शारीरज्योतिर्वदयं ज्वलनोऽग्निः । तस्य कालविद्युदादिरूपेण च वर्णनमग्नेर्व्यापकतत्त्वमन्वीक्ष्येति बोद्धव्यम् । सर्वाश्च देवतास्तुतयो न केवलं व्यक्तिदृष्ट्या, अपितु तत्त्वदृष्ट्या च भवन्त्युच्चावचाः ।

प्रकृतमनुसरामः । अग्नेर्ज्वलनरूपत्वादन्तर्यागस्य । वागिन्द्रिय-रूपत्वाद्वाह्ये यागे सहोतर्त्विक् । वागेव हि शंसति शस्त्राणि । जीवरूपत्वादन्ङ्कतर्यागे होतर्त्विक् । ध्रुवया स्मृत्या सम्पूर्णात्मसमर्पणेन च मनोमये महेन्द्राभिमुखो सोऽयमन्तर्यागो भक्तस्यान्तःपाकाय प्रवर्तते । स एव नामान्तरेण देवानां यागः । ब्राह्मणेषु दृष्टाः पुरुष-विधानामिव तत्कथाः कर्मस्तुत्यर्थत्वान्न स्वार्थे प्रमाणं भवन्ति । तस्मिन्नन्तर्यागे निजया शक्त्या देदीप्यमानो हृदयवेदिस्थो जीवाग्निर्देवानां ह्वाता भवति न तस्याह्वानं व्यर्थं भवेत् । सर्वे देवाः स्वस्वविभूतिभूतेषु प्राणेषु शक्त्युल्लासात्प्रादुर्भूय साधयन्त्यन्तर्यागम् ।

ईळ इत्यत्र डकारस्य स्थाने ळकारः प्राचां भाषायाम् । एवमुत्तरत्रापि ळकारश्रवणेषूह्यम् ।

# ऋग्वेदमन्त्रभाष्यम्

## प्रथमं मण्डलम्

### प्रथमसूक्तस्य भाष्यम् (४)

प्रथमाष्टके प्रथमोऽध्यायः

## सूक्तम् (१)

अग्निमिति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । अग्नि-र्देवता । गायत्री छन्दः ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ १॥**

यज्ञस्य देवाराधनस्य । पुरोहितम् । पुरोहितवन्नेतारम् । होतरम् ऋत्विजम् । देवानां यागे होतृनामकमृत्विजम् । देवाह्वानकर्मबिभ्राणमित्यर्थः । रत्नधातमम् अतिशयेन रत्नानां पोषयितारम् अग्निम् देवम् अग्निनामकं देवतात्मानम् । ईळे स्तौमि । अहमिति शेषः ।

यावन्त्यभिधानानि तावत्यो देवता इति याज्ञिकाः । तिस्र एव देवताः पृथिव्यन्तरिक्षद्युस्थाना इति नैरुक्ताः । एकैव देवतेति तत्त्ववादिनः ।

वस्तुतस्तु देवतायाः परस्या एकत्वेऽपि लोकत्रयोपाधिवशात् त्रित्वम् । पृथिवीशरीर आत्मा प्रथमो देवः । अन्तरिक्षशरीरो मध्यमः । द्युशरीर उत्तमः । द्यौश्च लोकः सूर्यमण्डलान्नातिरिच्यते । अपि च प्रथम एव पार्थिवानां प्राणिनामात्मा भवति । मध्यम आन्तरिक्षाणाम् । उत्तमो दिव्यानाम् । भौतिकविभूतयस्तु तत्तल्लोकगतास्तल्लोकशरीरस्यात्मन इति बोध्यम् ।

यः पृथिवीशरीर आत्मा प्रथमो देवस्तं जातवेदसमाहुर्जातानि वेदांस्यस्मादित्यर्थयोगात् । तस्य यज्जीवरूपं स वैश्वानरो विश्वेषां नराणामयमित्यर्थयोगात् । पश्यत छान्दोग्योपनिषदि वैश्वानरविद्याम् । तत्रास्माकमात्मा वैश्वानरः कथ्यते । पार्थिवो भौतिकाग्निर्द्रविणोदाः द्रविणांसि धनानि ।

असमाप्तम्

# ऋग्वेदमन्त्रभाष्यम्

## प्रथमं मण्डलम्

### प्रथमसूक्तस्य भाष्यम् (५)

सूक्तम् (१)

अथातः संहिताक्रमेण दाशतयीर्व्याख्यास्यामः । तत्र प्रथमे मण्डले वैश्वामित्रस्य मधुच्छन्दस आर्षं दशसूक्तात्मकं प्रथमं दर्शनम् । तत्राद्यानि नव सूक्तानि गायत्राणि । दशममानुष्टुभम् ।

तेष्वग्निमीळ इति नवर्चं प्रथमं सूक्तमाग्नेयम् । तस्येयमृगाद्या भवति ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

राज्ञः पुरोहितवद्यज्ञस्याभीष्टसम्पादकत्वाद्यज्ञस्य पुरोहितोऽग्निरुच्यत इत्येके । अग्निर्हि यज्ञस्याभीष्टं होमं सम्पादयति । अत्रायं संशयः । होमो यज्ञान्नातिरिच्यते तत्स्वरूपैकदेशत्वात् । स्वरूपमन्यत् अभीष्टं कर्मान्यत् । एवं स्थिते कथं यज्ञस्याभीष्टसम्पादकोऽग्निः । अपि च पुरोहितेन निर्वर्तनीयं न यजमानस्याभीष्टमात्रम् । अपि तु तस्याभीष्टसाधकं किमपि कर्म शान्तिकपौष्टिकादिकर्मकारिण्येव पुरोहितपदप्रवृत्तेः । यज्ञाभिमानिनो दैवतस्य होमोऽभीष्टावहं किमपि कर्म स्यात् । तेनोक्तार्थोऽनवद्य इति चेत् नैषा युक्तिः । यज्ञाभिमानिनो

दैवतस्य होमः कर्मात्मैव भवति न तु तस्य कर्म । स हि यजमान-स्यैवाभीष्टसाधकं कर्म । यज्ञस्य सम्बन्धिनि पूर्वभागे आवहनीयात्मना-वस्थितत्वाद्यज्ञस्य पुरोहितोऽग्निरुच्यत इत्यन्ये । लक्षणया यज्ञोऽत्र यज्ञभूमिपरः । अयमर्थः सङ्गतः स्यात् यदि यज्ञभूमेः पूर्वदिङ्मात्रस्थो-ऽग्निः । स च पश्चाद्भागे च विद्यते गार्हपत्यात्मना । दक्षिणभागे च विद्यते दक्षिणात्मना । एवं स्थिते सङ्कोचेनोक्तिररमणीया । सामान्यतः सर्वस्य यजमानस्य पुरोहितवदभीष्टसाधककर्मकारित्वाद्भवतु पुरोहितोऽग्निः । सिध्येदेवमस्य पदस्यार्थः । यज्ञस्येति पदमनन्वितम् अवतिष्ठेत । न देवमित्यनेन तदन्वेतुं शक्यं स्यात् । पुरोहितं पुरोहितवदभीष्टसाधककर्मनिष्पादकं सर्वस्य यजमानस्य भौतिकरूपेण हविर्ग्रहणात् वाग्रूपेण स्तुतिशंसनाभ्यां चेति पर्यवसन्नोऽर्थः ।

यज्ञस्य देवम् - गिरां देवीत्यादाविवात्र स्वरूपसम्बन्धाभिधायिका षष्ठी । यज्ञस्वरूपमित्यर्थः ।

ऋत्विजं होतारं - होतारं नामर्त्विजं देवानां यागे । अग्निर्वै देवानां होतेति ब्राह्मणमत्र भवति कीदृशो देवानां यागः ? कीदृशमग्ने-र्होतृत्वम् ? यत्र निरहङ्कृतेः सम्पूर्णमात्मानमर्पितवतो विध्वस्तसर्वसङ्कल्पस्य महज्जिगमिषोर्मौनिनः शरीरं प्रत्यवतरन्त्यो दिव्याः शक्तयः स्वयं महान्तमात्मानं यजन्ते स देवानां यागः । तत्र चान्तराविर्भूतविलक्षण शक्तित्वादाविर्भूतवदुपचरितस्यान्तरात्मापर-पर्यायस्य वैश्वानरस्याग्नेर्देवानां ह्वातृत्वमेव होतृत्वम् । पुण्यपाकवशा-दन्तस्तादृशे यागे समारब्धे प्रादुर्भूतेन वैश्वानरेणाहूता देवता स्वस्वशक्त्या शरीरं प्रत्यवतरेदिति महतामृषीणामनुभवः । एतच्चोत्तरत्र साक्षात्तदभि-धायकेषु निगमेषु प्रपञ्चयिष्यामः ।

रत्नधातमम् - रत्नानां श्रेष्ठवस्तूनामतिशयेन धातारम् । अग्निं प्रसिद्धं पार्थिवं तेजः । ईळे स्तौमि । होत्रा प्रयोज्यत्वान्मन्त्रस्य होताऽत्र कर्तेत्येके । नैषा युक्तिः । न केवलं होत्रा प्रयोज्योऽयं मन्त्रः । अध्येत्रा च ब्रह्मयज्ञे प्रयुक्तो भवति । उपासकेन च जपे प्रयुक्तो भवति । ऋषिरेव कर्तेति युक्तम् । तस्य हि वाक्यं मन्त्रः । यस्य वाक्यं स ऋषिरिति हि तद्विदां दर्शनम्।

## मीमांसा (१)

अथात्रेयं मीमांसा भवति । उक्तोऽग्निः प्रकृतः चतुर्विधः । पार्थिवो ज्वलनो वागिन्द्रियं यज्ञोऽन्तरात्मा चेति । यत्पार्थिवो ज्वलनोऽग्निरुच्यते तदस्माकमवगतं प्रसिद्धेः । कथं वागिन्द्रियमग्निः ? कथं यज्ञः ? कथमन्तरात्मा ?

**अग्नेर्विभूतयः**

उच्यते । तेजसः सारभूतः कश्चिदणुरेव शरीरे वागिन्द्रियमित्युच्यते । तच्च दर्शितं छन्दोगानामुपनिषदि - "तेजोऽशितं त्रेधा विधीयते । तस्य तस्य यः स्थविष्ठो धातु तदस्थि भवति । यो मध्यमः स मज्जा । योऽणिष्ठः सा वाक् ।" इति । नन्वत्राविशेषात्तेज उक्तम् । न पार्थिवम् । यत्राविशेषात्तेज उच्यते तत्राद्यमान्तरिक्षं तेज एव ग्राह्यम् । आन्तरिक्षस्य तेजसो न पार्थिवेन कश्चिदस्ति सम्बन्धः । तस्माद्वागिन्द्रयमैन्द्रमेव वक्तव्यं नाग्नेयमिति चेत् । अस्तु सूक्ष्मत्वाद्वागिन्द्रियात्मकस्य तैजस-स्याणोः स्वरूपेणान्तरिक्षज्योतिः साम्यम् तथापि तस्य पार्थिवशरीर-सम्बन्धात्पार्थिवत्वं सिध्यति । वस्तुत आन्तरिक्षमेव ज्योतिः प्रकृतिः पार्थिवस्य स्थूलस्य च ज्योतिषः । तथा वागिन्द्रियस्यापि भवतु प्रकृतिः । तावता तस्य न पार्थिवत्वहानिः । एवं वागिन्द्रियं पार्थिवं ज्योतिः ।

तेजसः कर्मैव देवताप्रवणं यज्ञ उच्यते । होतुः शंसनमुद्गातुर्गानं च वाग्रूपस्याग्रेर्देवताप्रवणे कर्मणि । हविर्ग्रहणं भौतिकस्याग्रेर्देवताप्रवणं कर्म । एवं बाह्यो यज्ञोऽग्रेः कर्मात्मा । आभ्यन्तरो यज्ञस्तु वैश्वानरस्य सहजसन्ततज्ञानज्वालाकारा स्थितिः । तामेव सहजां स्थितिमाह भगवान् रमणः । तदेव भगवता कृष्णेनोक्तं स्थितप्रज्ञत्वम् । सा च ज्ञानज्वाला चिद्रूपाद्वैश्वानराद्व्यवहारमात्रेण भिन्ना । धर्मभूता चित्पूर्वा । धर्मिभूता चिदुत्तरः । शाखास्थानीया पूर्वा । मूलस्थानीय उत्तरः । अन्तर्यागो निश्चलज्ञानज्वालाकारो वैश्वानरस्यान्तरात्मनो विभूतिरित्युक्तं भवति ।

शारीरकस्य चिज्ज्योतिष एव वैश्वानरत्वाच्छरीरस्य चास्मदादीनां पृथिवीमयत्वाद्वैश्वानरः पार्थिवं ज्योतिर्भवति ।

असमासम्

ऋग्वेदमन्त्रभाष्यम्

# प्रथमं मण्डलम्

## प्रथमसूक्तस्य भाष्यम् (६)

### सूक्तम् (१)

अथातः संहिताक्रमेण दाशतयीर्व्याख्यास्यामः । तत्र प्रथमे मण्डले वैश्वामित्रस्य मधुच्छन्दस आर्षं दशसूक्तात्मकं प्रथमं दर्शनम् । तत्राद्यानि नवसूक्तानि गायत्राणि । दशममानुष्टुभम् ।

तेष्वग्निमीळ इति नवर्चं प्रथमं सूक्तमाग्नेयम् । तस्येयमृगाद्या भवति ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

पुरोहितवद्राज्ञो यज्ञस्याभीष्टसम्पादकत्वाद्यज्ञस्य पुरोहितोऽग्निरुच्यत इत्येके । अग्निर्हि यज्ञस्याभीष्टं होमं सम्पादयति । अत्रायं संशयः । यज्ञस्यैकमङ्गं होमः । अङ्गं चाभीष्टादन्यत् । एवं स्थिते कथं यज्ञस्याभीष्टसम्पादकोऽग्निः ? प्रागपूर्णाङ्गस्याङ्गं चाभीष्टं भवतीति चेत् प्रकृते नैषा युक्तिः साधिका पुरोहितौपम्यस्वारस्य शैथिल्यात् । यजमानेन निर्वर्तनीयस्य कार्यस्य सम्पादकत्वमेव हि पौरोहित्यं न तदङ्ग-सम्पादकत्वम् । यज्ञाभिमानिनो दैवतस्य होमोऽभीष्टं कार्यं स्यात्तेनोक्तार्थोऽनवद्य इति चेत् नैषा च युक्तिः । यज्ञाभिमानिनो दैवतस्य

होमः कर्मात्मैव भवति न तु तस्य कर्म । स हि यजमानस्यैव कर्म । पुरोहितेन निर्वर्तनीयं न यजमानस्याभीष्टमात्रम् । अपि तु तस्याभीष्टं विलक्षणं कर्म । यज्ञस्य सम्बन्धिनि पूर्वभाग आहवनीयात्मनावस्थित-त्वाद्यज्ञस्य पुरोहितोऽग्निरुच्यत इत्यन्ते । अयमर्थः सङ्गतः स्याद्यदि पूर्वभागमात्रेऽग्निः । स तु पश्चात् भागेऽपि विद्यते गार्हपत्यात्मना । दक्षिणभागेऽपि विद्यते दक्षिणात्मना । एवं स्थिते सङ्कोचेनोक्तिररम-णीया । अपि चास्मिन्पक्षे यज्ञशब्दो लक्षणया यज्ञभूमिपरो वाच्यः । यज्ञस्य दिशामभावात् । यास्कस्तु पुरोहितः पुर एनं दधतीति निर्वक्ति । पुरोऽग्रे हितः स्थापित इति सरलं निर्वचनम् । अस्य पदस्य योगरूढोऽर्थो लोके प्रसिद्धः । सति सम्भवे स एवात्र ग्राह्यः । कस्यायं पुरोहितोऽग्निः ? यजमानस्यैव भवतु । यथा यजमानस्यार्थे होता शंसति उद्गाता स्तौति अध्वर्युर्जुहोति एवमग्निर्हविर्देवान्नयति । नन्विदमार्त्विज्यम् । न पौरोहित्यम् । यदन्यस्यार्थोऽन्यः कार्यं करोतीति चेत् । नैतदुभयं सुतरां विभिन्नलक्षणम् । पुराहितोऽपि कर्माणि करोति याज्यस्यैवार्थे । पुरोहितं पुरोहितवत्कार्यनिष्पादकं सर्वस्य यजमानस्य देवेभ्यो हविः प्रापणेनेत्यधियज्ञमर्थः । अथाध्यात्मम् । पुरोहितं पुरोहितवत्कार्य-निष्पादकं सर्वस्य शरीरिणो भाषणकर्मणा । अग्निर्हि वाग्रूपः शरीरेषु ।

यज्ञस्य देवम् - देवमभिमानिनं पुरुषविधम् । देवाः पितरो मनुष्या इति पुरुषविधा एव हि व्यवह्रियन्ते । एतेनाचेतनस्तुतिवैयर्थ्यशङ्का वारिता ।

ऋत्विजं होतारम् - होतारं नाम ऋत्विजं देवानां यागे । अग्निर्वै देवानां होतेति ब्राह्मणमत्र भवति । कीदृशः स देवानां यागः कीदृशं तदग्नेस्तत्र होतृत्वम् ? यत्र सम्पूर्णमात्मानमर्पितवतो विध्वस्तसर्वसङ्कल्पस्य महज्जिगमिषोर्मौनिनः शरीरेऽवतरन्त्यो दिव्याः शक्तयः स्वयं

महान्तमात्मानं यजन्ते स देवानां यागः । तत्र चाविर्भूतशक्तित्वादाविर्भूत- वदुपचरितस्यान्तरात्मापरपर्यायस्य वैश्वानरस्याग्रेर्देवानां ह्वातृत्वमेव होतृत्वम् । पुण्यपाकवशात्तादृशे यागेऽन्तः समारब्धे प्रादुर्भूतेन वैश्वानरेणाहूता देवता स्वस्वशक्त्याऽवतरेच्छरीरं प्रतीति महतामृषीणामनुभवः । एतच्चोत्तरत्र साक्षात्तदभिधायकेषु निगमेषु प्रपञ्चयिष्यामः ।

रत्नधातमम् - रत्नानां श्रेष्ठवस्तूनामतिशयेन धातारम् । अग्निं प्रसिद्धं पार्थिवं तेजः । ईळे स्तौमि होत्रा प्रयोज्यत्वान्मन्त्रस्य होतात्र कर्तेति सायणः । नैषा युक्तिः । न केवलं होत्रा प्रयोज्योऽयं मन्त्रः । अध्येत्रा च ब्रह्मयज्ञे प्रयुक्तो भवति । उपासकेनापि जपे प्रयुक्तो भवति । ऋषिरेव कर्तेति युक्तम् । तस्य हि वाक्यं मन्त्रः । यस्य वाक्यं स ऋषिरिति तद्विद्भिरुक्तत्वात् ।

अथात्रेयं मीमांसा भवति । उक्तोऽग्निः प्रकृतः पञ्चविधः । वागिन्द्रियं यज्ञः पुरुषविधो देवोऽन्तर्यामी पार्थिवं ज्योतिश्चेति । यत्पार्थिवं ज्योतिरग्निरुच्यते तदस्माकमवगतम् । कथं वागिन्द्रियम्? कथं यज्ञः? कथं पुरुषविधः? कथमन्तर्यामी? नन्वस्माभिश्चतुर्विध एवाग्निरुक्तो न पञ्चविधः । यज्ञो हि साक्षान्नाग्निः । तदभिमानी देव एवाग्निरिति चेत् । नैतद्विचारसहम् । यो यस्याभिमानी देवो भवति स भावस्तस्य देवस्य काचिद्विभूतिरित्यभ्युपगन्तव्यम् । तस्माद्वागिन्द्रिययज्ञ-देवतान्तर्यामितत्त्वानामग्निविभूतित्वं भवता व्याख्यातव्यम् । अत्र ब्रूमः । तेजसः सारभूतः कश्चिदणुरेव वागिन्द्रियमित्युच्यते शरीरे । तच्च दर्शितं छन्दोगानामुपनिषदि - "तेजसोऽशितस्य त्रेधा विभागो भवति । तस्य यः स्थविष्ठो भागस्तदस्थि यो मध्यमः स मज्जा योऽणिष्ठः सा

वाक्" इति । नन्वत्राविशेषात्तेज उक्तम् । न पार्थिवम् । यत्राविशेषात्तेज उच्यते तत्राद्यमान्तरिक्षं तेज एव ग्राह्यम् । आन्तरिक्षस्य तेजसो न पार्थिवेन कश्चिदस्ति सम्बन्धः । तस्माद्वागिन्द्रियमैन्द्रमेव भवति नाग्नेयमिति चेत् । अस्तु वागिन्द्रियात्मकस्य तैजसस्य परमाणोः स्वरूपेणान्तरिक्षज्योतिः साम्यम् तथापि तस्य पार्थिवशरीरसम्बन्धात् पार्थिवत्वं केन वार्यताम् ? वस्तुत आन्तरिक्षमेव ज्योतिः प्रकृतिः पार्थिवस्य स्थूलस्य च ज्योतिषः । तथा वागिन्द्रियस्यापि प्रकृतिर्भवतु । तावता तस्य न पार्थिवत्वहानिः ।

तेजसः कर्मैव देवताप्रवणं यज्ञ उच्यते । होतुः शंसनमुद्गातुर्गानं च वाग्रूपस्याग्नेर्देवताप्रवणे कर्मणी । हविर्ग्रहणं भौतिकस्याग्नेः कर्म । एवं बाह्यो यज्ञोऽग्नेः कर्मात्मा । आभ्यन्तरो यज्ञश्च वैश्वानरस्य सहजसन्ततज्ञानज्वालायां निष्ठा । तदा ज्ञानज्वालाकारैव मतिः । तामेव सहजां स्थितिमाह भगवान् रमणः । तदेव भगवता कृष्णेनोक्तं स्थितप्रज्ञत्वम् । सा च ज्ञानज्वाला वैश्वानरान्नातिरिच्यते । वैश्वानरस्य चिद्रूपत्वात् । धर्मभूता चित्पूर्वा । धर्मिभूता चिदुत्तर इति विशेषः । शाखास्थानीया पूर्वा । मूलस्थानीय उत्तरः । अन्तर्यागः सुस्थज्ञानज्वालाकारो वैश्वानरस्य ज्ञातुर्विभूतिरित्युक्तं भवति ।

शारीरकस्य चिज्ज्योतिष एव वैश्वानरत्वाच्छरीरस्य चास्मदादीनां पृथिवीमयत्वाद्वैश्वानरः पार्थिवं ज्योतिर्भवति ।

असमासम्

# ऋग्वेदमन्त्रभाष्यम्

## भावबोधिका

# प्रथमं मण्डलम्

## प्रथमसूक्तस्य भाष्यम् (७)

### प्रथमोऽनुवाकः

### सूक्तम् (१)

अथातो भगवद्भिर्महर्षिभिर्दृष्टान् गभीरार्थान् मन्त्रान् ऋग्वेदे शाकलकाम्नाये प्रसिद्धान् वैदिकानां सतां बोधाय भावबोधिकया लघ्व्या वृत्त्या व्याख्यास्यामः ।

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।**
**होतारं रत्नधातमम् ॥ १॥**

यज्ञस्य देवताराधकस्य बाह्यस्याभ्यन्तरस्य च कर्मणः पुरोहितं पुरोहितवत्प्रवर्तकमित्यर्थः। बाह्ये सर्वस्य यजमानस्य आभ्यन्तरे सर्वस्यात्मार्पकस्येति सामर्थ्यात्सम्बन्धोऽध्याहार्यः। देवं द्योतमानं पुरुषविधं देवतात्मानम् । देवाः पितरो मनुष्या इति पुरुषविधा एव हि व्यवह्रियन्ते । होतारमृत्विजम् । होतारं नामर्त्विजम् । देवयाग इति शेषः । अग्निर्वै देवानां होतेति ब्राह्मणमत्र भवति । पक्वस्य मुनेः सर्वस्य शरीरे स्वभावतश्चलन्नन्तर्याग एव देवयाग उच्यते। तत्रास्माकमन्तरोऽग्निरेव दिव्यशक्तीनां ह्वातेति रहस्यम् ।

रत्नधातममतिशयेन श्रेष्ठवस्तूनां धातारम् । अग्निमग्रणीं बहिः पार्थिवज्वलनरूपेणान्तर्जीवरूपेण च स्थितं प्रथमम् । ईळे स्तौमि । अत्र ऋषिरेव कर्तृभूताहंपदार्थस्तद्वाक्यत्वान्मन्त्रस्य । अग्नेराध्यात्मिकाधिभौतिकस्वरूपयोर्देवतात्मना सह सम्बन्धो न केवलमभिमानवशात् । अपि तु देवतात्मनो माहाभाग्यप्रयुक्तात्तादात्म्यानुभवाच्च ॥ १॥

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**सदेवाँ एह वक्षति ॥ २॥**

पूर्वेभिः पूर्वैः । उत किं च । नूतनैः ऋषिभिः ईड्यः स्तुत्यः । सोऽग्निः । देवान् । इह यागे बाह्ये आन्तरे वा । आवक्षत्यावहतु । महावैभवानां देवानां स्वस्वशक्तिभिः सूक्ष्माभिरवतरणं दिव्ययोगिजनैकग्राह्यम् । तद्भक्तिमतां बहिर्यागे लेशतः विशेषतश्च पक्वानां मुनीनामन्तर्यागे च सम्भवति । पूर्वत्र यथाविधि समिद्ध आहुतोऽग्निरुत्तरत्र मानसाहङ्कारनाशेनान्तः स्वस्वरूपेणाभिव्यक्तो जीवश्च दिव्यशक्तीरवतारयत इति रहस्यम् ॥ २॥

**अग्निना रयिमश्नवत्पोषमेव दिवे दिवे ।**
**यशसं वीरवत्तमम् ॥ ३॥**

अग्निना करणभूतेन । दिवे दिवे प्रतिदिनम् । पोषमेव वर्धमानमेव । यशसं यशोयुक्तम् । वीरवत्तममतिशयेन वीरवन्तम् । वीरा अत्र वीरत्वगुणविशिष्टाः पुत्रभृत्यादयः । रयिं धनम् । अश्नवत् प्राप्नोति । उपासक इति शेषः ॥ ३॥

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥ ४॥

अग्ने! (त्वम्) अध्वरं हिंसारहितं यं यज्ञम् । विश्वतः सर्वतः परिभूर्व्याप्तः असि । स इत् स एव यज्ञः । देवेषु गच्छति । नान्य इति भावः ॥ ४॥

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरागमत् ॥ ५॥

होता । कविक्रतुः क्रान्तकर्मा बहिर्यागे क्रान्तप्रज्ञोऽन्तर्यागे । सत्यः कालत्रयेऽप्यबाध्य आत्मरूपः । चित्रश्रवस्तमोऽतिशयेन चित्रकीर्तिः । अग्निर्देवः । देवेभिर्देवैः सह । आगमदागच्छतु । देवानानयत्विति भावः ॥ ५॥

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमङ्गिरः ॥ ६॥

अङ्ग अग्ने । हे पार्थिव देव । त्वम् । दाशुषे समर्पकाय । यत् भद्रं मङ्गलम् । करिष्यसि । अङ्गिरः हे अङ्गिनां रस । तत् तन्मङ्गलं । तव इत् तवैव । सत्यम् न तत्र संशय इत्यर्थः ।

देवतात्मनाऽग्निना दत्तं कर्मफलं जीवात्माऽग्निर्भुनक्तीति देवजीवयोरभेदमेवं मन्त्रश्चमत्कृत्य वदति ॥ ६॥

**अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।**
**स इद्देवेषु गच्छति ॥ ४॥**

अग्ने ।(त्वम्) अध्वरं ध्वरो हिंसा तद्रहितं । यं यज्ञम् । विश्वतः सर्वतः । परिभूः असि व्याप्तो भवसि । सः इत् स एव यज्ञः । देवेषु देवान् । गच्छति प्राप्नोति देवान् प्रीणातीत्यर्थः ।

प्राच्यादिचतुर्दिगन्तेषु आहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्ने सद्भाव एव विश्वतो व्याप्तिरिति सायणः। तस्मिन्पक्षे नित्ययज्ञानाम् असञ्ज्ग्रहः ।सोमयागेषु च न कस्यचित् परिहारः । भौतिकज्वालाभिः समर्प्यमाणस्य हविषः । निजेनैन्द्रियकतेजसोच्चार्यमाणानां मन्त्राणामात्मनस्तेजसा समर्प्यमाणस्य मनसश्च व्याप्तिरग्नेर्यज्ञे विश्वतो व्याप्तिरिति वयं मन्यामहे।

यज्ञस्य हिंसारहितत्वं च पशुहिंसा रहितत्वमेवेति ऋजुरर्थः । आचार्यसायणोऽप्यध्वरशब्दस्य हिंसारहितमित्येवार्थं गृह्णाति । तथापि तस्य तात्पर्यमन्यत् । तस्य मते हिंसा न पशुहिंसारूपं कर्म । अपितु राक्षसादिकृता यज्ञस्यैव हिंसा । "न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति।" इति तदुक्ता यज्ञस्याध्वरत्वोपपत्तिः प्रकृते । मन्त्रे स एवार्थश्चेदुद्दिष्टः अध्वरशब्दस्योद्देश्यविशेषणत्वं वाक्यसम्प्रदायविरुद्धम् । यं यज्ञमग्निर्विश्वतः पालयति सोऽध्वरो भवतीति तर्हि वाक्यं स्यात् । मन्त्रे तु अग्नेर्विश्वतो व्याप्तेः प्रागेव सिद्धं यज्ञस्याध्वरत्वमनूद्यते । तस्मात्पशुयागप्रशस्त्यरक्षणायैव तत्र भवानीदृशं पन्थानमवलम्बितवानिति वक्तव्यम् ॥ ४॥

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरागमत् ॥ ५॥

होता । कविक्रतुः क्रान्तप्रज्ञः स्वायत्तीकृतप्रज्ञ इत्यर्थः । सत्यः आत्मस्वरूपः । चित्रश्रवस्तमः अतिशयेन चित्रकीर्तिः । अग्निः । देवः । देवेभिः देवैः सह । आ गमत् आगच्छतु ।

अग्नेर्देवानामानयनेन देवैः सहागमनं व्याख्यातम् । देवयजनभूमावग्नेः सन्निधानं चात्र प्रार्थ्यत इति विशेषः ॥ ५॥

असमाप्तम्

ऋग्वेदमन्त्रभाष्यम्

# इन्द्रगायत्रीभाष्यम्

अथातो माधुच्छन्दसीमिन्द्रगायत्रीमेकां व्याख्यास्यामः ।

**इन्द्रायाहि चित्रभानो सुता इमे त्वायवः ।**
**अण्वीभिस्तना पूतासः ॥ (ऋग्वेदः १.३.४)**

हे चित्रभानो चित्रकिरण । इन्द्र । आयाहि । अण्वीभिरङ्गुलिभिः । सुता अभिषुताः । तना नित्यं देशकालादिनिरपेक्षमिति यावत् । पूतासः पूताः । त्वायवस्त्वां कामयमानाः । सोमाः । इमे भवन्तीति शेषः । सिद्धाः परिदृश्यन्त इति यावत् । एतेनाह्वानहेतुरुक्तः । हे इन्द्र सिद्धांत्सोमात्पातुमायाहीति तात्पर्यम् ।

कोऽयमिन्द्रः यमाह्वयते सोमं पातुम् । अत्र शब्दस्याक्षरार्थमधिकृत्य यास्को वदति ।

"इन्द्र इरां दृणातीति वा । इरां ददातीति वा । इरां दधातीति वा । इरां दारयत इति वा । इरां धारयत इति वा । इन्दवे द्रवत इति वा । इन्दौ रमत इति वा । इन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धंस्तद् इन्द्रस्येन्द्रत्वमिति विज्ञायते । इदं करणादित्याग्रायणः । इदं दर्शनादित्यौपमन्यवः । इन्दतेवैश्वर्यकर्मणः । इच्छत्रूणां दारयिता वा ।

द्रावयिता वा। दरयिता वा यज्वनाम् ।" इति । एषु पक्षेष्वाद्याः सप्त त्रयोऽन्त्याश्च केवलो नैरुक्तानामूहप्रपञ्चः । समन्वयादनुपहसनीया अपि प्रबलप्रमाणरूढिपुरःसरैरन्यैः पक्षैरेते पश्चात्क्रियन्ते ।

स्थितेषु चेन्धे भूतानीति प्रथमः पक्षः। अत्र च – "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष" इति वाजसनेयिनां रहस्यब्राह्मणं प्रमाणं भवति । ननु तत्राक्षिपुरुषः प्रस्तुतः । अयं च देवताविशेषो यस्मै सोमं निवेदयति । नैतद्विशेषकं भवति । तथा हि । या देवता सोमं पातुमाहूयते सैवाक्षिस्थानमाश्रित्य च महिम्ना वर्तते । तेन चावस्थानविशेषेण प्रकाशयति भूतानि । साक्षिणा ह्यन्तरेण प्रकाश्यते लोकः । उपनिषच्च साक्षादक्षिपुरुषस्य देवत्वमाह । परोक्षप्रिया इव हि देवा इति न चाक्षिपुरुषस्य केवलस्येन्द्रपदव्यवहार्यत्वमस्ति । य इन्द्रपदेन रूढ्या व्यवह्रियते स एवात्र लक्षीक्रियते । यदाह – "तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षत" इति । तस्मात् प्रसिद्धेन्द्र एवाक्षिपुरुषरूपोऽपीति वक्तव्यम् । तदेतत्सर्वमनुसन्धायैवाचार्येण "इन्धे भूतानीति" वेति पक्षश्च स्वीकृतः । नन्वपरो विरोधः । साक्षिणं पुरुषमक्षिमण्डलस्थं परमादव्यतिरिक्तं वदन्ति वेदान्ताः । इन्द्रश्चावरो यः सोमं पातुमाहूयते । एवं स्थिते कथमिन्द्र एवाक्षिमण्डलस्थ इत्युच्यते ।

शृणु सखे । यद्यपीन्द्रः कार्यः । तथापि जगतोऽध्यक्षः परमस्य विवर्तो महानाधिकारिकः पुरुषः । अयं च नव्यानां वेदान्तिनां भाषायां कार्यब्रह्म नाम । सगुणब्रह्मनामा वा भवति । "एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे" इत्यन्यत्र निगमो भवति । स च हिरण्मयः पुरुषः "इन्द्रो वज्री हिरण्मय" इत्यन्यत्र निगमात् । स एव सूर्यमण्डले पुनः

प्रतिबिम्बितोऽक्षिमण्डले च । परमात्मन एवावस्थानं त्रिरूपत्वेनेति न कश्चिद्विरोधः ।

"तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्व" मिति द्वितीयः पक्षः । उदाहृतं चेदं वचनं ब्राह्मणं साक्षाद्भवति । इध्यत इतीन्धः । इन्ध एवेन्द्र इति व्युत्पत्तिरत्राश्रयणीया । के प्राणैः समैन्धदेनम् । पृथिव्यादीनि भूतानीति ब्रूमः । पृथिव्यादीनि हि भूतानि स्वस्वसारभूतैर्मनःप्रभृतिभिः प्राणैर्जीवेनात्मना विश्वहृदयप्रविष्टमिमं प्रकाशयन्ति । वयं हि प्राणवन्तमेव सान्तरात्मानं जानीमः ।

इदं करणादिन्द्र इति तृतीयः पक्षः । स एष आग्रायणस्याचार्यस्य सम्मतः । इदं करोतीतीदङ्करः । इदङ्कर एवेन्द्र इत्यस्मिन्पक्षे व्युत्पत्तिः । पूर्वयोः पक्षयोर्वर्णादेशवर्णागमौ । अस्मिन्पक्षे वर्णविपर्यय वर्णलोपौ । ननु पर एवास्य कर्ता वक्तुमिष्टो वेदान्तिनाम् । न कार्यः । तस्य सोपाधिकत्वेन भूतेभ्योऽपि कनिष्ठत्वात् । सत्यम् । तत्र भवानाचार्यस्तु त्रिवृत्कृतस्य विश्वस्य परिदृश्यमानस्य कर्तारमेव लक्षीकरोति । नाव्यक्तानां भूतसूक्ष्माणाम् । तस्मात्समर्थनीय एव भवति । यद्यप्यस्मिन्निर्वचने शब्दं प्रमाणं रूढिर्वा नास्ति । तथापि जगदध्यक्षानुमित्यनुकूलमिदं निर्वचनम् । अपि च नामार्थो वाच्यस्य लक्षणं चेद्भवति तस्य सुमहद्गाम्भीर्यं स्यात् । लक्षणं चाध्यक्षस्य परिदृश्यमानस्य जगतः कर्तृत्वम् ।

इदं दर्शनादिन्द्र इति चतुर्थः पक्षः । अत्र च "स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमिति । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र

इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ।" इत्यैतरेयारण्यकग्रन्थः प्रमाणं भवति । स एष पक्ष औपमन्यवस्याचार्यस्य सम्मतः । तस्मादिदन्द्रो नामेत्यत्र शङ्करभगवत्पादस्तु तात्पर्यमेतदाहुः । इमं परमात्मानं पश्यति जीवः प्रकृतः स्वात्मतया दृश्यते साक्षादपरोक्षादिति परमात्मेदन्द्र इति वा तेषां नयः । यद्यप्येष भावो विदुषां सम्मतः सामान्यतः । तथापि वाक्यं प्रकृतं तमेतमर्थं क्लिष्टतयैव सूते । अन्योऽस्त्यर्थः । यो विदुषां सम्मतः स्यात् । यश्च क्लिष्टकल्पनाविरहितः । योऽपश्यत्स एवेदन्द्रः । "स एतमेव पुरुषं ब्रह्मततममपश्य-दिदमदर्शमिति" इति प्रकृतस्यानुप्रविष्टस्यैवादर्शमित्यनेनान्वित-त्वादिदन्द्रशब्दार्थस्य तस्यैव भवितुमर्हत्वात् । न चाभीप्सितहानि-रेवम् । सोऽनुप्रविष्टः । एतमेव पुरुषं स्वात्मानमेवानुप्रविष्टं ततमं व्याप्ततमं ब्रह्मापश्यदित्यर्थे पूर्वार्थस्यैव भङ्ग्यन्तरापन्नत्वात् । कोऽनयोर्विशेषः । यः परमात्मा शरीरानुप्रविष्टेन स्वात्मतया दृष्टः स इन्द्र इति पूर्वोऽर्थः । यः शरीरानुप्रविष्टः स्वात्मानं ब्रह्मरूपमपश्यत्स इदन्द्र इत्युत्तरोऽर्थः । भगवत्पादानां चेन्द्रशब्दार्थे न कश्चिदाग्रहः । शुद्धानुप्रविष्टयोरभेद-निरूपण एव तेषां प्रयत्नः । स द्वितीयेऽप्यर्थे सफलो भवेद्वाक्यार्थश्च ऋजुः स्यादिति क्षमन्तामत्रास्मानाचार्यानुयायिनः । वस्तुतस्तु द्वितीयोऽर्थ एव सङ्गतः । इन्द्रपदेन कार्य एव व्यवह्रियते मन्त्रब्राह्मणयोः प्रायः । लोके च तदनुसारेणैवेन्द्र इत्याचक्षत इति वाक्यावयवो व्याख्यातुम् उचितः । परोक्षप्रिया इव हि देवा इति देवपदं चाधिकारिकपुरुषपरमत्र परब्रह्मपरत्वेन योजयितुं क्लिष्टा रीतिराश्रयणीया । इन्द्रस्य शरीरानुप्रविष्ट-परत्वेन नास्माकं किमपि प्रातिकूल्यम् । शरीरं च समष्टिव्यष्टिभेदादुभय-विधं चात्र कथयितव्यम् । स जातो भूतान्यभिव्यैख्यदिति भूतनामरूपव्याकरणस्य समष्टिशरीरानुप्रविष्टकार्यत्वात् । तदनुसृत्य व्यष्टिशरीरानुप्रविष्टस्य नामरूपव्याकरणं तु भवति । अनुप्रविष्टसामान्यस्य

प्रकृतत्वाच्च । अस्मिन्नेव द्वितीयेऽर्थे औपमन्यवः प्राचीनतम आचार्यः सङ्गच्छते । इदं दर्शनादिन्द्र इत्यत्र दर्शनस्य कर्तैवेन्द्र इति व्याख्यातुं हि शक्यते ।

इन्दतेर्वैश्वर्यकर्मण इति पञ्चमः पक्षः । अत्र बलीयसी रूढिर्वर्तते । इन्द्रे श्वरशब्दौ तुल्यार्थौ शब्दशास्त्रमर्यादया लोकव्यवहारदृष्ट्या च । तौ सोपपदौ परिच्छिन्नार्थौ भवतः । यथा नरेन्द्रो नरेश्वरो वा राजा मृगेन्द्रो मृगेश्वरो वा सिंहः । निरुपपदौ तु जगदध्यक्षपरावेव भवितुमर्हतः । तयोः प्राचीनानां भाषायामिन्द्रपदं व्यवहारे मुख्यमासीत् । नव्यानां भाषायामीश्वरपदं मुख्यं वर्तते । सोपपदयोरुभयोरर्थं तुल्यं येऽङ्गी-कुर्वन्ति ते निरुपपदयोस्त्वर्थभेदं कल्पयितुं प्रयतन्ते । एतदेवाश्चर्यम् । एतदर्थक एव बादरायणादिभिः प्रयुक्तोऽध्यक्षशब्दः । एतेन प्रभुविभूशब्दौ च व्याख्यातौ भवतः । प्राचां भाषायामनिन्द्रा अधुनातनानां भाषायां निरीश्वराः । "ईश्वरोऽस्ति । विश्वासः कार्यः ।" इत्यधुनातनानामास्तिकानां वाग्धोरणी । "इन्द्रोऽस्ति । श्रद्धा कार्या ।" इति प्राचाम् । "श्रदस्मै धत्त सजनास इन्द्रः" इत्यत्र तदेतन्निपुणं निरूपितम् । इन्द्रस्य जगदीश्वरत्वप्रतिपादकानि मान्त्रवर्णिकानि प्रमाणवाक्यानि बहून्युत्तरत्र व्याख्यायेरन्निति नात्र तानि प्रदर्श्यन्ते । एवं पञ्चापि मुख्यतमा इन्द्रपद-निर्वचनपक्षास्तुल्यमादर्तव्याः सङ्ग्रहेण निरूपिताः । आदावेतावद्भूमः । जगतोऽध्यक्षः परिदृश्यमानस्य सावयवस्य जगतः कर्ता प्राज्ञः सर्वसाक्षी चित्तादिनिखिलप्राणशक्तिमान्पुरुष इन्द्रः ।

अथान्या मीमांसा भवति । किं निजेन स्वरूपेणायाहीति प्रभुराहूयते । उताहो वेदिस्थं पावकमावेष्टुम् । आहोस्विदाह्वानं भाक्तम् । नाद्यः । सर्वेष्वपि यागेषु सर्वेऽप्येवमाह्वयन्ते । न क्वापि प्रभुर्निजरूपेणागत्य

सोमं पीतवानिति शृणुमः । हव्यवाहत्वमग्निश्चैवं माभूत् । एवं चेदस्तु द्वितीयः । अयि सोऽपि न सङ्गच्छते । आह्वानात्पूर्वं यादृशोऽग्निः आह्वानात्परतश्च तादृश एव दृश्यते । यदि तमाविष्टः स्याद्देवः । केनाप्यावेशलिङ्गेन भवितव्यम् । तच्च न प्रत्यक्षम् । केवला श्रद्धातूपन्यस्यमाना सत्यचर्चावसरेषु न शोभते । प्रमाणबलादग्निं हव्यवाहं ब्रूम इति चेत् । कृतमिन्द्रस्याह्वानेन । अग्निरेव प्रार्थ्यतां सोमं वोढुमिन्द्राय । एवं चेदस्तु तृतीयः पक्षः । तथा सिध्येदर्थः । अन्यास्त्यापत् । आह्वानं चेद्भाक्तम् । आगमनं पानं च भाक्ते स्तः । अधुनातनानामन्ननिवेदनवत्पर्यवस्येत्सोमनिवेदनम् । एवं चेन्मास्त्वग्निः । सङ्कल्पो हि ते फलदः ।

अत्रोच्यते । विराड्रूपस्य विभोरग्निरेवान्नादनस्य करणभूतः स्यात् । यो मण्डलान्तर्वर्ती पुरुषः ब्रह्माण्डे सर्वमप्यात्मीयकरणत्वेन मनुष्यो निजावयवानि वोपयोक्तुमीष्टे । अग्निशब्देन सूर्यस्यापि ग्रहणम् । वैश्वानरस्य सङ्ग्रहस्तु न पृथग्वक्तव्यः । तेजः सामान्यवाचक एवाग्निशब्दोऽत्रास्माभिरुपयुक्तः । इदमुक्तं भवति । यत्सूर्येण शोष्यते यदग्निना दह्यते यच्च वैश्वानरेण पच्यते तस्य सर्वस्यापि समष्टिदृष्टौ प्रभुरेव भोक्ता । एतेन वाय्वादि निगूढविद्युत्पाकोऽपि व्याख्यातः । व्यष्टिदृष्ट्या पामरो व्यवहरति । अग्नौ किमपि प्रक्षिपन्तीति । समष्टिदृष्ट्या पण्डितो व्यवहरति । अग्निमुखेन भोक्तुं हविरीश्वराय दीयत इति । यस्य यावद्विज्ञानं तस्य तावती वाक् । पामरव्यवहारसंवादिनी नेति न पूर्वेषां दीर्घदृशामृषीणां वागुपहसनीया । नन्वेवमस्तु । तथा सति कृतं कर्मभिः । भुनक्त्येव स्वयमीशः । तस्य कियन्नाम यज्वभिरर्पितम् । अपि चान्नपाचकोऽपि ज्वलन इन्धनदानाद्यज्वास्यात् गृहदाहकोऽपि ज्वलने गृहसमर्पणाद्यज्वा स्यात् । तात विचित्रस्तवोपन्यासः ।

शृण्ववहितः । येन पाचकदाहकादयोऽयज्वान एव स्युः । य एकस्मै दददेकतोऽन्नमन्यतस्ताडयेत्स किं तस्याराधकः स्यात् । य एकस्मै दददन्नं तेन निजं कर्म कारयेत्स वा किं तस्याराधकः स्यात् । उद्देशश्च सर्वेषु कार्येषु मुख्यो भवति । तस्माद्यथाऽन्यस्य बाधा न भवति यथा च स्वार्थः कश्चिदपि देवानुग्रहजादन्यो न तत्र स्यात् । तथा परमेश्वरायास्त्विति क्रियमाणं जातवेदसि हविषो दानं विभोराराधनाय भवति । यथा प्रतिफलनिरपेक्षं भक्त्या दत्तमन्नमतिथेः गृहदाहकः समष्टिजीवस्य भगवतोंऽशभूतानां बहूनां व्यष्टिजीवानां हिंसायै भवति । पाचकस्तु परमेश्वरस्य विभूत्याऽग्निना निजं पाकरूपं कर्म साधयति । तस्मान्नैतावेतादृशो वाऽन्यो यज्वपदार्हाः उद्देशविरहश्चैषामयज्वत्वे हेतुरितरनन्वन्या तवापत्तिः । पशुना ये यजन्ते ते पशोर्हिंसायै भवन्ति । ते कथं यज्वानः । सत्यं त्वयोदितम् । नात्रास्याश्चर्चायाः समयः । वयं च मन्त्रान्व्याख्यातुमुद्यताः । यत्र क्वापि मन्त्रे पशुसमर्पणलिङ्गं यदि स्यात् तदाऽस्माभिः समाधेयम् । न वयमत्र तत्प्रकृत्या प्रस्तुमः । अस्ति बह्वन्यद्वक्तव्यमस्माकम् । अप्रस्तुतप्रसङ्गेन पाठकान्न श्रान्तान्कर्तुमुत्सहामहे ।

ननु सिद्धमग्निना मुखेन विभुर्भुनक्ति दृष्टप्रतिफलनिरपेक्षेण सता दत्तमिति ।

तत्र मन्त्राः किमर्थाः ? विधयः किमर्थाः ? भावः केवलो हि फलदः । सत्यम् । तथापि नियमाः स्वल्पाभ्युदयाय श्रद्धायै च भवन्तीति मन्त्राश्च विधयश्च ।

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिरिन्द्रगायत्रीभाष्यं समाप्तम् ॥

## ऋग्वेदमन्त्रभाष्यम्

# अग्निसूक्तभाष्यम्

अथातो भगवतः शक्तिपुत्रस्य पराशरस्यार्षं नवसूक्तं द्वादशमनुवाकमाग्नेयं व्याख्यास्यामः । तत्राद्यानां सूक्तानां द्विपदाविराट् छन्दः । अन्त्यानां त्रयाणां त्रिष्टुप् । षष्ठे सूक्त एकस्मिन्नैकादश ऋचः शेषेषु प्रतिसूक्तं दश दश ऋच इति सर्वोऽयमनुवाक एकनवतिमन्त्रो भवति ।

तत्र प्रथमस्य सूक्तस्येमे प्रथमा द्वितीये भवतः । -

**पश्वा न तायुं गुहा चतन्तं**
**नमो युजानं नमो वहन्तम् ॥ १॥**

**सजोषा धीराः पदैरनुग्मन्**
**उप त्वासीदन्विश्वे यजत्राः ॥ २॥**

**भाष्यम्** उक्तमस्माभिः प्राक् भगवानग्निराध्यात्मिकाधिदैविकाधिभौतिकैः स्वरूपैस्त्रिविधः । प्रथमं स्वरूपं पुनर्द्विविधं पार्थिववाग्जीवभेदात् । द्वितीयं च स्त्रीपुंभेदादिति । तेषु विभूतिप्रभेदेषु वैश्वानराख्यं जीवस्वरूपमग्नेरत्र प्रायः प्रस्तूयते ।

अथ प्रकृतं मन्त्रयोर्युग्मस्याक्षरार्थमनुसरामः । गुहा गुहायामिव गुहायां,

पर्वतगुहोपमानतस्करपक्षे, शरीरान्तर्गुहोपमेयाऽग्निपक्षे । पश्वा पश्वेव पश्वा, तस्करपक्षे पशुर्गौः, अग्निपक्षे पशुर्वाक्, पश्यति पश्यन्त्या वृत्त्येति पशुरुच्यते वाक्, गवेव स्थितया वाचा सहेति यावत् । चतन्तं गच्छन्तं प्रविष्टमिति यावत् । वाक्यपरैवात्र ग्राह्या । तस्या एव तेजोऽणिष्ठसारात्मकवस्तुत्वात् । पश्यन्तीमध्यमावैखर्यस्तु तद्वृत्तिविशेषा एव हि भवन्ति । परायाश्च स्थानं मूलाधारमाचक्षते । वैश्वानरस्यात्मनस्तु हृदयमधोमुखम् । तस्करोऽपि गुहायां गूढः स्वयं गुहामध्ये तिष्ठेत् । अपहृतां गां च स्वस्य पृष्ठतो बध्नीयात् । एवमिहापीति स्वारस्यम् । नमः अन्नं, युजानं युञ्जानं किरणोष्मणा पचनाय कुक्षिस्थानमन्नम् आविशन्तमित्यर्थः । नमः अन्नं, वहन्तं सर्वशरीराय प्रापयन्तं, अन्नस्य सार एवात्र नमः शब्देन विवक्षितः ॥ १॥

त्वा त्वाम्, सजोषाः सहवासिनः, धीराः धीमन्तः, विश्वे सर्वे, यजत्राः देवाः, यागार्हत्वाद्यजत्रशब्देन हविर्भाजो देवा उच्यन्ते । पदैः लक्षणैः, जडस्य शरीरस्य गर्भावस्थायां स्थितस्य सचेतनचेष्टारूपैः । विज्ञायेत्यर्थादाक्षिप्यते । अनुग्मन् अन्वगमन् अनुप्राप्ता इति यावत् । अनुप्राप्य च उप समीपे, सीदन् आसीदन्, निषण्णा इति यावत् । शरीरे जीवरूपस्य वैश्वानरस्य प्रवेशादनन्तरं सोमसूर्यादयो देवाश्च मनश्चक्षुरादिरूपेण प्रवेशमकुर्वन्निति भावः ।

आयुर्वेदज्ञेषु केचन कुक्षौ पाचकं पृथगग्निं कल्पयन्ति। तेषु सूक्ष्मदर्शिन-स्तु कुक्षिस्थ ऊष्मैव पाचक इति भणन्ति । स च वैश्वानरकिरणजादूष्मणो नातिरिच्यते। छन्दोगानामुपनिषदि वैश्वानरविद्यायां वैश्वानरस्यात्मत्वेन प्रस्तावश्चेममर्थं समर्थयति । अस्मिन्विषये सम्भाव्याः पूर्वपक्षाः सर्वे नौधसदर्शनभाष्य एवास्माभिः परिहृताः । तस्मान्न भ्रमितव्यं

जीवात्मनोऽन्यो वैश्वानरः पाचकोऽग्निरिति । (पूर्वपक्षः) अथ सखे ! यदि वाक् अग्नेरेकं रूपमभविष्यत्, तर्हि अग्निर्द्विधाऽऽत्मानं कृत्वा गुहां प्रविष्ट इत्यवक्ष्यत् । वाचा सहेत्युक्तिरग्नेर्वाचं सुतरां भिन्नां व्यञ्जयति । तच्च तवानिष्टमिति चेत् । (उत्तरपक्षः) नैष दोषः । विभूतिभेदविवक्षया हैरण्यस्तूपे दर्शने सवितृसूर्ययोरिवात्र वाग्वैश्वानरयोर्भेदेन व्यवहारो भवति ॥ २॥

तृतीयेऽयं भवति ।

ऋतस्य देवा अनुव्रतागु-
र्भुवत्परिष्टिर्द्यौर्न भूमः ॥ ३॥

भाष्यम्

अनुव्रताः अनुजीविनः, देवाः, ऋतस्य वैश्वानरस्याग्नेः, अग्निर्वा ऋतमिति ब्राह्मणमत्र भवति । ऋतस्येति सम्बन्धषष्ठ्या प्रकृतमग्नेः स्थानं शरीरान्तगुहाऽऽक्षिप्यते । तां गुः अगुः, प्रापुरिति यावत् । एवमेतेन पादेन भङ्ग्यन्तरेण पूर्वोक्तमनूद्य कञ्चिद्विशेषम् आह । परिष्टिः अन्वेषणं, भुवत् अभूत् । तच्च देवकर्तृकं वैश्वानरकर्मकं प्रकरणात् । स्व स्व चिन्तनदर्शनादिरूपा शक्तिः कुतो मूलादायातीति विचार एव मनश्चक्षुरादिरूपाणां देवानां वैश्वानरान्वेषणं भवति । अथ परिष्टेः फलपर्यन्ताया एव विवक्षा । अतः अन्वेषणानन्तरं देवा अग्निं वैश्वानरं प्राप्नुवन्नित्यर्थाल्लभ्यते। तदनन्तरं भूम भूमिः पार्थिवं शरीरं प्रकरणात् । द्यौर्न स्वर्ग इव, आनन्दविज्ञानाद्यतिशयात्स्वर्गतुल्यं भवतीति यावत् ।

मानवेषु ये भवन्ति योगिनस्तन्मनश्चक्षुरादिरूपदेवकर्तृकं तदन्तरात्म-

भूतवैश्वानरकर्मकं मार्गणमेवात्र प्रस्तुतम् । तादृशान्वेषणाश्रयभूत-शरीरस्योत्तरवाक्ये स्वर्गसादृश्यप्राप्तिवर्णनात् ॥ ३॥

चतुर्थीयं भवति ।

**वर्धन्तीमापः पन्वा सुशिश्विमृतस्य**
**यो ना गर्भे सुजातम् ॥ ४॥**

**भाष्यम्** ऋतस्य विज्ञानस्य, विज्ञानमपि ऋतमुच्यते, एतदस्माभि-र्माधुच्छन्दसदर्शनभाष्ये (१. २. ८) सुष्ठु निरूपितम् । यो ना यो नौ स्थाने, यतो विज्ञानमुत्पद्यते तद्विज्ञानस्य स्थानं, यद्विज्ञानप्रतिबिम्बग्राहकं, विज्ञानसञ्चारस्थलं वा तदपि विज्ञानस्य स्थानम् । अत्र द्वितीयमेवाभिप्रेतम् । गर्भे शुक्रशोणितसम्भवे, गर्भस्य पितृविज्ञानप्रतिबिम्बग्राहकत्वादृतस्थानत्वं सुजातं सुष्ठु अभिव्यक्तं सर्वव्यापकस्याप्यात्मनः क्वचिदेवोपाधिबलाद्धीस्फूर्त्या तत्र जातत्वं लक्षणयोच्यते । पन्वा स्तुत्या, उपलक्षितम् । बन्धूनां कुलाभिवृद्धि-सन्तोषात् देवानां च भौतिकपाकफलदर्शनहर्षात् इति प्रकरणोचितः सम्बन्धः सुशिश्विं शोभनं शिशुं, शिशुरेव शिश्विरुच्यते । ईं वैश्वानरमग्निं, आपः वर्धन्ति वर्धयन्ति । मातृभक्षितान्नसाररूपा इति दैवरातो गजाननः । उपाधिभूतश्रेष्ठप्राणात्मिका इति भारद्वाजः कपाली । अपां सारो हि श्रेष्ठः प्राणः । आद्ये पक्षे वर्धकत्वं साक्षाद्धात्रीवदपाम् द्वितीयस्मिन्वर्धकत्वमुपचरितार्थं शक्तिविजृम्भकत्वे । नन्वाद्येप्युप-चरितार्थं, अग्नेर्वृद्धिक्षयाभावात् । न । विशिष्टाभिप्रायेण तत्सम्भवात् ।

अन्यथाऽपि व्याख्यातुं शक्येयमृक् । ऋतस्य योना विज्ञानस्थानभूते

गर्भे देहमध्ये, सुजातं सुष्ठु अभिव्यक्तं, सुष्ठु अभिव्यक्तिश्च योगबलहेतुको महिमा । पन्वा स्तुत्या माहात्म्यदर्शनविस्मितानां जनानामिति सम्बन्धः । सुशिश्विं सुष्ठु शोभमानं ईं वैश्वानरं आपः वर्धन्ति । आप इत्यन्तरिक्ष नाम । अन्तरिक्षं हि सन्ततं शक्तिदानेन योगिनमनुगृह्णाति । तदेतद्रहस्यं योगिजनमात्रज्ञेयम् ।

ऋग्वेदमन्त्रभाष्यम्

# गृत्समदस्य 'गणानां त्वे' त्यादिसूक्ते
## १-१६ मन्त्राणां भाष्यम्

अथ देवताक्रमेण विभज्य ज्ञाननिधिमादिवेदं व्याख्यास्यामः । तत्र वेदस्य मन्त्रात्मकत्वान्मन्त्राणां च शब्दात्मकत्वाद्ब्रह्मणस्पतेश्च शब्ददेवतात्वादौचित्येन ब्राह्मणस्पत्यमादौ व्याख्यायते ।

भार्गवः शुनकपुत्रो गृत्समदो भगवानृषिर्ब्राह्मणस्पत्यानि चत्वारि सूक्तानि ददर्श । अयमृषिराङ्गिरसस्य शुनहोत्रस्यौरसो भार्गवस्य शुनकस्य कृत्रिमः पुत्र इति कात्यायनः । अस्त्यङ्गिरसः शुनहोत्रः षष्ठे मण्डले द्वयोः (३३, ३४) सूक्तयोर्द्रष्टा । "अयं हिते शुनहोत्रेषु सोम इन्द्रत्वाया परिषिक्तो मदाय" (२. १८. ६) इत्यत्रात्मनः शौनहोत्रत्वं गृत्समदेन सूचितम् । गृत्समदश्च शौनक इति प्रसिद्धिर्गोत्रप्रवरसूत्रेषु । उभयोः सामरस्यं सम्पादयति कात्यायनोक्ता कथा । परे तु "शुनकस्य शुनहोत्र इति नामान्तरम् । आङ्गिरसः शुनहोत्रस्तस्मादन्य एव भवति । यदि गृत्समदस्य पिता शुनहोत्र आङ्गिरसोऽभविष्यत्तर्हि स भृगुषु प्रवरर्षिर्नाभविष्यत् । शुद्धेषु भृगुषु शुनकानां प्रवरवरणं चतुर्धा दृश्यते । भार्गवशौनहोत्रगार्त्समदेति त्र्यार्षेयमेकम् । भार्गवगार्त्समदेति द्व्यार्षेयमपरम् । गार्त्समदेत्येकार्षेयमन्यत् । शौनकेत्येकार्षेयमितरत् । तत्र प्रथमः पक्षोऽस्माकं प्रकृतः । यत्र शुनहोत्रो द्वितीयः प्रवर ऋषिः । गृत्समदस्य कृत्रिमपुत्रत्वेन भार्गवत्वे सिद्धेऽपि शुनहोत्रस्य कथं तत्सिद्धिः ? यद्यन्यगोत्रस्य ऋषेरन्यगोत्रे प्रवरत्वेन गणनं तर्हि गोत्रस्य

मिश्रत्वं प्रसज्येत । तदा तद्गोत्रजानां गोत्रद्वयबान्धवत्वापत्तिः । न च गृत्समदानां द्विगोत्रेषु पाठो दृश्यते । तस्मादविश्वसनीयपौराणिककथाऽवलम्बनं कात्यायनस्य कथानकम् । शुनहोत्रापरपर्यायस्य शुनकस्य साक्षात्पुत्र एव गृत्समदः ।" इत्याहुः ।

गृत्समदस्यार्षेषु ब्राह्मणस्पत्येषु सूक्तेषु गणानां त्वेत्येकोनविंशत्यृचं प्रथमं सूक्तम् । (१- २३) जागतम् । पञ्चदश्यन्त्ये त्रिष्टुभौ ।

**गणानां त्वा गणपतिं हवामहे**
**कविं कवीनामुपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत**
**आनः शृण्वन्नूतिभिः सीद सादनम् ॥ १॥**

भाष्यम् ब्रह्मणः शब्दब्रह्मापरपर्यायस्य वर्णात्मकशब्दप्रकृतेर्व्यापकप्रणवस्य । पते प्रभो । गणानां मरुताम् । गणपतिं गणस्य समूहस्य पतिं प्रथमो गणशब्दो मरुन्नामकदेवतावाचकः द्वितीयः समूहवाचक इति न पुनरुक्तिः । कवीनां क्रान्तदर्शनानां मध्ये । कविं क्रान्तदर्शनं उत्कृष्टत्वद्योतनाय पुनर्वचनम् । उपमश्रवस्तमम् उपममुपमानभूतं श्रवो यशो यस्य स उपमश्रवाः अतिशयेनोपमश्रवा उपमश्रवस्तमस्तम् । ब्रह्मणां मन्त्राणां ब्रह्मशब्दः प्रकृतावक्षरे मन्त्रेषु च वर्तते । ज्येष्ठराजं ज्येष्ठानां राजानम् ज्येष्ठानां मन्त्राणां राजानमिति यावत् मन्त्रः साधारणमन्त्रपरः ज्येष्ठो विशिष्टमन्त्रपरः पदमध्यस्थेन विशेषेण सामान्यस्यान्वयश्छान्दसः मनुष्याणां ब्राह्मणानां पतिरितिवदुपपत्तिः । त्वा त्वाम् । हवामहे आह्वयामः । वयमिति शेषः । नः अस्माकम् । शृण्वन्नाकर्णयन् आह्वानमित्यर्थाल्लभ्यते । ऊतिभिः रक्षाभिः सह । सदनं याज्ञिकानां नये यागभूमिम् योगिनां नये शरीरम् ।

आ सीद उपविश । सदनमित्यत्रादिस्वरदीर्घः संहितायां छान्दसः ।

ब्रह्मणस्पतिरक्षरदेवतेति प्रतिज्ञातम् । तदुत्तरस्यामृचि निरूपयिष्यामः । तत्सिद्धवक्तृत्वाऽस्यामृचि कर्तव्यां मीमांसामिह प्रवर्तयिष्यामः ।

**ब्रह्मणस्पतिरेव तान्त्रिको गणपतिः**

अस्ति तन्त्रेषु पुराणेषु काव्येषु च प्रसिद्धो गणपतिर्नाम देवः । तस्य चावाहनादौ स्मार्तैर्गणानां त्वेत्येष मन्त्रो विनियुज्यते । तत् किं गणपतिनामसादृश्यमात्रावलम्बनम्? उताहो यथार्थदर्शनमूलम् ? नामसादृश्यमूलकभ्रम एवेत्याह । अयं मरुद्गणानां पतिः । स प्रमथगणानाम् । अस्यावर्ण्यमानानि गजमुखत्व-लम्बोदरत्वमूषकवाहनत्वानि तस्य वर्ण्यन्ते । नैते विरोधाः ये वैदिकै-र्मरुत उच्यन्ते त एव तान्त्रिकैः प्रमथाः कथ्यन्ते । इदं च मरुत्काण्डे स्पष्टं निरूपयिष्यामः । परोक्षप्रियत्वाद्देवतानां भक्ताः तदाकृतीर्विचित्राभिर्भङ्गीभि-र्वर्णयामासुः । तस्येदं विलसितं गणपतेर्यद्गजमुखत्वं लम्बोदरत्वं मूषकवाहनत्वं च । ओङ्कारलिपिसादृश्याद्गजमुखं तस्य वर्णितम् । ओङ्कारमुखो वेदपुरुष इति कृत्वा । तस्य वाङ्मयकुक्षिरतिमेदुर इति स लम्बोदरो वर्णितः । शब्दस्य वाहनं जिह्वां कल्पयित्वा बिलवास-धान्यभक्षणाकृतिसादृश्यैस्तां मूषकत्वेन वर्णयामासुः ।

गणपतिश्च रुद्रस्य सूनुः प्रसिद्धः । ब्रह्मणस्पतिश्चात्र वेदे रुद्रपुत्रेषु मरुत्सु वर्ण्यते । "अच्छावदतना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं न दर्शतम् " (३८. १३) । मारुते सूक्त एष मन्त्रः । ब्रह्मणस्पतिर्मरुताम् अन्यतमो न चेन्मरुद्देवताके तन्नामोपलब्धेर्नोपपत्तिः । न च मरुतामेव गौणं ब्रह्मणस्पतिनामेति वाच्यम् । एकवचनेन तदनवकाशात् । युक्तं

च मरुतामन्यतमस्य ब्रह्मणस्पतेः मरुत्पतित्वम् । मूलाधारे गणपतेर्वास उच्यते । तेजोमयवागिन्द्रियात्मकस्य ब्रह्मणस्पतेश्च तदायतनम् ।

गणानां वय इति नामान्तरं वैदिकम् "वयो मातुर्निरेतवे" (१. ३७. ९) इत्यादौ प्रयोगदर्शनात् । वीनां नायको विनायकः । इदं नाम गणपतेः प्रसिद्धम् । योगतः सिद्धं ब्रह्मणस्पतेः ।

गणपतेः सिद्धिबुद्धी जाये उच्येते । शब्दब्रह्मणि तयोरुभयोः प्रतिष्ठेति निर्विवादो विषयः ।

भाद्रपदशुद्धचतुर्थ्यां गणपतेः पूजा क्रियते विशिष्टा । तस्मिन्नेव दिने प्रायः सामवेदोपाकरणम् । तदा प्रायेण हस्तानक्षत्रयोगसम्भवात् । वेदोपाकरणसमये विशिष्टं तदभिमानिदेवतापूजनमुपपन्नम् । नक्षत्रस्य स्थाने सामान्यतस्तत्सम्बद्धा तिथिर्यद्गृहीता स्मार्तैस्तत्तेषां प्रायो व्रतेषु तिथिग्रहणाभ्यासवशादिति बोध्यम् । अत्र वेदान्तरापेक्षया सामवेदाय प्राधान्यदानं शब्दे गानयुक्तस्य प्राधान्यात् । एवं "वेदानां सामवेदोऽस्मि" इति गीताग्रन्थः सङ्गच्छते ।

सर्वेषां कर्मणामादौ गणपतेः पूजा क्रियते स्मार्तैः । सर्वेषां कर्मणां मन्त्रपूर्वकत्वादादौ मन्त्रदेवताऽऽराधनमुपपन्नम् । तस्मान्न ब्रह्मणस्पतेर्गणपतिरन्यः । तद्युक्तं ब्राह्मणस्पत्येन मन्त्रेण गणपतेरावाहनादिकम् ।

शब्दस्तेजोमय इति भूमिकायां स्थापितम् । अल्पशक्तिषु शब्देषु तेजसो

**ज्येष्ठमन्त्रस्वरूपम्**

न स्फुटत्वम् । निमित्तशक्तिमाहात्म्याच्छक्तिसमृद्धे शब्दे तस्य स्फुटतया प्रादुर्भावः । स देदीप्यमानः शब्दः प्रवृद्धतमो भूत्वा यथा प्रेरणं व्याप्नोति गगनम् । दहेच्च शत्रून् । स ज्येष्ठो मन्त्रः । तज्ज्येष्ठं ब्रह्म । तदेव ब्रह्मास्त्रम् । ब्रह्मैवास्त्रमिति विग्रहः । ब्रह्मास्त्रमेकमेवास्त्रं नान्यान्यस्त्राणि तत्त्वतः । आग्नेयास्त्रादि नामानि भवन्त्यस्यैव भक्तितः । तादृशानां दीप्यतां ब्रह्मणां पतिर्ब्रह्मणस्पतिरिति ज्येष्ठराजं ब्रह्मणामिति विशेषणेनाह । पतित्वं चात्राभिमानित्वात् । ब्रह्मणस्पतेराधिभौतिकं स्वरूपं तु शब्दब्रह्मैवेति विषयो न विस्मर्तव्यः । ननु ''ज्येष्ठराजं भरे कृत्नुम्'' (८. १६. ३) ''ज्येष्ठश्च मन्त्रो विश्वचर्षणे'' (१०. ५०. ४) इत्यादाविन्द्रश्च शब्दब्रह्मपतिः । शब्दब्रह्मरूपश्च वर्णित इति चेत् । नैष दोषः । इन्द्रविभूतिषु ब्रह्मणस्पतेरन्यतमत्वात् । ब्रह्मणोऽस्त्रत्वे प्रमाणानि तन्निरूपकतत्तन्मन्त्रव्याख्यानसन्दर्भेषु प्रदर्शयिष्यामः ।

**देवागमनप्रार्थनातत्त्वम्**

यदुच्यते सदनमासीदिति तत्र याज्ञिकमतेन साक्षाद्देवताया आगमनप्रार्थनाहविःस्वीकरणार्थम् । देवता तु नागच्छति कदाचिदपि । तादृशानां सत्यदर्शिनामृषीणामसम्भाव्या प्रार्थना कथमुपपद्येत । तस्माद्याज्ञिकैर्गौण्यागमनप्रार्थनेत्यङ्गीकर्तव्यम् । अन्या चास्त्यनुपपत्तिः । यदि हविःस्वीकरणाय स्वयमागच्छेद्देवता तर्हि नार्थोऽग्नौ होमेन । यजमानो मन्यते हुतमग्नौ देवान् गच्छतीति । युक्तं च तत् । नेत्रस्य सौख्यायान्नं दातुमिच्छन्नेत्रे नान्नेन लिम्पति । अपि तु जठराग्नौ ददाति । त्वचः सौख्यायान्नं दातुमिच्छन्न त्वचमन्नेन लिम्पति । अपि तु जठराग्नौ ददाति । यथाऽधिपिण्डं तथाऽध्यण्डम् । एवमग्नेर्हव्यवाहत्वं सिध्येत् । देवानां चाग्निमुखत्वम् । तस्मान्नास्ति देवता प्रत्यक्षं हविर्गृह्णातीति ।

तादृश्यः पौराणिककथास्तु भाक्ताः प्रत्यक्षविरोधादुपपत्तिविरोधाच्च । अथ किं तात्पर्यमागमनप्रार्थनम् । आध्यात्मिकतत्तद्देवताविभूति-समु ल्लासार्थमिति ब्रुमः । यद्यप्यध्यात्मं देवताः सन्ति नित्यं सर्वेषां भक्तानामभक्तानां च । तथाप्यनुल्लसितशक्तयोऽसद्वत् । अभिमानिदेवता-ऽनुग्रहेण योगबलेन वा तच्छक्त्युल्लासः । भक्तस्य पूर्वेण । योगिन उत्तरेण । शारीरनिजविभूतिशक्त्युल्लासनमेव देवताया आगमनम् उपचर्यते । एवमाह्वानमन्त्रा अर्थवन्तः स्युः । प्रकृते सदनमासीदित्यस्य । शरीरे निजस्थाने समुल्लसितशक्तिर्भवेति तात्पर्यम् ॥ १ ॥

**देवाश्चित्ते असुर्यप्रचेतसो**
**बृहस्पते यज्ञियं भागमानशुः ।**
**उस्रा इव सूर्यो ज्योतिषामहो**
**विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २॥**

**भाष्यम्** असुर्य असून् रात्यादत्त इत्यसुरो रुद्रस्तस्यापत्यमसुर्यः । तस्य सम्बुद्धिः । बृहस्पते बृहतः शब्दब्रह्मणः प्रभो । देवाश्चित् देवा अपि प्रचेतसः प्रकृष्टान्तःकरणस्य विश्वावगाहिज्ञानान्तःकरणस्येति यावत् । ते तव । यज्ञियं यज्ञार्हं । भागमंशम् । आनशुः प्रापुः । वस्तुतः सर्वेषां मन्त्राणां शब्ददृष्ट्या बृहस्पतिरेव प्रभुः तथापि शब्दरूपः स देवो देवतान्तर-वाचकमर्थमपि वहन्स्ताभ्यो यज्ञियं भागं कल्पयतीत्यर्थः । अयम् एव ऋषिणोद्दिष्टो देवैः प्राप्तो यज्ञियो बार्हस्पत्यभागो यन्मन्त्रभाक्त्वम् । महः महान् । सूर्य आदित्यः । उस्रा इव उस्राणामिव विभक्तिव्यत्ययः । विश्वेषामित् सर्वेषामेव । ब्रह्मणां मन्त्राणाम् । जनिता जनयिता । असि भवसि । मन्त्राणामार्षत्वेऽपि पृथग्व्यक्तित्वाभिधानधारस्य मनसः सम्बन्धमन्तरैव शारीरपरवाग्रूपा-द्बृहस्पतेरेव मन्त्राणां प्रादुर्भावादियमुक्तिः ।

**बृहस्पतेरक्षरदेवतात्वम्**

यदि बृहस्पतिरक्षराख्यस्य व्यापकनित्यशब्दस्य देवता न स्यात्ततो ब्रह्मणाम् उत्पत्तिर्नोपपद्यते । ननु यथा प्रकृतेः शब्दाद्विविधानां शब्दविकृतीनाम् उद्भवः तथाऽऽश्रयादाकाशादपि वक्तुं शक्यः । यथा यतो यज्जायते तत्तज्जमाहुः तथा यत्र यज्जायते तज्जं च तद्वदन्ति । तस्मादाकाशदेवता बृहस्पतिः कुतो न भवत्विति चेत् । पक्षे तस्मिन्नुपमान स्वारस्यं भग्नं भवेत् । उस्रा इव सूर्य इत्युपमानम् । यथा तेजसां प्रकृतिः सूर्यस्तेजो- विकृतीनां तथा शब्दानां प्रकृतिर्बृहस्पतिः शब्दविकृतीनामिति स्वारस्यम् । यदि बृहस्पतिराकाशदेवता तर्हि – "देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।" (७. ९७. ८) इति बृहस्पतेर्द्यावा- पृथिव्योः पुत्रत्वोक्तिर्न सङ्गच्छते । एतेन गणपतेर्द्वैमातुरत्वं व्याख्यातम् । एवं बृहस्पतिरक्षरदेवतेति सिद्धम् । तस्माद्ब्रह्मणस्पतिरक्षरदेवता ।

**बृहस्पतिब्रह्मणस्पत्योरभेदः**

ननु बृहस्पतेरक्षरदेवतात्वे कथं ब्रह्मणस्पतेरक्षरदेवतात्वम् । नामभेद एवायं न वाच्यभेद इति ब्रूमः । ब्रह्मणस्पतेरेव बृहस्पतिरिति नामान्तरम् । गणानां त्वेति सूक्तेऽन्त्यः स्तोत्रोपसंहारमन्त्रः । शिष्टेष्वष्टादशसु – १, ५, ९, ११, १७ – इति पञ्चैव ब्रह्मणस्पतिनामलिङ्गवन्तः । एवमपि ऋषिरन्तत एकोनविंशे मन्त्रे – "ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।" इति सूक्तं सर्वं ब्राह्मणस्पत्यं कण्ठरवेण वक्ति । तेन ज्ञापयति बृहस्पतिर्ब्रह्मणस्पतेर्नान्य इति । ननु सूक्ते बृहस्पतेर्बहुमन्त्रभाग्त्वेऽपि प्रथममन्त्रस्य ब्राह्मणस्पत्यत्वात्सूक्तस्य ब्राह्मणस्पत्यत्वं लक्षणया साधनीयमिति चेत् । नैषा युक्तिरवशिष्टते । उत्तरसूक्ते प्रथममन्त्रस्य

बृहस्पतिनामलिङ्गवत्त्वेऽपि स्तोत्रोपसंहारे सूक्तस्य सर्वस्य ब्राह्मणस्पत्यत्वेनैव कीर्तनात् ।

"योगा उदाजत्सदिवे विचा भजत्" (२. २४. १४) इति ब्रह्मणस्पतेर्गवामुद्धरणकर्मोच्यते । "बृहस्पतिरुस्त्रिया हव्यसूदः कनिक्रदद्वावशती रुदाजत्" (४. . ) इति बृहस्पतेः । तत्रैव मन्त्रे "ससुष्टु भास ऋक्वता गणेन" इति बृहस्पतेर्गणपविवारोपेतत्वं कथ्यते । ब्रह्मणस्पतिश्च ख्यातो गणपतिः । ननु "उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहासतीः" (१४. . ) इत्यादौ गवामुद्धरणम् । "निषुसीद गणपते गणेषु" (१०. . ) इत्यादौ गणपतित्वं चेन्द्रस्यापि वर्ण्येत इति चेत् । तत्रोक्तं नैष दोष इन्द्रविभूतिषु ब्रह्मणस्पतेरन्यतमत्वादिति । तच्चेन्द्रकाण्डे स्पष्टं निरूपयिष्यामः ।

"अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभियमोजसाऽतृणम् । तमेव विश्वे पपिरेस्वर्दृशो बहु साकं सिसिचुरुत्समद्रिणम् ।" (२. २४. ४) इत्यश्मच्छन्नमधूद्घाटनकथा ब्रह्मणस्पतेः । "अश्नापिनद्धं मधुपर्यपश्यत्स्यं नदी नमुदनिक्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणाविकृत्य ।" (१०. ६८. ८) इति बृहस्पतेः । इदं चासाधारणकर्मैक्यं बृहस्पतिब्रह्मणस्पत्यभेदसाधकम् ।

इमां धियं सप्तशीर्ष्णीमिति बार्हस्पत्ये सूक्ते (८. ६७) त्रयो मन्त्राः (६. ७. ८) क्रमेण दृश्यन्ते । "इन्द्रो वलं रक्षितारं दुधानां करेणेव विचकर्ता रवेण स्वेदाञ्जिभिराशिरमिच्छमानोऽरोदयत्पणिमागा अमुष्णात् । स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं विधनसैरदर्द । ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मखेदेभिर्द्रविणं व्यानट् । त सत्येन मनसा

गोपतिं गा इयाना स इषणयन्त धीभिः । बृहस्पतिर्मिथो अवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ।" परस्परसम्बद्धा एते मन्त्राः । अत्रैकमेव कर्मेन्द्रब्रह्मणस्पतिबृहस्पतीनां भङ्गीभेदेन वर्ण्यते ।

यज्ञो दिवो नृसदन इति सूक्ते (७ - ९७) प्रथमेन्द्रनामलिङ्गवती । तृतीयेन्द्रब्रह्मणस्पतिनामलिङ्गवती । १, २, ४, ५, ६, ८, - षड्टचो बार्हस्पत्याः । नवम्यां स्तोत्रमुपसंहरन्नृषिरेवं ब्रूते । "इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणे अकारि । अविष्टं धियो जिगृतं पुरन्धीर्जजस्तमर्यो वनुषा मरातीः।" इयं सुवृक्तिरिति प्रागुक्तस्तुतिपरामर्शः । ब्रह्मेति स्तुतिविशेषणम् । मन्त्ररूपा स्तुतिरिति यावत् । यदि ब्रह्मणस्पतेर्बृहस्पतिरन्यः तर्हि इन्द्रस्तोत्रपूर्वकं बृहस्पतेः स्तोत्रं कृत्वा "इयं वां ब्रह्मणस्पते" इत्युपसंहारो नोपपद्यते । किं च उपसंहारे प्रस्तुतां प्रार्थनां पूरयन्नुत्तरामाह । "बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य । धत्तं रयिं स्तुवते कीरये चिद्यूयं पातस्वस्तिभिः सदा नः ।" इति नवम्यामिन्द्राब्रह्मणस्पती प्रकृतौ तदर्थपूरणाय प्रवृत्तायामुत्तरस्यामृचि त्विन्द्राबृहस्पती । अभेद एवोपपद्यत ईदृशी शैली । इन्द्रस्य विभूत्यन्तरदृष्ट्याऽत्रेन्द्राब्रह्मणस्पत्योर्भेदकथनम् ।

बृहस्पतिर्विश्वेषां ब्रह्मणां जनयिता । ब्रह्मणस्पतिश्च ब्रह्मजनक उच्यते । यथा "प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ।" (१. ४०. ५) ऋषीणां शरीरे परावाग्रूपेण तिष्ठन्ब्रह्मणस्पतिरेव मन्त्रं वदतीति तस्यैव मन्त्रकृत्त्वम् ।

बृहस्पतिर्वाचस्पतिः प्रसिद्धः । न केवलं वाचां जनयिता । ब्रह्मणस्पतिश्चैवम् । यथा पूर्वस्यामृचि व्याख्यातम् । ननु ब्रह्माऽपि

वाचस्पतिरिति चेत् । नैष विरोधः । ब्रह्मणोऽपि ब्रह्मणस्पतेरनन्य-त्वात् । तदुत्तरत्र निरूपयिष्यामः । "नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् ।" (१. १८. ९) इति ब्राह्मणस्पत्ये सूक्ते ब्रह्मणस्पते-र्नराशंस इति नामान्तरं दृश्यते । तत्र नरा आसमन्ताच्छंसन्तीमं मन्त्रात्मकमिति व्युत्पत्तिः । "नराशंसो नो अवतु प्रयाजे" (१०. .) इति बार्हस्पत्ये सूक्ते बृहस्पतेर्नराशंस इति नामान्तरम् । एवं बहुभिर्लिङ्गैर्ब्रह्मणस्पतेर्नामान्तरमेव बृहस्पतिरिति सिध्यति ॥ २॥

**आविबाध्या परिरापस्तमांसि च**
**ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।**
**बृहस्पते भीममित्रदम्भनं**
**रक्षोहणं गोत्रभिदं स्वर्विदम् ॥ ३॥**

भाष्यम् हे बृहस्पते । भीमं शत्रूणां भयङ्करम् । अमित्र दम्भनं शत्रुहिंसकम् । रक्षोहणं रक्षसां हन्तारम् । गोत्रभिदं मेघानां भेत्तारम् । स्वर्विदं स्वर्लोकस्य तदुपलक्षितानां देवानां च वेत्तारं अतीन्द्रियद्रष्टारमिति यावत् । ज्योतिष्मन्तं तेजोयुक्तम् । ऋतस्य मन्त्रस्य सत्यार्थत्वान्मन्त्र ऋतम् उच्यते । रथम् मन्त्रात्मकं रथमिति यावत् हिरण्यस्य दण्डमित्यादाविवाभेदार्थे षष्ठी । तिष्ठस्यधितिष्ठसि । ज्योतिष्मन्तमित्यनेन ज्येष्ठमन्त्र एवात्र विवक्षितो ज्ञेयः । वृष्टये जप्तो वृष्टिप्रदो भवतीति गोत्रभित्त्वं तस्य परिरापः परितो निन्दकान् शत्रून् । तमांसि च अज्ञानानि च । आसमन्तात् विबाध्य विबाधस्व बाधतेः श्यन्परस्मैपदित्वं च च्छान्दसे । न केवलं ज्येष्ठं ब्रह्मशत्रुहिंसकमपि तु तमसां चाज्ञानरूपाणां वारकमिति युक्तमुभयोः कार्ययोर्निर्वहणाय ब्रह्मरथो बृहस्पतिः प्रार्थ्यते । जीवस्य शरीरमिव देवताया । आधि-

भौतिकविभूती रथत्वेन कल्प्यते । अन्यत्रापि निगमे भगवानिन्द्र एवं वर्ण्यते - "ब्रह्माणं ब्रह्मवाहसम्" (६. ४५. ७) इति । स्वयं ब्रह्मरूपस्य ब्रह्मवाहस्त्वं विभूतिविभूतिमतोर्भेददृष्ट्या । एवमिहापि । संहितायां विबाध्येत्यत्र दीर्घश्छान्दसः ॥ ३ ॥

**सुनीतिभिर्नयसि त्रायसे जनं**
**यस्तुभ्यं दाशान्नतमंहो अश्नवत् ।**
**ब्रह्मद्विषस्तपनो मन्युमीरसि**
**बृहस्पते महि तत्ते महित्वनम् ॥**

भाष्यम् हे बृहस्पते । यः तुभ्यम् । दाशाद्द्यात् । हविरिति याज्ञिकानां नयः आत्मानमिति योगिनाम् आत्मदानं चात्मसमर्पणापर-पर्याया प्रपत्तिः । यस्त्वां प्रपद्येतेति यावत् । तं जनम् । सुनीतिभिः शोभननीतिभिः पुण्यमार्गैरिति यावत् । नयसि । त्रायसे रक्षसि च । तम् । अंहः पापं च । नाश्नवन्न प्राप्नुयात् । देहलीदत्तदीपन्यायेन यस्तुभ्यं दाशादिति वाक्यं पूर्वत्रोत्तरत्र चान्वेति । ब्रह्मद्विषो वेद-द्वेषिणः । तपनः तापकः । मन्युमीः क्रोधहिंसकश्च क्रोधस्य व्यर्थत्वापादक इति यावत् । असि । तत् । ते तव । महि महत् । महित्वनं माहात्म्यम् ॥ ४ ॥

**न तमंहो न दुरितं कुतश्चन**
**नारातयस्तितिरुर्नद्वयाविनः ।**
**विश्वा इदस्माद्ध्वरसो विबाधसे**
**यं सुगोपा रक्षसि ब्रह्मणस्पते ॥**

भाष्यम् उक्तमेवार्थं द्रढयति । हे ब्रह्मणस्पते । सुगोपाः शोभनो रक्षकस्त्वम् । यम् । रक्षसि । तम् । अंहः पापम् । न तितिरुरित्युत्तरत्र श्रवणात्तत एकवचनमत्राध्याहार्यम् । न तितेर न हिंसति वर्तमानार्थे लिट् । लुङलङलिटां छन्दसि सर्वलकारार्थेषु विकल्पेनानुशिष्टत्वात् । कुतश्चन इतरस्मादपि सर्वस्मादिति यावत् । दुरितं पापम् । न तितेर । आत्मकृतं परकृतं वा पापं तं हिंसतीत्यर्थः । अपि च तं अरातयः शत्रवः । न तितिरुः न हिंसन्ति । द्वयाविनः वचसा प्रियं वदन्तो मनसा विप्रियं कर्तुं सङ्कल्पयन्तो वञ्चकाश्च । न तितिरुः । अस्माद्भक्ताज्जनात् । विश्वा इत् सर्वा एव । ध्वरसः हिंसिकाः प्रजाः वि बाधसे ॥ ५॥

**त्वं नो गोपाः पथिकृद्विचक्षण-**
**स्तव व्रताय मतिभिर्जरामहे ।**
**बृहस्पते यो नो अभिह्वरो दधे**
**स्वा तं मर्मर्तुदुच्छुना हरस्वती ॥ ६॥**

भाष्यम् हे बृहस्पते । त्वम् । नः अस्माकम् । गोपाः रक्षकः । किं च विचक्षणो विशालदर्शनः । पथिकृत् मार्गकृत् । अस्माकं निपुणो मार्गदर्शी च भवसीत्यर्थः । तव । व्रतायाराधनाय । मतिभिर्बुद्ध्युपलक्षितैर्मन्त्रैः । जरामहे स्तुमः । यः । नः अस्माकम् । अभि अभिलक्ष्य । ह्वरः कौटिल्यं वञ्चकत्वमिति यावत् । दधे दधाति । तं वञ्चकम् । स्वा स्वकीया हरस्वती नाशकशक्तिमती । दुच्छुना दुर्बुद्धिः मर्मर्तु मारयतु ॥ ६॥

उत वायो नो मर्चयादनागसो-
ऽराती वा मर्तः सानुको वृकः ।
बृहस्पते अपतं वर्तया पथः
सुगं नो अस्यै देववीतये कृधि ॥ ७॥

**भाष्यम्** हे बृहस्पते । उत अपि च । अरातीवा शत्रुमान् अस्मच्छत्रुभूतपरिवारयुक्त इत्यर्थः । सानुकः समुच्छ्रितः धनबलादिनोन्नत इत्यर्थः । वृकः वृकवत्क्रूरः । उपमानस्यात्र विशेषणतया निर्देशो विशेष्ये तद्गुणाधिक्यद्योतनाय । यो वा । मर्तः मनुष्यः । अनागसः निरपराधान् । नः अस्मान् । मर्चयात् हिंस्यात् । तं मनुष्यम् । पथः अस्माकं मार्गात् । अप वर्तय निवर्तय। नः अस्माकं अस्यै । देववीतये देवगतये "वी गतिव्याप्ति-प्रजनकान्त्यसनस्वादनेषु" नात्र स्वादनार्थको वीति शब्दः। परं तु गत्यर्थक औचित्यात् । आत्मानं देवताभ्यः समर्पितवत ऋषे-र्जीवितयात्रैव देवगतिः । सुगं सुष्ठु गन्तुं शक्यं मार्गम् । कृधि कुरु । वर्तयेत्यत्र संहितायां दीर्घश्छान्दसः । अरातीत्यत्र समासे ॥ ७॥

त्रातारं त्वा तनूनां हवामहे-
ऽवस्पर्तरधिवक्तारमस्मयुम् ।
बृहस्पते देवनिदो निबर्हय
मादुरेवा उत्तरं सुम्नमुन्नशन् ॥ ८॥

**भाष्यम्** अवस्पर्तः अवसा रक्षणेन पारयितः । तनूनामस्मद्-अङ्गानाम् । त्रातारं रक्षकम् । अधिवक्तारमस्मान् अधिकान्वक्तारम् । अस्मयुमस्मानिच्छन्तम्

संस्करणायास्मांत्स्वीकुर्वन्तमित्यर्थः । त्वा त्वाम् । हवामहे आह्वयामः । हे बृहस्पते । देवनिदः देवनिन्दकान् । निबर्हय नाशय । दुरेवाः दुष्टगतयस्ते । उत्तरमुत्कृष्टम् । सुम्नं महत्त्वम् । मा उत् नशन् मा व्याप्नुवन्तु ॥ ८॥

**त्वया वयं सुवृधा ब्रह्मणस्पते**
**स्पार्हावसु मनुष्याऽऽददीमहि ।**
**या नो दूरे तळितो या अरातयो-**
**ऽभिसन्ति जम्भयाता अनपञ्नसः ॥ ९॥**

भाष्यम् हे ब्रह्मणस्पते । सुवृधा सुष्ठु वर्धमानेन मन्त्रो ह्यभ्यस्यमानः सुष्ठु वर्धते तेजसा । त्वया । वयम् । मनुष्या मनुष्येभ्यः शत्रुभ्यः । स्पार्हा स्पृहणीयानि । वसु धनानि वचनव्यत्ययः । आददीमहि जित्वा गृह्णीमहीत्यर्थः । दूरे दूरदेशे जाता इति शेषः । तळितः अशनयः । न केवलं निसर्गतश्च्युताः सद्यः प्राणहारिण्योऽशनयोऽत्र विवक्षितः । अपि तु देवकार्ये प्रवृत्तानां विघ्नायादृश्यैः राक्षसैः प्रयुक्ता शरीरप्राणचित्तसङ्क्षोभिण्यश्चात्रोद्दिष्टाः । यद्यपि राक्षसादिव्यक्तिमनोबलेन निष्पन्नानां विद्युच्छक्तीनां नास्ति सद्यः प्राणहरणे शक्तिः प्रायः तथापि विद्यत एव शरीरादिसङ्क्षोभणशक्तिर्दोषवद्दृष्टिजविद्युच्छक्तिवत् । याश्चारातयः प्रजाः । नः अस्मान् । अभि सन्ति अभिभवन्ति । अनप्नसः अस्मानव्याप्नुवन्तीरेव । ताः तळितोऽरातीश्च । जम्भय नाशय । जम्भयेत्यत्र संहितायां दीर्घश्छान्दसः ॥ ९॥

त्वया वयमुत्तमं धीमहे वयो
बृहस्पते पप्रिणा सस्निना युजा ।
मानो दुःशंसो अभिदिप्सुरीशत
प्रसुशं सा मतिभिस्तारिषीमहि ॥ १०॥

भाष्यम् हे बृहस्पते । पप्रिणा पूरकेण व्यापकेनेत्यर्थः । सस्निना शुद्धेन । युजा सहायभूतेन । त्वया । वयम् । उत्तमम् । वयः यौवनलक्षणम् । धीमहि धारयामः । जरामाऽस्मान्पराभूदिति तात्पर्यम् । दुःशंसः दुष्टवचनः । अभिदित्सुः अभिदम्भितुमिच्छुर्जनः । नः अस्माकम् । मा ईशत मा ईशिष्ट । तादृशोऽस्माकमीश्वरो मा भूदित्यर्थः । सुशंसाः शोभनस्तुतयो वयम् । मतिभिः मत्युपलक्षितैर्मन्त्रैः प्रतारिषीमहि प्रकर्षेणास्मदीयांस्तारयाम ॥ १०॥

अनानुदो वृषभो जग्मिराहवं
निष्टप्ता शत्रुं पृतनासु सासहिः ।
असि सत्य ऋणया ब्रह्मणस्पत
उग्रस्य चिद्दमिता वीळुहर्षिणः ॥ ११॥

भाष्यम् हे ब्रह्मणस्पते त्वम् । अनानुदः न अनुदोऽननुदः अननुद एवानानुदः समासे दीर्घश्छान्दसः । स्वतन्त्रो दातेत्यर्थः स्वतन्त्र शत्रूणामवखण्डको वा । वृषभः वर्षकः कामानाम् । श्रेष्ठवाचकं वेदं पदं रूढलक्षणया । आहवं युद्धम् । जग्मिः गन्ता अस्त्रात्मना । शत्रुम् । निष्टप्ता नितरां तापयिता । पृतनासु युद्धेषु । सासहिरभिभविता । ससहिरेव सासहिः संहितायां दीर्घः । सत्यः

अवितथकर्मा । ऋणयाः ऋणस्य यावयिता पृथक्कर्ता । न केवलं मनुष्येभ्यः प्रत्यर्पयितव्यमृणमत्र विवक्षितम् । अपि तु देवेभ्यः प्रत्यर्पयितव्यं च । वीळुहर्षिणः दृढहर्षयुक्तस्य धनबलादिभिः प्रपुष्टस्येत्यर्थः । उग्रस्य चिद्भयङ्करस्यापि शत्रोः । दमिता नाशयिता च असि ।

**देवऋणनिरूपणम्**

देवेभ्यः प्रत्यर्पयितव्यमृणं मनुष्यस्यास्तीत्युक्तम् । तत् किम् ? अस्मभ्यं प्राणेन्द्रियमनोबुद्धयो देवैर्दत्ताः । तद्विभूतित्वादेवैषाम् । तानि पुनरस्माभिर्देवेभ्यः प्रत्यर्पयितव्यानि । तदेव पूर्णमात्मार्पणमुच्यते । इदं चार्पणं न बलवन्मरणेन प्राणादीनां विसर्जनम् । न वा सर्वमिदं देवानां सर्वं देवा एव कुर्वन्तीति भावनामात्रम् । कयाचिदपि शक्त्या शरीरे पक्वे देवाः प्राणादीनाविश्य स्ववशे कुर्वते । अनन्तरं प्राणादीनां दिव्यभावापत्तिः । शरीरस्य च पाकाधिक्ये । प्राणादीनां दिव्यत्वे नैसर्गिको देवयागः शरीरे प्रवर्तते । तत्र यागे ध्रुवस्मृतिः पुरुषः केवलं साक्षी । तेन यागेन भूम्यवतीर्णस्वांश- संस्करणरूपं देवकार्यं सिध्येत् । यज्ञेन देवऋणविमुक्तिरिति शास्त्रं याज्ञिकानां मतेन पशुयागपरम् । योगिनां मतेन देवयागापरपर्यायान्तर्यागपरम् । तेनैवान्तर्यागेन पुरुषस्यामृतत्वसिद्धिः । प्राणादीनां दिव्यभावापादनाय यः पूर्वः शक्तिपाकः स ध्रुवस्मृतिपूर्वकेण मन्त्रजपेन भवतीति ऋणया ब्रह्मणस्पतिरुक्तः ॥ ११॥

**अदेवेन मनसा यो रिषण्यति**
**शासामुग्रो मन्यमानो जिघांसति ।**

**बृहस्पते मा प्रणक्तस्य नो वधो**
**निकर्म मन्युं दुरेवस्य शर्धतः ॥ १२॥**

**भाष्यम्** यः मनुष्यः । अदेवेन नास्तिकभावसहितेन । मनसा । रिणष्यति हिनस्त्यस्मान् । उग्रो यः । मन्यमान आत्मानम् अधिकं मन्यमानः सन् । शासां मन्त्रशंसकं माम् । जिघांसति हन्तुमिच्छति । हे बृहस्पते । तस्योभयविधस्य । वधः हिंसा । नः अस्मान् । मा प्रणक् मा सम्पर्कयतु । शर्धतो बलवतः । दुरेवस्य दुष्टगतेस्तस्य । मन्युं क्रोधम् । निकर्म प्रतिकरवाम ॥ १२॥

**भरेषु हव्यो नमसोपसद्यो**
**गन्ता वाजेषु सनिता धनं धनम् ।**
**विश्वा इदर्यो अभिदिप्स्वो३मृधो**
**बृहस्पतिर्विववर्हाथां इव ॥ १३॥**

**भाष्यम्** भरेषु युद्धेषु । हव्यः रक्षार्थमाह्वातव्यः । नमसा नमस्कारोपलक्षितया भक्त्या । उपसद्यः प्राप्यः । वाजेषु युद्धेषु । गन्ता अस्त्रात्मना । धनं धनं सकलं धनम् । सनिता साधयिता । अर्यः प्रभुः । बृहस्पतिः । विश्वा इत्सर्वा एव । अभिदिप्स्वः अभिदम्भितुमिच्छन्तीः । मृधः हिंसित्रीः शुत्रुसेनाः । रथान् इव । विववर्ह शिथिलीकरोतु । लोडर्थे लिट् । रथानिवेति समुच्चयोपमा । शुत्रुसेनास्तासां रथांश्च शिथिलीकरोत्वित्यर्थः ॥ १३॥

तेजिष्ठया तपनी रक्षसस्तप
ये त्वानिदे दधिरे दृष्टवीर्यम् ।
आविस्तत्कृष्व यदसत्त उक्थ्यं
बृहस्पते विपरिरापो अर्दय ॥ १४॥

भाष्यम् हे बृहस्पते । तेजिष्ठया अतिशेयन तिग्मया । तपनी तापिन्या निजया शक्त्या । रक्षसो राक्षसान् । तप तापय । ये राक्षसाः । दृष्टवीर्यं दृष्टपराक्रमम् । त्वा त्वाम् । निदे निन्दायै । दधिरे निन्दन्तीति यावत् । ते तव । उक्थ्यं शंसनीयम् । यद्वीर्यम् । असदासीत् । तत् । अविः कृष्व आविष्कुरु । परिरापः परिरपः समासे दीर्घश्छान्दसः । निन्दकान् शत्रून् । वि अर्दय विनाशय ॥ १४॥

बृहस्पते अति यदर्यो अर्हा
द्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दिदयच्छवस ऋतप्रजात
तदस्मासु द्रविणं धेहि चित्रम् ॥ १५॥

भाष्यम् ऋतप्रजात मन्त्रसम्भव मन्त्र तत्तेजसोर्भेददृष्ट्येयमुक्तिः । अत्र ज्येष्ठमन्त्रजं तेज एव देवतारूपत्वेन विवक्षितम् । बृहस्पते । अर्यः स्वामी । यत् । अति अतीव । अर्चात् अर्चयेत् । यदस्मासु वर्तमानं तेजो राजाऽतीव पूजयेदिति यावत् । द्युमद्दीप्तिमत् । क्रतुमत्प्रज्ञावत् । यत्तेजः । जनेषु त्वद्भक्तेषु । विभाति । यत् । शवसा बलेन । दीदयद्दीपयति स्वाश्रयम् । तत् । चित्रं चायनीयम् । द्रविणं निजविभूतिभूतब्रह्मवर्चसापरपर्यायब्रह्मतेजोरूपं धनम् । अस्मासु । धेहि पोषय । तीव्रजपवशादन्तस्तेजोयुक्ते ब्रह्मणीदं

ब्रह्मवर्चसं सिध्येत् । अनुग्रहाद्वा विशिष्टात् ब्रह्मणस्पतेः ॥ १५॥

**मानः स्तेनेभ्यो ये अभिद्रुहस्पदे**
**निरामिणो रिपवोऽन्नेषु जागृधुः ।**
**आदेवानामोहते विव्रयो हृदि**
**बृहस्पते न परः साम्नो विदुः ॥ १६॥**

**भाष्यम्** हे बृहस्पते । द्रुहः द्रोहिणः । पदे अस्माकं स्थाने । निरामिणः नितरां रमणशीलाः अस्मत्पदाक्रमणेच्छावन्तः इति यावत् । ये रिपवः ये शत्रवः । अन्नेषु अस्मदीयान्यन्नानि विभक्तिव्यत्ययः । अभिजागृधुः अभिकाङ्क्षन्ति । वर्तमानार्थे लिट् । तेभ्यः । स्तेनेभ्यश्चोरेभ्यः नः अस्मान् । मा । परादा इति शेषः । देवानाम् । व्रयस्त्यागम् । व्रीधातुस्त्यागार्थकः । हृदि आसमन्तात् । व्योहते विशेषेण वहति । अयं जन इति शेषः । आत्मना दृष्टानि ब्रह्माण्येव ऋषिणाऽत्र देवानां त्यागत्वेनोद्दिष्टः । ब्रह्मसदा हृदयेन धारयत्ययं जन इत्यर्थः । तदेव पुनर्द्रढयति । साम्नः सामरूपात्त्वत्तः । परः अन्यत् । न विदुः । इमे जना इति शेषः । उभयत्रापि प्रथमपुरुषेणात्मैव विवक्षितः ॥ १६॥

असमासम्

ऋग्वेदमन्त्रभाष्यम्

# प्रकीर्णकम्

## प्रथमं ब्रह्मणस्पतिकाण्डम्

### प्रथमः खण्डः

अथ देवताक्रमेण विभज्य ज्ञाननिधिमादिवेदं व्याख्यास्यामः । तत्र वेदस्य मन्त्रात्मकत्वान्मन्त्राणां च शब्दात्मकत्वाद्ब्रह्मणस्पतेश्च शब्ददेवतात्वादौचित्येन ब्राह्मणस्पत्यमादौ व्याख्यायते ।

भार्गवस्य शुनकस्य पुत्रो गृत्समदो भगवानृषिर्ब्राह्मणस्पत्यानि चत्वारि सूक्तानि ददर्श । तेषु गणानां त्वेत्येकोनविंशत्यृचं प्रथमं सूक्तम् । पञ्चदश्यन्त्ये त्रिष्टुभौ शिष्टं जागतम् ।

**गणानां त्वा गणपतिं हवामहे**
**कविं कवीनामुपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत**
**आनः शृण्वन्नूतिभिः सीद सादनम् ॥ १॥**

ब्रह्मणः पते शब्दब्रह्मणः प्रभो । गणानां मरुद्गणानां मध्ये । गणपतिं पतिभूतं गणम् । गणः पतिरिति विग्रहः । एवं पुनरुक्तिर्निवारिता स्यात् । ईदृशाः प्रयोगाश्छन्दसि बहवः । कवीनां क्रान्तदर्शनानां मध्ये। कविं क्रान्तदर्शनम् । उत्कृष्टं क्रान्तदर्शनमित्यर्थः। कविः

क्रान्तदर्शन इति यास्कः । दर्शनस्य क्रमणं च च्छन्दोरूपेण साधारणवाक्यरूपेण वा निबन्धनम् । उपमश्रवस्तममतिशयेनोपमान-भूतकीर्तिम्। ब्रह्मणां मन्त्राणां । ज्येष्ठराजं ज्येष्ठं राजानम् । शब्द एव सिद्धमन्त्रस्य प्रयोगबलात्तेजसा दीप्यन् गगनं व्याप्नुवन्नतिशयेन वृद्धत्वाज्ज्येष्ठ उच्यते । तद्ब्रह्मणस्पतेर्विशिष्टं रूपम् । ज्येष्ठराजमित्यनेन तदेव दर्शयति । सर्वशब्दरूपे ब्रह्मणस्पतौ विशिष्टशब्दरूपस्य राजत्वेन देवतारूपत्वेन चोक्तिः सामान्यतो मन्त्राणां तद्विनेयत्वोक्तिश्च प्रकृतिभूमनि देवतादृष्ट्यभ्यासात् । यद्यपि ब्रह्मशब्दश्च धात्वार्थानु-गमाद्विशिष्टशब्दस्वरूपपर एव भवति तथापि ब्रह्मणां ज्येष्ठराजमित्यत्र लक्षणया स साधारणशब्दस्वरूपपरः । ब्रह्मणस्पतिशब्दे तु ब्रह्मशब्दः समष्टिशब्दस्वरूपपर एव ग्राह्यः । प्रधाननामर्थेन साकल्येन देवतातत्त्वनिरूपणस्य न्याय्यत्वात् । एवं चेद्ब्रह्मैव देवता नाम भवितुमर्हति तत्स्वरूपत्वाद्देवतायाः न ब्रह्मणस्पतिरिति चेत् । देवताया आधिभौतिकस्वरूपस्य विनेयत्वं पुरुषविधस्वरूपस्य नेतृत्वं चोद्दिश्य तथोक्तिरित्यदोषः । त्वा त्वाम् । हवामहे आह्वयामः । वयमिति शेषः । नः अस्माकम् । शृण्वन्नाकर्णयन् । आह्वानमित्यध्याहारः । ऊतिभिः रक्षाभिः सह । रक्षासाधकशक्त्या सहेत्यर्थः । सादनं सदनं गृहम् । याज्ञिकानां नये यज्ञगृहम् । योगिनां नये शरीरमेव गृहम् । आ सीद उपविश ।

यदुक्तं ब्रह्मणस्पतेर्ज्येष्ठं विशिष्टस्वरूपं तदेव ब्रह्मास्त्रमुच्यते । ब्रह्मैवास्त्रमिति विग्रहः । अत्रायं श्लोकः । "ब्रह्मास्त्रमेकमेवास्त्रं नान्यान्यस्त्राणि तत्त्वतः । आग्नेयास्त्रादि नामानि भवन्त्यत्रैव भक्तितः ।"

सदनमासीदित्यत्र मया दत्तं हविः स्वीकर्तुमिदं यज्ञगृहमागत्योपविशेति

याज्ञिकानां नये तात्पर्यम् । देवता तु क्वाप्यागता न दृश्यते । तादृशानां सत्यदर्शिनामृषीणामसम्भाव्यप्रार्थना कथमुपपद्यते ? अपि च यदि हविः स्वीकरणाय स्वयमागच्छेद्देवता तर्हि नार्थोऽग्नौ होमेन । याज्ञिकोऽपि मन्यते हुतमग्नौ देवान् गच्छेदिति । अधिपिण्डं जठराग्नये दत्तमन्नं पञ्चप्राणान् पञ्चेन्द्रियाणि शरीरं मनोबुद्धिमात्मानं च तर्पयति । यथाऽधिपिण्डं तथाऽध्यण्डम् । एवमग्नेर्हव्यवाहत्वं देवानामग्निमुखत्वं च सिध्येताम् । तस्मान्नास्ति देवता प्रत्यक्षं हविर्गृह्णातीति । तादृश्यः पौराणिककथास्तु भाक्ताः प्रत्यक्षविरोधादुपपत्तिविरोधाच्च । एवं याज्ञिकानां नयो न विमर्शकानामावर्जकः । योगिनां नये तु मम शरीरान्तरमाविशेति तात्पर्यम् । भक्तप्रवणामात्यादौ पुत्रत्वम् । "शं नो रुद्रो रुद्रेभिर्जलाषः" इत्यादौ परिवारत्वम् । प्रमथास्तु क्वापि न वर्ण्यन्ते निगमेषु । अतो वेदतन्त्रसामरस्याय तान्त्रिकैर्मरुत एव प्रमथा इत्यङ्गीकर्तव्यम् । अन्यथा प्रमथानामवैदिकत्वं प्रसज्येत । न तत्प्रथमसत्तासाधकानां क्षेमङ्करम् । तस्मान्नास्त्यर्थभेदो ब्रह्मणस्पतौ हेरम्बे च वर्तमानस्य गणपतिशब्दस्य । ननु ब्रह्मणस्पतिश्चेद्गणपतिः रुद्रस्यानुचरा गणा इति वक्तुमशक्यमिति चेत् । प्रतिवादिनोऽस्माकं चायं तुल्ययोगक्षेमो विषयः। प्रतिवादिनो हेरम्बश्चेद्गणपतिः कथं रुद्रस्यानुचरा गणाः ? उभयोश्च पक्षयोः पितापुत्रावुभौ राजयुवराजवद्गणेष्वधिकारवन्तौ वक्तव्यौ । अस्माकं पक्षे तु पितृज्येष्ठ-भ्रातृवच्चेति विशेषः । परोक्षप्रियत्वाद्देवतानां भक्तास्तदाकृतीर्विचित्राभि-र्भङ्गीभिर्वर्णयामासुः । तस्येदं विलसितं गणपतेर्यद्गजमुखत्वं लम्बोदरत्वं मूषकवाहनत्वं च । ओङ्कारलिपिसादृश्याद्गजमुखं तस्य वर्णितमोङ्कारमुखो वेदपुरुष इति कृत्वा । तस्य वाङ्मयकुक्षिरतिमेदुर इति स लम्बोदरो वर्णितः । शब्दस्य वाहनं जिह्वां कल्पयित्वा बिलवासधान्यभक्षणाकृतिसादृश्यैस्तां मूषकत्वेन वर्णयामासुः ।

नन्वस्माकं हेरम्बो रुद्रस्य पुत्रः प्रसिद्धः, न तथा ते ब्रह्मणस्पतिरिति चेत् । अस्ति प्रसिद्धिः शास्त्रीया । सैवालम् । किं तच्छास्त्रम् । यद्गणानां गणपतिं वदति निगमो ब्रह्मणस्पतिं तदत्र प्रथममुदाहार्यम् । यदि ब्रह्मणस्पतिर्न गणेष्वन्यतमस्तर्हि गणानां मध्ये नायको गणः स नोच्येत । मरुत्वतीये शस्त्रे ब्राह्मणस्पत्यप्रगाथशंसनं चात्र लिङ्गम् । अपि च – "अच्छावदतना गिरा जरायै ब्रह्मणस्पतिम् । अ ग्निं मित्रं न दर्शतम् ।"

इति मारुतसूक्तमध्येमरुत्त्वेनैव ब्रह्मणस्पतेः स्तुतिर्दृश्यते । न च मरुतामेव गौणं ब्रह्मणस्पतिनामेति वाच्यम् । एकवचनदर्शनात् । ब्रह्मणस्पतेश्च मरुत्स्वन्यतमत्वात्पूर्णसूक्तस्य मारुतत्वाविरोधः। अन्यानि च सन्त्युदाहरणानि । प्रवृत्तं पूर्णस्य शास्त्रस्य व्याख्यानम् । तत्तन्निगम-व्याख्यानावसरे पश्यन्तु सखायः । मरुतां वय इति नामान्तरं वैदिकम् । "वयो मातुर्निरेतवे।" इत्यादौ तथा प्रयोगदर्शनात् । वीनां नायको विनायकः । इदं नाम गणपतेः प्रसिद्धम् । सिद्धो मरुत्पतिर्ब्रह्मणस्पतिः । इदं च कारणं गणपतिशब्दमुभयत्र समानार्थमभिधातुं प्रभवेत् । गणपतेः सिद्धिबुद्धि जाये उच्येते । तयोरुभयोः शब्दब्रह्मणि प्रतिष्ठितत्वाच्छब्द-ब्रह्मरूपो गणपतिर्वक्तव्यः । सर्वेषां कर्मणामादौ स्मार्तैर्गणपतेः पूजा क्रियते । सर्वेषां कर्मणां मन्त्रपूर्वकत्वादादौ मन्त्रदेवताराधनमुपपन्नम् । सर्वस्यापि व्यवहारस्य शब्दपूर्वकत्वात् व्यवहारस्य च तपोविघ्न-करच्छब्ददेवताया विघ्नेश्वरत्वम् । विघ्नहरत्वं च तपःसाधकमन्त्ररूपेण । भाद्रपदशुक्लचतुर्थ्यां गणपतेर्विशिष्टा पूजा क्रियते । प्रायस्तस्मिन्नेव दिने सामवेदोपाकरणं तदा प्रायेण हस्तानक्षत्रयोगसम्भवात् । वेदोपाकरणसमये विशिष्टं तदभिमानिदेवतापूजनमुपपन्नम् । नक्षत्रस्य स्थाने सामान्यतस्तत्सम्बद्धतिथिग्रहणं स्मार्तानां व्रतेषु

तिथिग्रहणाभ्यासवशादिति बोध्यम् । अत्र वेदान्तरापेक्षया सामवेदाय प्राधान्यदानं शब्दे गानयुक्तस्य प्राधान्यात् । अत एव - "वेदानां सामवेदोऽस्मि" इति गीताग्रन्थश्च सङ्गच्छते । तान्त्रिकैर्गणपतेर्मूलाधारे वास उच्यते । तेजोमयवागिन्द्रियस्य तदायतनम् । तच्चेन्द्रियं ब्रह्मणस्पतेराध्यात्मिकं स्वरूपम् । तन्त्रप्रसिद्धस्य गणपतेश्च निगमेषु न क्वचिदपि स्तुतिर्लभ्यते । अतः कयाचिद्वैदिकदेवतया सहाभेदो गणपतेस्तान्त्रिकैर्वक्तव्यः । अन्यथा गणपतेरवैदिकत्वं प्रसज्येत । न तद्गणपतिसत्तासाधकानां क्षेमङ्करम् । स चाभेदो ब्रह्मणस्पतिनैव वक्तुमुचितः शास्त्रलिङ्गबलात् । एवं तान्त्रिको गणपतिर्ब्रह्मणस्पतेर्नान्य इति सिद्धम् । तस्मादनेन मन्त्रेण स्मार्तैः क्रियमाणं गणपतेरावाहनादिकं युक्तमेव भवति ।

अथान्यः संशयः । "ज्येष्ठराजं भरे कृत्नुम् ।" "ज्येष्ठश्च मन्त्रो विश्वचर्षणे ।" इत्यादाविन्द्रश्च शब्दब्रह्मपतिः शब्दब्रह्मस्वरूपश्च वर्णितः । "निषुसीद गणपते गणेषु ।" इत्यादौ मरुद्गणानां पतिरुक्तः । न केवलो मरुद्गणानां पतिः अपि तु - "तदिद्रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु ।" इति रुद्रस्यापत्यत्वेन च वर्णितः । "भ्रातरो मरुतस्तव ।" इत्यनेन स चार्थः पुष्टिं नीतः । तस्मादिन्द्रब्रह्मणस्पत्योरभेदो वा वक्तव्यः । एकत्र विशेषणानां गौणत्वं निरूपणीयम् । आद्यं पक्षमवलम्बन्ते नैरुक्ताः द्वितीयं याज्ञिकाः । किं न्याय्यम् । अभेदश्च तयोर्भवति भेदश्च । अभेदे दर्शितानि लिङ्गानि। अन्यानि च दृश्यन्ते । "तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे । इन्द्रं श्लोको महि दैव्यः सिषक्तुयो ब्रह्मणो देवकृतस्य राजा"। इत्यत्र पूर्वार्धे प्रकृतो ब्रह्मणस्पतिरेवोत्तरार्ध इन्द्रमितीन्द्रनाम्नोपात्तः । चतुर्थपादोक्तं यच्छन्दवाक्यविशेषणमैन्द्रं तत्र लिङ्गम् । "नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ।"

इत्यत्र ब्रह्मणस्पतिर्वज्री प्रोक्तः । "उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे । उपप्रयन्तु मरुतः सुदानव इन्द्रप्राशूर्भवासचा ।" इत्यत्र पूर्वार्धे प्रकृतो ब्रह्मणस्पतिरेवोत्तरार्ध इन्द्रेति सम्बोध्यते । भेदस्य तु –
"अच्छेन्द्रा ब्रह्मणस्पती हविर्नोऽन्नं युजेव वाजिना जिगातम् ।" (१. २. १२) इति द्वन्द्वनिर्देशो लिङ्गम् । कथं भेदाभेदौ विरुद्धौ भावौ समन्वितावेकत्र भवतः । बहुविभूतिरिन्द्रो यथैन्द्रे प्रदर्शयिष्यामः । तास्विन्द्रविभूतिषु शब्दात्मा ब्रह्मणस्पतिरेकः । विभूतिविभूति-मतोरभेददृष्ट्योक्तिरभेदस्य । भेददृष्ट्याभेदस्य ॥१॥

**देवाश्चित्ते असुर्य प्रचेतसो**
**बृहस्पते यज्ञियं भागमानशुः ।**
**उस्रा इव सूर्यो ज्योतिषामहो**
**विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २॥**

असुर्य असून् रात्यादत्त इत्यसुरो रुद्रस्तस्यापत्यभूत । न केवलम् अवयवार्थयोगाद्रुद्रस्यासुरत्वम् - "त्वमग्ने रुद्रो असुरो महो दिवः" । "यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य" । "प्रवः पान्तं रघुमन्यवेऽन्धो यज्ञं रुद्राय मीळ्हुषे भरध्वम् । दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ।" इति निगमेषु प्रयोगाश्च दृश्यन्ते । बृहस्पते बृहतः शब्दब्रह्मणः प्रभो । देवाः चित्देवा अपि । प्रचेतसः प्रकृष्टान्तःकरणस्य । विश्वावगाहि ज्ञानान्तःकरणस्येति यावत् । ते तव । यज्ञियं यज्ञार्हम् । भागमंशम् । आनशुः प्रापुः । वस्तुतः सर्वेषां मन्त्राणां बृहस्पतिरेव प्रभुः । तथापि शब्दरूपः स देवो देवतान्तर-वाचकमर्थमपि वहन्स्ताभ्यो यज्ञियं भागं कल्पयतीत्यर्थः । अयमेव ऋषिणोद्दिष्टो देवैः प्राप्तो यज्ञियो बार्हस्पत्यभागो यन्मन्त्रभाक्त्वम् ।

ज्योतिषा तेजसा । महः महान् । सूर्यः । उस्रा इव उस्राणामिव किरणानामिव । विश्वेषां इत् सर्वेषामेव । ब्रह्मणां मन्त्राणाम् । जनिता जनयिता । असि भवसि ।

यदि बृहस्पतिर्व्यापकस्य शब्दब्रह्मणो देवता न स्यात्तर्हि ततो ब्रह्मणामुत्पत्तिर्नोपपद्येत । ननु यथा प्रकृतेः शब्दाद्विविधानां शब्दविकृतीनामुद्भवस्तथाऽऽश्रयादाकाशादपि वक्तुं शक्यः । यथा यज्जायते तत्तज्जं वदन्ति तथा यत्र यज्जायते तज्जं च तदाहुः । तस्मादाकाशदेवताबृहस्पतिः कुतो नभवत्विति चेत् । तदोपमानस्वारस्यं भग्नं भवेत् । उस्रा इव सूर्य इत्युपमानम् । यथा तेजसां प्रकृतिः सूर्यस्तेजो विकृतीनां तथा शब्दानां प्रकृतिर्बृहस्पतिः शब्दविकृतीनामिति स्वारस्यम् । अपि च यदि बृहस्पतिराकाशदेवता तर्हि "देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।" इति बृहस्पते-र्द्यावापृथिव्योर्द्वयोर्मात्रोः पुत्रत्वोक्तिर्न सङ्गच्छते । इदमेव गणपते-र्द्वैमातुरत्वम् ।

एवं बृहस्पतिः शब्ददेवतात्वाद्ब्रह्मणस्पतेर्नान्यः । बृहस्पतिशब्दे बृहच्छब्दो मन्त्रवाचको वा गगनवाचको वेति भवतु संशयः । बृहस्पते-रपरः पर्यायो वाचस्पति शब्दस्तु निःसंशयं ब्रह्मणस्पतिशब्दतुल्यार्थः । यथा बृहस्पतिस्तथा ब्रह्मणस्पतिरपि - "प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो मित्रो वरुणो अर्यमा देवा ओकांसि चक्रिरे ।" इत्यनेन मन्त्रजनको वर्णितः । मन्त्रमिति जातावेकवचनम् । अन्यानि च बृहस्पतिब्रह्मणस्पत्योरभेदे लिङ्गानि भवन्ति । तत्रेदं प्रथमम् । गणानां सूक्तेऽन्त्यः स्तोत्रोपसंहारमन्त्रः । शिष्टेष्वष्टादशसु पञ्च ।(१. ५. ९. ११. १७) ब्रह्मणस्पतिनाम लिङ्गवन्तः । अन्ये त्रयोदश

बृहस्पतिनामलिङ्गवन्तः । एवमपि ऋषिरन्तत एकोनविंशे मन्त्रे - "ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधितनयं च जिन्व ।" (१. १. १९) इति पूर्णं सूक्तं ब्राह्मणस्पत्यं द्योतयति । अपि च सूक्ते नामलिङ्ग-भेदेऽपि शैलीत्वेकदेवता स्तुताविव दृश्यते । अथ द्वितीयम् । अत्रैव गार्त्समदे दर्शने द्वितीये सूक्ते - "सेमामविड्ढिप्रभृतिम्" (१. २. १) इति प्रथममन्त्रेण बृहस्पतिनामलिङ्गवता स्तुतेरुपोद्घातः कृतः । अनन्तरं ब्राह्मणस्पत्यं स्तोत्रमारब्धम् । स्तोत्रमध्ये दशमे मन्त्रे पूर्वोत्तर-सन्दर्भाविरोधेन बृहस्पतिनामलिङ्गवानुपन्यासः । तावता किं बार्ह-स्पत्याप्रभृतिर्भवेत् । अथ तृतीयम् । यज्ञो दिवो नृसदन इति सूक्ते प्रथमो मन्त्र इन्द्रनामलिङ्गवान् । तृतीय इन्द्रं ब्रह्मणस्पतिं चाभिन्नत्वेन स्तौति । अन्त्याभ्यां स्तोत्रोपसंहारः । बृहस्पतिनामलिङ्ग- वन्तोऽन्ये षण्मन्त्राः । तत्रोपसंहारे नवमे मन्त्रे - "इयं वां ब्रह्मणस्पते सुवृक्ति-र्ब्रह्मेन्द्राय वज्रिणे अकारि । अविष्टं धियो जिगृतं पुरन्धीर्जतस्तमर्यो वनुषा मरातीः ।" इति स्तोत्रमैन्द्राब्राह्मणस्पत्यमाह । इयं सुवृक्तिरिति प्रागुक्तस्तुतिपरामर्शः । समग्रस्य स्तोत्रस्यैन्द्राब्राह्मणस्पत्यत्वे किमलं प्रथमतृतीयोरेव तन्नामलिङ्गसद्भावः । किं चोपसंहारे प्रस्तुतां प्रार्थनां पूरयत्युत्तरो मन्त्र एवम् - "बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य धत्तं रयिं स्तुवते कीरये चिद्यूयं पातस्वतिभिः सदानः ।"

इन्द्राब्रह्मणस्पती नवमे प्रकृतौ । तदर्थपूरणाय प्रवृत्त उत्तरस्मिन्निन्द्रा-बृहस्पती । अभेद एवोपपद्यत ईदृशी शैली ।

## अग्निर्वैश्वानरो देवता

चित्तिरित्यस्य मन्त्रस्य पराशर ऋषिः, अग्निर्वैश्वानरो देवता, द्विपदा

विराट् छन्दः ।

**चित्तिरपां दमे विश्वायु-**
**स्सद्मेव धीराः संमाय चक्रुः ॥**

अत्र वाक्यद्वये सम्बन्धाय यच्छब्दतच्छब्दावध्याहार्यौ । यत् स्थानम् । धीराः देवाः । सम्माय सम्यङ्मात्वा । सद्मेव गृहमिव । चक्रुः । तस्मिन् । अपां दमे उदकप्रकृतिके स्थाने प्राण इति यावत् । विश्वायुः जगत आयुःस्वरूपः । चित्तिः प्रज्ञानरूपो वैश्वानरः । अस्तीति शेषः । त्रिवृत्करणवशात् सिद्धे प्राणोपाधौ प्रज्ञानरूपो वैश्वानरः संशोभत इति देवतायाः स्थानस्वरूपकथनात्मकोऽयं महामन्त्रः ।

## इन्द्रो देवता

अभित्वेत्यस्य मन्त्रस्य वसिष्ठ ऋषिः । इन्द्रो देवता । बृहतीच्छन्दः । इन्द्रप्रसादसिध्यर्थे जपे विनियोगः ।

**अभित्वा शूर नोनुमो दुग्धा इव धेनवः ।**
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥**

हे शूर शक्तिमन् । इन्द्र परमेश्वर । अस्य जगतो जङ्गमस्य ईशानमधिपतिम् । तस्थुषः स्थावरस्य । ईशानमधिपतिं स्वर्दृशं सर्वलोकसाक्षिणम् । स्वः शब्दोऽत्र लोकसामान्यपरः। निघण्टौ च लोकसाधारणेषु पदेषु पठितः । त्वा त्वाम् । वयमित्यध्याहारः । दुग्धाः दोहिन्यः । प्रस्नुतक्षीरा इति यावत् । धेनव इव । अभिनोनुमः अभिष्टुमः यथा प्रस्नुतक्षीरा

गौर्यजमानमुपतिष्ठते एवं स्नेहार्द्रहृदयो अहं इन्द्र उपतिष्ठ इति भावः । महेन्द्रस्य च पशुपशुमतोरिव सम्बन्धो वर्धतामिति हृदयम् ।

विष्णुर्देवता

इदं विष्णुरित्यस्य मन्त्रस्य मेधातिथिः ऋषिः । विष्णुर्देवता । गायत्रीच्छन्दः।

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**
**समूह्ळमस्य पांसुरे ॥**

विष्णुरन्तर्यामी पुरुषः । इदं सर्वं जगत् विचक्रमे मातवान् । पदम् । त्रेधा निदधे । चक्षुषि मनसि हृदये चाध्यात्मम् । पृथिव्यामन्तरिक्षे दिवि चेत्यधिदैवतम् । अस्य पांसुरे धूलिविशिष्टे पदे समूह्ळं सम्यक् धृतम् । सर्वजगदिति शेषः। तदेतत् तृतीयं पदं न्यासतः । तदेव परमं पदम् इत्युच्यते । सर्वजगत्कारणभूतः कामापरपर्यायो रजोगुण एवात्र धूलित्वेन रूप्यते । हृदयस्थाने सर्वजगतः प्रतिष्ठितत्वात् तस्यैव द्वितीयार्धे प्राधान्यमुक्तम् ।

सूर्यो देवता

सौर इति तृचस्य काण्वः प्रस्कण्वः ऋषिः । सूर्यो देवता । अनुष्टुप्-छन्दः ।

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ १॥

हे मित्रमहः मित्रं सर्वलोकहितङ्करं महः तेजो यस्य स मित्रमहः । तस्य सम्बुद्धिः मित्रमहः सूर्य । अद्य अस्मिन् दिने । उद्यन्नुदयमानः । उत्तरां श्रेष्ठां दिवम् । आरोहन् अधितिष्ठन् । त्वमिति शेषः । मम हृद्रोगं हृदयव्याधिं शारीरं मानसीं वा । हरिमाणं च शारीररक्तक्षयाम्बुपीतवर्णत्वं च । नाशय । यन्मित्रमह इति सम्बोधयति तद्व्यञ्जयति महसैव भेषजेन व्याधिं नाशयेति ।

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं निदध्मसि ॥ २॥

मे हरिमाणम् । शुकेषु पक्षिषु । रोपणाकासु शारिकापक्षिषु च । दध्मसि स्थापयसि, स्थापयेति भावः । अथो अथ । मे हरिमाणम् । हारिद्रवेषु हरितांशेषु । निदध्यसि स्थापयसि स्थापयेति भावः । यत्रायं हरितवर्णः शोभावहो न च रोगाय तत्र गच्छतम् । मां विसृज्येत्यर्थः ।

उदगादयमादित्यो विश्वेन सहसा सह ।
द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥ ३॥

अयमादित्यः । विश्वेन सर्वेण । सहसा बलेन । सह नाकं उपलक्षित इति शेषः । मह्यं द्विषन्तं अहितबुद्धिं कुर्वाणम् । रन्धयन् निरुन्धन् प्रतिबध्नन् इति यावत् । उदगात् उदितः तावाननुग्रहो मयि भगवत इति भावः । तत्र होममाह । अहं द्विषते शत्रवे । रधं निरोधं प्रति-

बन्धमिति यावत् । मो न करोमि मया भगवत्येव सर्वो भारो निक्षिप्त इति यावत् ।

॥ इति वासिष्ठगणपतिमुनिकृता टीका ॥

## श्रीसूक्तम्

**हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १॥**

जाते जाते सर्वस्मिन्नुपजाते विद्यत इति जातवेदाः तस्य सम्बुद्धिः हे जातवेदः भो अग्ने । जानाति वेदमिति जातवेदः । हिरण्यवर्णां विष्णुसम्बन्धिनीम् । हरिणीं संसारखेदहारिणीम् । दारिद्र्यहारिणीमिति वा । सुवर्णानि रजतानि कमलानि तेषां स्रक्माला यस्यास्ताम् । चन्द्रां चन्द्रवत्प्रकाशमानाम् । सकलजनानन्दकारिणीमिति वा । हिरण्मयीं हिरण्यविग्रहाम् । पवित्रस्वरूपां वा । हिरण्यस्वरूपां वा । लक्ष्मीं मोक्षलक्ष्मीम् । लक्ष्मवतीं वा । ज्ञानैश्वर्यसुखारोग्यधनधान्यजयादिकं लक्ष्म यस्याः समुद्दिष्टं सा लक्ष्मीति निगद्यत इति वा । मे मह्यम् । आवह प्रापय । आह्वयेति वा । अग्निर्वै देवानां होतेति श्रुतेः ।

**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २॥**

जातवेदः भगवन् अग्ने । अहं यस्यां श्रीदेव्यां प्राप्तायां सत्याम् ।

हिरण्यं सुवर्णम् । गां धेनुम् । अश्वं वाजिनम् । जात्यैकवचनम् । पुरुषान् पुत्रपौत्रादीन् । विन्देयं प्राप्नुयाम् । अनपगामिनीं अपगमनरहितां अचलामित्यर्थः । तां वक्ष्यमाणलक्षणाम् । लक्ष्मीं मोक्षलक्ष्मीम् । मे मह्यम् । आवह प्रापय ।

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।**
**श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ३॥**

अश्वपूर्वां हयपुरःसराम् । रथमध्यां रथास्वपि मध्यस्थानाम् । हस्तिनादप्रबोधिनीं हस्तिनादाः प्रस्नुता हि तान् एतैः प्रबोध्यत श्रीजन्यां देवीं द्योतनात्मिकाम् । श्रियं श्रियेति यां मोक्षलक्ष्मीं । उपह्वये आह्वयामि । देवी प्रकाशमाना श्रीः मोक्षलक्ष्मी एतल्लक्षणामृतकरीं ऋतत्रां भीरुतां सर्वनामासुलक्षणवतीमोक्षलक्ष्मीलक्षणां आद्दत्य मां भीरुष्वतिजातः ।

असमाप्तम्

# विश्वमीमांसा

## प्रथममक्षरप्रकरणम्

### अक्षरविचारावतारिका (१)

अक्षररूपः शब्दो विश्वस्मिन् विचारणीयवस्तुषु सुतरां मुख्यः । प्रायो विश्वं नामरूपात्मकम् । नामानि सर्वाण्यप्यक्षरात्मकानि । तस्माद्- अक्षरात्मकः शब्दो विश्वस्मिन्नर्धमाक्रम्य तिष्ठतीति यदुच्येत सा नातिशयोक्तिः । अक्षरविभूतीर्वर्णानुद्दिश्यैतत्कथनम् । यदि मूलाक्षरं विचार्येत तदिदं विश्वस्मिन्नक्षरप्राधान्यमितोऽपि भूयिष्ठमवगम्येत । तस्मादस्मिन्विश्वमीमांसाशास्त्रे प्रथममक्षरमीमासां कुर्मः ।

अक्षरमीमांसायामस्माकं प्रथमप्रकृतो वर्णात्मकः **अभिव्यक्तिवादः** शब्दः । तमत्र प्रकरणे लघुना साधारणनामधेयेन शब्द इति व्यवहरामः । केचिदाहुः - "शब्दो विभुर्नित्यश्च । यत्तस्योत्पत्तिरिव दृश्यते । सा वस्तुतो नोत्पत्तिः । अभिव्यक्तिस्तु भवति । संयोगविभागौ तस्याभिव्यञ्जकौ । उच्चारणाभिघातेन प्रेरितो वायुः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानः सर्वतो दिक्कान् संयोगविभागान् उत्पादयति । ते च सर्वासु दिक्षु यावद्वेगमभिप्रतिष्ठन्ते । वायोरप्रत्यक्षत्वात्ते चाप्रत्यक्षाः । त एव नित्यस्याकाशगतस्य शब्दस्याभिव्यञ्जकाः । संयोगविभागेष्वनुपरतेषु शब्द उपलभ्यते । नोपरतेषु । यावत्प्रदेशं च तेषां गतिस्तावत्येव

प्रदेशे शब्दस्याभिव्यक्तस्योपलब्धिः । अतश्चाभिव्यक्तः शब्दो न चिरं श्रूयते । न च सर्वत्र । आदेशादयो न शब्दविकाराः । अपि तु वर्णान्तराणि । यदुच्चारकबाहुल्ये शब्दस्य वृद्धिरिव दृश्यते । सा वस्तुतो न शब्दस्य । अपि तु नादस्य । एतेन मन्दत्वतीव्रत्वस्वरभेदादयो व्याख्याताः । कर्णशष्कुलीमण्डलं व्याप्नुवतां संयोगविभागानां व्यापार एव नादः ।"

ननु शब्दो नित्यश्चेत्तस्याभिव्यक्तिकल्पनमभिव्यञ्जककल्पनं चोपपद्येते । स नित्य इत्यत्र का युक्तिरिति चेत् ।

षड्भिर्हेतुभिर्वयं शब्दं नित्यमवगच्छामः ।

१. अर्थप्रत्यायकत्वान्नित्यः शब्दः । श्रोतुः प्रागननुभूतात्सद्योजाताच्छब्दादर्थबोधः कथं भवेत् । अर्थवत्सादृश्यादर्थप्रत्यायकत्वमिति चेत् । सर्वेषां सद्योजातत्वान्न कश्चिदर्थवान् । केनचित् पूर्वपुरुषेण शब्दानामर्थसम्बन्धः कृतः । अनन्तरं तत्सादृश्यादितरेषामर्थप्रत्यायकत्वमिति चेत् । व्यवहारस्यानादित्वात्तस्यापि पूर्वपुरुषस्य भाषासृ ष्टेः प्राक् काचिद्भाषा स्यादङ्गीकर्तव्या । तत् स्रष्टुः प्रागन्या । तत् स्रष्टुः प्रागितरा । अन्ततः सहजार्थसम्बन्धा काचिदङ्गीकर्तव्यैव भाषा । उक्तदिशा शब्दार्थसम्बन्धस्य पौरुषेयत्वकल्पनेऽनवस्थाप्रसङ्गात् तेन उत्पत्तिवादः पतितः स्यात् । एवं स्थिते दृष्टपरित्यागेनादृष्टकल्पनमन्याय्यम् ।

२. त्रैकालिकार्थबोधकत्वाच्च नित्यः शब्दः ।

३. गोशब्दे दशकृत्व उच्चारिते दशगोशब्दा इति प्रत्ययो न भवति । गोशब्दो दशवारमुच्चारित इत्येव प्रतीतिः । अतश्च नित्यः शब्दः ।

४. शब्दस्य न सन्ति विनश्वरा अवयवाः । यैरारब्धः शब्दो नश्येदित्यनुमातुं शक्येत । यथा तन्तवः पटस्य । उतश्च नित्यः शब्दः ।
५. यदि वायूपादानकः शब्दस्तर्हि जन्मनाशवानिति वक्तुं शक्येत । न स वायूपादानकः । अस्पर्शत्वात् । अतश्च नित्यः ।

६. मन्त्रलिङ्गप्रमाणतश्च शब्दो नित्योऽवगम्यते ।

"तस्मै नूनमभिद्यवे वाचा विरूप नित्यया वृष्णे चोदस्व सुष्टुतिम्" (८. ६४. ६) । अयमग्निस्तुतौ मन्त्रः । अत्र नित्ययेति वाचो विशेषणं शब्दस्य नित्यत्वे लिङ्गम् " इति ।

**उत्पत्तिवादः** अपरे प्राहुः । उत्पद्यते शब्द इति प्रत्यक्षमवगम्यते । प्रत्यक्षविरुद्धमविश्वसनीयम् । यदुच्यते संयोगविभागा अभिव्यञ्जका इति । तत्किमावरणापनोदनेन ? यथा वायोर्मेघापनोदनेन सूर्याभिव्यञ्जकत्वम् उताहो स्तिमितस्य सञ्चालनेन ? यथा तालवृन्तस्य सञ्चालनेन वाय्वभिव्यञ्जकत्वम् । नाद्यः । कस्यचिदप्यावरणस्यानुपलम्भात् । द्वितीयस्मिन्न व्यक्तसूक्ष्मशब्दाद्व्यक्तवर्णमयशब्दोत्पत्तिरित्युक्तं भवति । यथा स्पर्शागोचरसूक्ष्मवायोः स्पर्शगोचरस्थूलवायूत्पत्तिः ।

"रूपं रूपं प्रतिरूपो बभूव
तदस्य रूपं प्रतिचक्षणाय ।

इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता ह्यस्य हरितः शतादश ॥"

## विश्वमीमांसा
## प्रथममक्षरप्रकरणम्
## अक्षरविचारावतारिका (२)

अक्षररूपः शब्दो विश्वस्मिन्विचारणीयवस्तुषु सुतरां मुख्यः। विश्वमेतद्वाच्यवाचकात्मना द्वेधा। तत्र वाचकानि सर्वाण्यप्यक्षरमयानि। तस्मादक्षरात्मकः शब्दो विश्वस्मिन्नर्धमाक्रम्य तिष्ठतीति यद्युच्यते, नातिशयोक्तिर्भवति। अक्षरविभूतीर्वर्णानुद्दिश्यैतत्कथनम्। मूलाक्षर-विचारणे तदिदमक्षरप्राधान्यमितोऽपि भूयिष्ठमवगम्यते। तस्मादस्मिन् विश्वमीमांसाशास्त्रे प्रथममक्षरविचारः क्रियते।

**अभिव्यक्तिवादः** अत्रैवं मन्यते शबरस्वामी। "वर्णात्मकः शब्दो नित्यः। यत्तस्योत्पत्तिरिव दृश्यते सा वस्तुतो नोत्पत्तिः। अभिव्यक्तिस्तु भवति। उच्चारणाभिघातेन प्रेरितो वायुः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानः सर्वतो दि क्कांत्संयोग-विभागानुत्पादयति। ते च सर्वासु दिक्षु यावद्वेगमभिप्रतिष्ठन्ते। वायोरप्रत्यक्षत्वात्ते चाप्रत्यक्षाः। त एव नित्यस्याकाशगतस्य शब्दस्याभिव्यञ्जकाः। संयोगविभागेष्वनुपरतेषु शब्द उपलभ्यते। नोपरतेषु। विप्रकृष्टप्रदेशेष्वभिव्यञ्जकसंयोगविभागानाम् अगतेरश्रवणम्। यदुच्चारकबाहुल्ये शब्दस्य वृद्धिरिव दृश्यते सा वस्तुतो न शब्दस्य। अपि तु नादस्य। कर्णशष्कुलीमण्डलं व्याप्नुवन्तो वर्णानभिव्यञ्जन्तो निरन्तरं क्रियमाणाः संयोगविभागा एव

नादशब्दवाच्याः ।”

यद्यपि शब्दनित्यत्ववादं भगवान्पूर्वतन्त्रकारो जैमिनिरनुह्वाति तथापि तद्भाष्यकारस्य शबरस्वामिन एवेयमभिव्यक्तिपद्धतिः । वादेऽस्मिन्नुच्चारणस्य वायुप्रेरकत्वमेव न वर्णाभिव्यञ्जकत्वम् । अत्रेदं पृच्छामः । उच्चाराणाभिधातप्रेरितो वायुः किं सहजेन सञ्चलनमात्रेण वाय्वन्तराणि प्रतिबाधमानः संयोगविभागानुत्पादयति ? आहोस्विद्-उच्चारणस्य कमपि विशिष्टं गुणमाददानः ? आद्ये शब्दश्रवणमात्रेण स्वरविशेषादुच्चारकप्रतीतिर्न स्यात् । अयं देवदत्तोऽयं यज्ञदत्त इति द्वितीये स च विशिष्टो गुणः कण्ठस्वरान्नातिरिच्यत इति वर्णेभ्यो ध्वनिरन्योऽङ्गीकार्यः । अपि च संयोगविभागा एव नादशब्दवाच्या इति पामराणां नेत्रयोर्धूलिप्रक्षेपणम् । त्वदभिमताः संयोगविभागाः परस्परसङ्घृष्टेभ्यो वायुभ्यो नान्येषाम् । वायुसंयोगविभागाश्च नादं यदि जनयेयुः । तत् किञ्चिदिव वोपपन्नम् । तानेव नादं वदन् प्रत्यक्षमपलपति । नादशब्दो ध्वनिपर्यायः । अनुभूयते चोच्चारकबाहुल्ये ध्वनिरेव बहुलः । ननु नाक्षेपणीयः शबरस्वमी । तस्य संयोगविभागानां नादशब्दः वाच्यत्वेनाग्रहः । शब्दस्य नास्ति वृद्धिरिति निरूपयितुमेव तस्य यत्नः । स मन्यते संयोगविभागनैरन्तर्यमेव शब्दवृद्धिमतिकारकमिति चेत् । एवं यदि “नादवृद्धिः परा” (१. १. १७) इति जैमिनीयं सूत्रमनृजुना पथा न व्याख्यातव्यम् । वक्तव्यं धैर्येण । इदं जैमिनेर्मतम् । ममत्वेतदिति । माभूवन्नादशब्दवाच्याः संयोगविभागाः । तथापि कथमनुभूयमानध्वनिबाहुल्यरूपाः । ते चेदप्रत्यक्षाः कयाचिदपि विधया नानुभूयेरन् । यदि प्रत्यक्षास्तर्हि स्पर्शगोचरा एव भवेयुः । न श्रुतिगोचराः । वायुसम्बन्धित्वात्तेषां वाय्वनुभूता एव तदनुभूतिसम्भवात् । यत्तीव्रस्पर्शो महान्वायुः केवलं कमपि ध्वनिमभिव्यनक्ति

जनयति वा स इतोऽन्यो विषयः । तस्मान्नास्ति बाह्यवायुसम्बन्धिनः संयोगविभागाः शब्दाभिव्यञ्जका इति ।

**उत्पत्तिवादः** अक्षपादान्वीक्षकी भाष्यकारो वात्स्यायनो मन्यते । "उच्चारणक्रियायां यौ संयोगविभागौ तौ शब्दं जनयतः । शब्दाच्छब्दसन्तानोत्पत्तिः । सर्वासु दिक्षु । ते च यथा योगं श्रुतिगोचराः स्युः ।" इति । अत्रेदं प्रष्टव्यम् । किमाकाशस्य गुणः शब्दः ? उताहो किमपि द्रव्यम् ? आद्ये संयोगविभागौ प्रागसन्तं गुणमाकाशे जनयत इति वाच्यम् ।

असमाप्तम्

देवताकाण्डे द्वितीयं प्रकरणम्

# इन्द्रनामनिर्वचनम्

निरूपितमस्त्यन्तःकरणवती देवतेति सम्प्रति तस्याः समष्टितः पार्थक्येन च विभूतयो विचार्यन्ते । तत्रेन्द्रः प्रथमं विचारणमर्हति समष्टिभूतत्वात् । तत्र प्रथमं नामविचारः क्रियते । आचार्यो यास्को महता गौरवेण बहुधेन्द्रनाम निर्वक्ति । तदस्माकमिन्द्रनामार्थपरीक्षायाम् अतीवोपयुक्तं भवेत् ।

१. "इन्द्र इरां दृणातीति वा" इरामन्नं दृणाति भिनत्तीतीरादारः । इरादार एव वर्णलोपैर्वर्णागमेन चेन्द्रः । अन्नस्य भेत्तृत्वं चोप्तानां बीजानां भेदनम् । अङ्कुराकारतया परिणामनमिति यावत् । तत्र जलक्लेनादीनि कानि-चिन्निमित्तानि भवन्तु नाम । तथाप्यङ्कुरोत्पादिकाशक्तिरन्यैव दृश्यते । सा व्यापकस्येन्द्रस्य । "अङ्कुरादिकं सकर्तृकं कार्यत्वाद्धटवत् ।" इति तार्किकाणामीश्वरानुमानमत्र पाठकैर्लक्षीकर्तव्यम् ।

२. "इरां ददातीति वा"। इरामन्नं ददातीतीरादः । इराद एव वर्णलोपवर्णागमवर्णव्यत्ययैरिन्द्रः । अत्रान्नास्योत्पादकत्वमेवान्नस्य दानमभिप्रेतम् ।

३. "इरां दधातीति वा"। इरामन्नं दधातीतीराधः । इराध एव वर्णलोपवर्णागमवर्णादेशवर्णव्यत्ययैरिन्द्रः । अन्नस्य धारणेऽपि वृष्ट्यादीनि कानिचिन्निमित्तानि भवन्तु नाम । तथापि वस्तुतो धात्री प्राणशक्तिरन्यैव विद्यते । सा व्यापकस्येन्द्रस्य ।

४. "इरां दारयत इति वा"। प्रथमेनेदं व्याख्यातम् । प्रेरणार्थविशेषापेक्षया पृथक् प्रदर्शनम् ।

५. "इरां धारयत इति वा"। तृतीयेनेदं व्याख्यातम् । व्युत्पन्नमूलरूप-विशेषापेक्षया पृथक् प्रदर्शनम् । इराधार एवात्रेन्द्रः ।

६. "इन्दवे द्रवतीति वा"। इन्दवे सोमरसाय द्रवतीतीन्दुद्रवः । इन्दुद्रव एव वर्णलोपैरिन्द्रः ।

७. "इन्दौ रमत इति वा"। इन्दौ सोमरसे रमतीन्दुरामः । इन्दुराम एव वर्णलोपैरिन्द्रः ।

८. "इन्धे भूतानीति वा"। भूतानीन्धे प्रकाशयतीतीन्धः । इन्ध एव वर्णादिशवर्णागमाभ्यामिन्द्रः । "तस्य भासा सर्वमिदं विभाति ।" इति कठोपनिषद्वचनमत्र पाठकैर्लक्षीकर्तव्यम् ।

इदं निर्वचनं बृहदारण्यकोपनिषदेवं समर्थयति - "इन्धो ह वै नामैष योऽयं दक्षिणेक्षन्पुरुषस्तं वा एतमिन्ध सन्तमिन्द्र इत्याचक्षते परोक्षणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ।" परमात्मन एवेदं प्रकरणं न चक्षुरिन्द्रियस्य विज्ञानस्य वा । उत्तरत्र सहेन्द्राण्या हृदयसंस्तावत्वा-द्युक्तेः शरीरादात्मनः पृथक्त्वेनाभिधानात्तेनैव परविद्योपसंहरणाच्च । इदमुत्तरत्र भूयो निपुणं विचारयिष्यामः ।

९. "तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते ।" ब्राह्मण-वाक्योदाहरणेनेदं निर्वचनम् । तदन्यन्निर्वचनमिति शेषः ।

एनमिन्द्रमात्मरूपेण शरीरमनुप्रविष्टं प्राणैः स्वांशभूतैरन्तःकरणादिभिः समैन्धन्न दीपयन्निति यत् । देवता इति पूर्वप्रकृतं कर्तृपदम् । तदिन्द्रस्येन्द्रत्वम् । इध्यत इतीन्धः । इन्ध एवेन्द्रो यथा पूर्वम् । पूर्वस्मिन्निर्वचने धातोः कर्तरि प्रत्ययः । अत्र कर्मणि । अर्थविशेष-श्चास्ति । पूर्वत्र सर्वभूतावभासकत्वमिन्धत्वम् । अत्र तात्पर्यत इन्द्रिय-द्वारा विशिष्टं भानम् । तच्च विषयज्ञानवत्त्वान्नातिरिच्यते । प्राणो शब्दो न केवलं पञ्चात्मकस्य श्रेष्ठस्य । अपि तु ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाम् अन्तःकरणस्य च सामान्यतो वाचको दृश्यते वैदिकभाषायाम् ।

१०. "इदं करणादित्याग्रायणः" अस्य जगतः करणात्सर्जनादिदङ्करः । इदङ्कर एव वर्णव्यत्ययेन वर्णलोपैश्चेन्द्र इत्याग्रायण आचार्यो मन्यते । आग्रायणग्रहणं पूजनीयप्राचीनाचार्यमतप्रदर्शनार्थं न विमतत्वेन खण्डनार्थम् ।

११. "इदं दर्शनादित्यौपमन्यवः ।" अस्य सर्वस्य व्यक्तस्य दर्शनात् साक्षित्वादिदन्द्रः । इदन्द्र एव दलोपादिन्द्र इत्यौपमन्यव आचार्यो मन्यते । औपमन्यवग्रहणं यथा पूर्वं गौरवार्थं न निरासार्थम् ।

इदं निर्वचनमैतरेयोपनिषदेवं समर्थयति । "स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमिति तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ।" मानवशरीरमनुप्रविष्टस्य परमस्येदं प्रकरणम् ।

१२. "इन्दतेर्वैश्वर्यकर्मणः"। ऐश्वर्यकर्मणः इन्दतेः इदि परमैश्वर्य इति धातोर्वा निष्पन्नमिन्द्रनाम । धातोः कर्तरि रन् प्रत्यये कृते रूपं सिध्येत् ।

इन्द्रो नाम परमेश्वर इत्यर्थः ।

१३. "इन्दञ्छत्रूणां दारयिता वा ।" इन्दन्नीशानः सन् शत्रूणां दारयिता इन्दद्दारः । इन्दद्दार एव वर्णलोपैरिन्द्रः ।

१४. "द्रावयिता वा"। इन्दन् शत्रूणां द्रावयितेन्दद्द्रावः । इन्दद्द्राव एव वर्णलोपैरिन्द्रः । अस्य निर्वचनस्य पूर्वतुल्यार्थत्वेऽपि धातुभेद-विशेषापेक्षया पृथक् दर्शनम् ।

१५. "आदरयिता च यज्वनाम् ।" इन्दन् यज्वनामादरयिता चेन्दद्दरः । इन्दद्दर एव वर्णलोपैरिन्द्रः । उपसर्गं विनापि दृङ आदरार्थत्वादत्रेन्दद्दर इत्येव मूलरूपं कल्पयितुं युक्तं परिणामलाघवाय ।

एवं पञ्चदशधा निरुक्तमाचार्येणोज्ज्वलमिन्द्रनाम । लघुनोपायेन देवतायाः स्वरूपं ज्ञापयितुं नामनिर्वचनम् । एतैः पूर्वाचार्यकृतैरिन्द्रनामनिर्वचन-विकल्पैरस्माभिरिदं ज्ञातम् - अन्नस्योत्पादकोऽन्नस्य धर्ता सोमप्रियः सर्वभूतावभासकः सर्वदेवानुसृतो जगतः स्रष्टा जगतः साक्षी परमेश्वरो दुष्टानां निग्राहको भक्तानामनुग्राहक इन्द्र इति । सर्वेषां चावयवार्थ-विकल्पानां देवतायामन्वितत्वात् । तेष्वष्टमादिभिः पञ्चभिर्नामार्थ-निर्वचनविकल्पैः स्पष्टं विज्ञायते वेदार्थविमर्शकाणामाचार्याणां प्राचां दृष्टाविन्द्र एव सर्वेश्वर इति ।

**अर्वाचामीश्वर एव प्राचामिन्द्रः** तस्मादस्माभिरिदमङ्गीकर्तव्यं स्याद् अर्वाचामीश्वरः एव प्राचामिन्द्रः । अधुनातनैः शास्त्रीयचर्चासूप-

युज्यमानं जगदध्यक्षपरमीश्वरपदमादिवेदसंहितायां न क्वापि प्रयुक्तं दृश्यते । उत्तिष्ठति सम्प्रत्ययं प्रश्नः । सर्वदेवताप्रतिपादकमूलग्रन्थे महत्यादिवेदे जगदध्यक्षपरं प्रसिद्धं किं पदमासीत् ? येन नः पूर्वे महर्षयो वसिष्ठादयः परमं व्यवजह्रुः ।

तदेवेन्द्रपदमिति ब्रूमः । ईश्वरपदादिन्द्रपदं न किञ्चिदपि न्यूनमवयवार्थे । प्रत्युत किञ्चिदधिकम् । ईश ऐश्वर्य इति धातोर्निष्पन्नमीश्वरपदम् । इदि परमैश्वर्य इति धातोरिन्द्रपदम् । अपि च बह्वर्थं यथा निरवोचदाचार्यो यास्कः ।

अत्र सन्दर्भे प्रथमप्रकरणे देवतास्तित्वसाधनार्थमुदाहृतं "यं स्मा पृच्छन्ति" इति मन्त्रं स्मारयामः । ईश्वरो नास्तीति वादमाकर्ण्याधुनातनो भक्तो यादृश्या वचनधोरण्योपदिशेत् तादृशी वचनधोरणी तत्र दृश्यते । यथार्वाचां भाषायां नास्तिको निरीश्वरः तथा प्राचां भाषायामनिन्द्रः । अत्रायं मन्त्रपादो द्रष्टव्यः ।

"किं मामनिन्द्राः कृणवन्ननुक्थाः ।" (५. २. ३ ऋषिर्वृशः)

मामनिन्द्राः इन्द्रो नास्तीति वादिनः अनुक्थाः मन्त्ररहिताः किं कृणवन् किं कुर्वन्तु ? प्रतिपक्षान्दस्यून्मनसि निधाय ऋषेरियमुक्तिः ।

**इन्द्रस्य जगदध्यक्षत्वम्**

नामार्थप्रदर्शनादार्षशैलीप्रदर्शनाच्चार्वाचामीश्वर एव प्राचामिन्द्र इति निरूपितम् । अथ प्रत्यक्षैर्मन्त्रप्रमाणैस्तन्निरूपयिष्यामः ।

ईश्वरस्य नामानुरूपं प्रथमं लक्षणं सकलजगदाधिपत्यम् ।

आदिवेदसंहितायामिन्द्र एव सकलजगदधिपतिरभिधीयते । अत्रेमानि कानिचिदुदाहरणानि ।

"अभित्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥"
(६. ३२. २२. ऋषिर्वसिष्ठः)

हे इन्द्र हे शूर अदुग्धा धेनव इव स्थिताः वयम् । अस्य जगतः जङ्गमात्मकप्रपञ्चस्य ईशानमीश्वरं तस्थुषः स्थावरात्मकप्रपञ्चस्य च ईशानं स्वर्दृशं सूर्यचक्षुषं सूर्य एव लोकदृष्ट्या स्वरित्युच्यते । अत एव स्वः स्वाहेति होमे सूर्याय त्यागः सङ्गच्छते । त्वा त्वां अभिनोनुमः स्तुमः । अस्मच्छरीरसारभूतस्य जीवात्मनो निजसायुज्यं देहीत्यदुग्धधेन्वौपम्य-स्वारस्याद्गम्यते । यजमानो ह्यदुग्धधेनोः सारं पयो दुग्ध्वा पिबति।

"भुवो जनस्य दिव्यस्य राजा पार्थिवस्य जगतस्त्वेष सन्दृक् ।"
(६. २२. ९. ऋषिर्भारद्वाजः)

इन्द्रस्य स्तवेऽयमर्धर्चः । हे इन्द्र त्वेष सन्दृक् दीप्तदृष्टिस्त्वं दिव्यस्य जनस्य देवताप्राणिवर्गस्य राजा भुवः अभवः । तथा पार्थिवस्य जगतः राजा भुव इति पूर्वेणान्वयः ।

"पतिर्बभूथा समो जनानामेको विश्वस्य भुवनस्य राजा ॥"
(६. ३६. ४. ऋषिर्नरः)

अयं चार्धर्च इन्द्रस्य स्तवे । हे इन्द्र त्वं जनानां सर्वेषां प्राणिनां असमः

पतिर्बभूथ बभूविथ । तथा एक एव विश्वस्य भुवनस्य राजा बभूथेति पूर्वेणान्वयः ।

"इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परिता बभूव ॥"
(१. ३२. १५. ऋषिर्हिरण्यस्तूपः)

वज्रबाहुरिन्द्र यातः गच्छतो जङ्गमस्य अवसितस्य स्थितस्य स्थावरस्य शमस्य शान्तस्य जन्तोः शृङ्गिणः शृङ्गवतश्च जन्तोः राजा । सेदु स एव खलु चर्षणीनां प्रजानां राजा भूत्वा क्षयति वर्तते । ता तानि भूतानि परि परितः नेमिः अरान्न अरान् परित इव बभूव । न केवलं राजा किन्तु तेषामन्तर्यामी भूत्वा व्याप्तश्चेत्यर्थः ।

"महो दिवः पृथिव्याश्च सम्राट् ।" (१. १००. १. ऋषयोवार्षागिराः)

इन्द्रस्य स्तवेऽयं पादर्चः । महो महतोऽन्तरिक्षलोकस्य दिवः द्युलोकस्य पृथिव्याः पृथिवीलोकस्य च सम्राट् सार्वभौमः मरुत्वानित्युत्तरेण सम्बन्धः ।

"यो विश्वस्य जगतः प्राणतस्पतिः ।" (१. १०१. ५)

अयं च पादर्च इन्द्रस्य स्तवे । यः विश्वस्य सर्वस्य जगतः प्रपञ्चस्य तथा विश्वस्य प्राणतः प्राणिनश्च जातावेकवचनम् । प्रभुः तं मरुत्वन्तमित्युत्तरेणान्वयः ।

"इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रेह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥" (?)

इन्द्र मह्ना माहात्म्येन रोदसी द्यावापृथिव्यौ पप्रथत् विशाले अकरोत् । तथा शवः आत्मीयं बलं च पप्रथत् विस्तारितवान् । विस्तीर्णयोर्द्यावा-पृथिव्योर्धारणाय निजं बलं च विस्तृतमकरोदित्यर्थः । इन्द्रः सूर्यमरोचयत् प्राकाशयत् । इन्द्रस्य तेजसैव सूर्यः प्रकाशते न स्वतेजसेत्यर्थः । इन्द्रेह हेतिभाववृत्तज्ञापकमव्ययम् । विश्वा समस्तानि भुवनानि येमिरे यतानि भवन्ति । इन्द्रेण नियम्यन्त इति भावः । सुवानासः सुताः इन्दवः सोमाश्च इन्द्रे येमिरे । अत्रेन्द्रस्य जगन्नियामकत्वेन सहेश्वरलक्षणेन द्यावापृथिव्योर्विशालीकरणं सूर्यप्रकाशनं चेति अन्ये च तल्लक्षणे प्रोक्तेः ।

अयं च तृचोऽस्यार्थस्य भूयसे स्पष्टीकरणाय ।

१. यदा ते हर्यता हरी वावृधाते दिवे दिवे ।
आदित्ते विश्वा भुवनानि येमिरे ।

२. यदा ते मारुतीर्विशस्तुमिन्द्र नियेमिरे ।
आदित्ते विश्वा भुवनानि येमिरे ॥

३. यदि सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ।
आदित्ते विश्वा भुवनानि येमिरे ॥

(८. १२. २८-३०. ऋषिः पर्वतः)

हे इन्द्र ते हर्यता मनोहरौ हरी अश्वौ दिवे दिवे यदा वावृधाते बद्धौ भवतः । आदिम् अनन्तरमेव ते विश्वा भुवनानि येमिरे ।(समस्तानि भुवनानि यतानि भवन्ति) ॥ १॥ हे इन्द्र यदा ते तव सम्बन्धिन्यः मारुतिर्विशः मरुद्रूपाः प्रजाः देवा इति यावत् । तुभ्यं नियेमिरे । आदिदित्यादि प्राग्वत् । मरुतः सर्वोत्कृष्टः प्राणिवर्गः । तेषां चेन्द्राधीनत्वात्सर्वाणि भुवनानि चेन्द्राधीनानि बभूवुरिति भावः ॥ २॥ हे इन्द्र त्वं यदा अमुं सूर्यं एतन्नामकं शुक्रं दीप्यमानं ज्योतिः दिव्याकाशे अधारयः धृतवानसि ।आदिदित्यादि प्राग्वत् ।सर्वलोकधारकस्य सूर्यस्य धारणेन सर्वलोकनियामकत्वमिन्द्रस्य सिद्धमिति तात्पर्यम् ॥ ३॥

"इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत्पर्वतानाम् ।
इन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्र।"

(१०. ८९. १०. ऋषीरेणुः)

इन्द्रो दिवः द्युलोकस्य ईशे ईश्वरो भवति ।इन्द्रः पृथिव्याः ईशे ।इन्द्रः अपामन्तरिक्षलोकस्य ईशे ।इन्द्र इत् इन्द्र एव पर्वतानां मेघानामीशे । इन्द्रः वृधां वर्धमानानां सर्वेषां प्राणवतां ईशे । इन्द्र इत् इन्द्र एव मेधिराणां सर्वेषां प्रज्ञावतां च ईशे ।इन्द्रः क्षेमे हव्यः ।इन्द्रः योगे च हव्यः ।अलब्धस्य लाभो योगः ।लब्धस्य पालनं क्षेमम् ।

"तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ॥"

(१. ८९. ५. ऋषिर्गोतमः)

अयमर्धर्चो वैश्वदैवे दृश्यते ।वयं जगतः जङ्गमस्य तस्थुषः स्थावरस्य च पतिं प्रभुं ईशानं ईश्वरं धियं जिन्वं बुद्धिं प्रीणयन्तं बुद्धिप्रीणनं चात्र

लक्षणया बुद्धिमत्प्रीणनम् । तं देवं अवसे रक्षणाय हूमहे आह्वयामः । अयमदृष्टदेवतानामलिङ्गोऽर्धर्चो जङ्गमस्थावराधिपत्यलिङ्गेन विभज्य होम इन्द्रार्थं विनियुज्यते । सायणाचार्यश्चास्यार्धर्चस्य व्याख्यानमिन्द्र-परतयैव चक्रे । आदिवेदगतिविरुद्धत्वादन्यदेवतापरत्वेन व्याख्यातुं नाशकत् ।

केचिदाहुः – "अस्त्विन्द्रो लोकत्रयस्य पतिः । तथापि नेश्वरः । ईश्वरस्तस्मै लोकत्रयराज्यं दत्तवान् यदा तद्राज्यं इन्द्रादसुरैः अपह्रियेत तदेश्वरः प्रादुर्भूतस्तेषामसुराणां संहारं कृत्वा पुनरिन्द्राय राज्यं प्रयच्छेत् । त्रैलोक्यराज्यभोगानुभव एवेन्द्रस्य कार्यं मुख्यम् । त्रैलोक्यस्य रक्षणं त्वीश्वरस्य कार्यम् ।" इति ।

एतादृशी विचित्रा राज्यपद्धतिः सुतरां विवेकशून्येष्वपि सङ्घेषु न दृश्यते । सति रक्षितरि विषयभोगानुभवार्थं जगतां कश्चिदशक्तो लम्पटो राजा किमावश्यकः ? इयं विलक्षणा दैवराज्यपद्धतिः – जगतां रक्षिता राजैकः विषयभोगभुग्राजान्या इति । प्रदर्शितान्यार्षदर्शनप्रमाणानि भगवन्तम् इन्द्रमसमं सर्वान्तर्यामिणं द्यावापृथिव्योः प्रथयितारं महाशक्तिं सूर्यस्यापि प्रकाशकं तथा धारकं सर्वेषां देवानां नियन्तारमेकमेव जगतां राजानं प्रदर्शयन्ति । मन्त्रेषु प्रदर्शितं देवतानां माहाभाग्यं यथार्थमेव भवति न मिथ्यामुखस्तुतिरिति प्रामाण्यकाण्डे निरूपितम् । तथापि यदि मिथ्येत्याग्रहः प्रत्यक्षं वेदं विसृज्य प्रच्छादितात्मनामभिः कृतानि पुराणानि श्रद्दधानैः तादृशैरस्माकं न कोऽपि विवादः । य आर्षाणि दर्शनानि श्रद्दधाति तस्मै वयं सर्वमिदं सप्रमाणं दर्शयामः ।

**इन्द्रस्य स्वराट्त्वम्** इन्द्राय न केनापि दत्तं त्रैलोक्यराज्यम् । स

स्वराट् । स्वराज्यं नाम स्वतन्त्रं सहजमाधि- पत्यम् । अत्रेमानि कानिचित्प्रमाणानि प्रदर्श्यन्ते।

पादम् - "स्वयुरिन्द्र स्वराडसि" (३. ४५. ५. ऋषिर्विश्वामित्रः)

हे इन्द्र त्वं स्वयुः आत्मकामः असि । अपि च स्वराट् स्वतो राट् असि ।"यस्त्वात्मरतिरेव स्यात् " इत्यादौ वर्ण्यमानमात्मारामत्वमेवात्र स्वयुशब्देनोच्यते । इन्द्रो यद्यपि त्रैलोक्यस्य भर्ता तथापि लौकिक-विषयकामो न सः । किन्त्वात्मकाम एव स भवतीति प्रथमवाक्य-तात्पर्यम् । तस्य त्रैलोक्यराज्यं च स्वतः सिद्धमिति द्वितीयवाक्यतात्पर्यम् । एतेनेन्द्रः परतन्त्रराज्यो विषयभोगासक्तश्चेति वदन्पौराणिको निरस्तः ।

"स्वराळिन्द्रो दम आविश्वगूर्तः । स्वरिरमत्रो ववक्षे रणाय ॥"
(१. ६१. ९. ऋषिर्नोधाः)

स्वराट् स्वयंसिद्धो राजा विश्वगूर्तः विश्वस्मिन्कर्मणि समर्थः स्वरिः सुशत्रु शोभनः शत्रुरिति यावत् यं संहरति तस्मै च स्वर्गं ददातीति शोभन-शत्रुत्वमिन्द्रस्य ।अमत्रः अमात्रः अमेय इति यावत् ।इन्द्रः दमे शत्रुदमन-विषये रणाय युद्धाय आववक्षे प्रापयति स्वकीयं जनमिति शेषः ।

"यस्य ते नूचिदादिशं न मिनन्ति स्वराज्यम् न देवो नाध्रिगुर्जनः॥"
(८. ८२. ११. ऋषिः सुकक्षः)

ऐन्द्रे सूक्त इयमृक् । हे इन्द्र नूचित् इदानीं यस्य ते आदिशं आज्ञां स्वराज्यं स्वतः सिद्धं राजत्वं च न मिनन्ति न हिंसन्ति मनुष्या इति

शेषः । अपि च देवः देवजातीयोऽपि न मिनातीति वचन विपरिणमेनानुवृत्तिः । किं च अध्रिगुः अघृतगमनः नित्यसञ्चरणशील इत्यर्थः । जनः राक्षसः जनशब्दः प्राचां भाषायां प्राणिनि राक्षसे च वर्तते । न मिनातीति प्राग्वदनुवृत्तिः । एतेनेन्द्रस्य स्वराज्यं न केवलं स्वतन्त्रं अपि तु परैरविचाल्यं चेति स्पष्टीभवति ।

**इन्द्रस्य व्यापकत्वम्**

पौराणिकास्तु मन्यन्ते भगवन्तमिन्द्रमस्मदादिवद्विग्रहवन्तं कञ्चन देवताव्यक्तिविशेषम् । तस्यास्तु नाम मायाधृतं किमपि विग्रहमुताहो बहूनि विग्रहाणि तत्र नास्माकमाक्षेपः । तथापि यत्पौराणिकैस्तस्य व्यापकत्वं न लक्षीकृतं तत एव तेषां मतिप्रमादो बहुलोऽभूत् । वस्तुतो भगवानिन्द्रो भुमिमाकाशं च व्याप्य परस्तादपि परिशिष्टो भवतीति विज्ञायते । तदिदमीश्वरस्याऽसाधारणमेकं लक्षणम् । इन्द्रस्य व्यापकत्वं यदि वयं सप्रमाणं निरूपयितुं शक्नुमस्तर्हि तस्येश्वरत्वस्थापने किञ्चिदेव भारोऽवशिष्येत । तत्रेमानि कानिचित्प्रमाणानि प्रदर्श्यन्ते ।

"ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥" (७. ६. ५)

"न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् ।
न विव्यचन्त भूमयः ॥" (७. ६. १५) (उभयोरपि ऋषिर्वत्सः)

इन्द्रः उभे रोदसी द्यावापृथिव्यौ चर्मेव समवर्तयदिति यत् यदिच्छया विस्तारयति सङ्कोचयति वा तदिह संवर्तयतेरर्थः । अस्येन्द्रस्य तदोजः स प्रतापः तित्विषे दिदीपे ॥

द्यावः द्युलोकाः सूर्याणां बहुत्वात् द्याव इति बहुवचनम् । ओजसा प्रतापेन इन्द्रं न विव्यचन्त न व्याप्नुवन्ति । तथा अन्तरिक्षाणि भूमिसूर्यबहुत्वापेक्षयान्तरालबाहुल्यादन्तरिक्षबाहुल्यम् । वज्रिणमिन्द्रं न विव्यचन्त । तथा भूमयः इयमेकैव न भूमिः सन्ति बह्व्यो भूमयो विशालेऽत्र जगतीति ऋषिः पश्यति । सूर्यभूमिबहुत्वं बहिरङ्गप्रकृति-शास्त्रशोधनरहिते पुरातनकालेऽपि यदृषिणा विलोकितं तदलौकिक-दिव्यज्ञानवैभवमिति को वा न ब्रूयात् ! ग्रहराजानां बाहुल्यात्सूर्यबाहुल्यं, ग्रहाणां बाहुल्यात् (न केवलमस्मिन् ब्रह्माण्डे सर्वेष्वपि ब्रह्माण्डेषु) भूमिबाहुल्यमिति विवेकः । न विव्यचन्त न व्याप्नुवन्ति । सर्व-ब्रह्माण्डातिशायि व्याप्तिर्भगवानिन्द्र इत्यर्थः ।

"उभे चिदिन्द्र रोदसी महित्वाऽऽप प्राथत विषीभिस्तुविष्मः ॥"

(७. २०. ४)

"अभिक्रत्वेन्द्रभूरधज्मन्न ते विव्यङ्महिमानं रजांसि ॥"

(७. २१. ६ज)

अर्धर्चयोरुभयोः ऋषिर्वसिष्ठः ।

हे इन्द्र तुविष्मः बहुसम्पत्तिस्त्वं महित्वा महिम्ना व्यापकत्वेनेति यावत् तविषीभिर्बलैश्च उभे चित् रोदसी द्यावापृथिवी आपप्राथ आपूरितवान् असि ।

हे इन्द्र क्रत्वा कर्मणाज्मन् भूमौ स्थितान् अभिभूः अभ्यभूः अभिभवनं च स्वायत्तीकरणम् । अध किञ्च ते महिमानं रजांसि सर्वे लोकाः न विव्यक् न व्याप्नुवन्ति ।

"प्रयदित्था महिना नृभ्यो अस्ति अरं रोदसी कक्ष्ये३नास्मै ।
संविव्य इन्द्रो वृजनं न भूमा भर्ति स्वधावाँ ओपशवि द्याम् ॥"
(१. १७३. ६. ऋषिरगस्त्यः)

इत्था सत्यं यथा तथा नृभ्यः मनुष्येभ्यः महिना महत्त्वेन प्रास्ति प्रभवतीति यत् माहात्म्येन नृणां प्रभुर्भवतीति यदित्यर्थः । तत्र प्रभुत्वे अस्मै इन्द्राय रोदसी द्यावापृथिव्यौ नाम कक्ष्ये गृहकक्ष्ये नारं न पर्याप्ते । महता इन्द्रस्य प्रभोः सञ्चरणायाल्पत्वान्न पर्याप्ते इति तात्पर्यम् । इन्द्रः भूम भू जगत् वृजनं न खुरमिव वृजतेः कर्तनार्थस्येदं रूपम् । क्षेत्रप्रवेशे सस्यं कृन्ततीति खुरस्य वृजनसंज्ञा । अन्यस्माद्वैवं जातीयात्कर्तनात् । संविव्ये आवृणोति । वृषभस्य शरीरे यथा खुरस्य रूपमल्पत्वान्न ज्ञायते तथेन्द्रस्य शरीरे भूमिरित्यर्थः । स्वधावान् महाशक्तिमानिन्द्रः । "आनीदवातं स्वधया तदेकम् ।" इत्यादाविवात्र स्वधाशब्दः शक्तिवाची । द्यां द्युलोकं ओपशमिव शृङ्गमिव भर्ति बिभर्ति । वृषभस्य शरीरे ज्ञायमानमपि यथा शृङ्गस्य रूपमल्पमेव भवति तथेन्द्रस्य शरीरे दिवो रूपमिति भावः । खुरशृङ्गौपम्याल्लोक-द्वयमिन्द्रशरीरैकदेश इति गम्यते । अपि च तद्धारणे भगवत इन्द्रस्य न कश्चिद्भार इति च व्यज्यते ।

"प्रहिरिरिक्ष ओजसा दिवो अन्तेभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमनुस्वधां ववक्षिथ ॥"
(८. ७७. ५. ऋषिर्नोधाः)

हे इन्द्र हि यस्मात्कारणात् ओजसा व्याप्तिमत्त्वप्रतापेन दिवः द्युलोकस्य पर्यन्तेभ्यः प्ररिरिक्षे अतिरिक्तो भवसि । तस्मात्कारणात् पार्थिवं रजः भूलोकः त्वा त्वां न विव्याच न व्याप्नोति । दिवमप्यतीतं कथं

भूमिर्व्याप्नुयादिति भावः । तादृशस्त्वं अनु अस्माकं सामर्थ्यमनुसृत्येति यावत् । स्वधां शक्तिं ववक्षिथ प्रापयितुमिच्छ ।

अस्यैव नोधस आर्षः ।

"अस्ये देव प्रिरिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात् ।"

(१. ६१. ९)

इत्यर्धर्चश्चात्रोदाहर्तव्यः ।

"ववक्ष इन्द्रो अमितमृजीष्युभे आपप्रौ रोदसी महित्वा ।
अतश्चिदस्य महिमाविरेच्यभियो विश्वा भुवना बभूव ॥"

असमाप्तम्



Kavyakantha Ganapati Muni and his Family
A Sketch by Madam Jane Adams

# ऐन्द्रसहस्रनामभाष्यम्

अथात ऐन्द्रं सहस्रनामस्तोत्रं व्याख्यास्यामः । इन्द्रादीनि स्वराडन्तानि सहस्रं नामानि मान्त्रवर्णिकान्यत्र भवन्ति । ये भवन्ति ऋषयो दाशतयीषु त एवैषां नाम्ना द्रष्टार इति हेतोर्यद्यपि त एवात्र ऋषयो वक्तुमुचिताः । तथापि तेषां बहुत्वात्सर्वमन्त्रदर्शनानां मूलभूतो ब्रह्मणस्पतिरस्यैन्द्रनाम-सहस्रस्य ऋषिर्वाच्यः । अनुष्टुप्सु सङ्गृहीतत्वादनुष्टुप्छन्दः । परमाकाशकालसूर्यविद्युताग्निरूपत्वेन चतुर्विभूतिरिन्द्रो देवता । इन्द्रप्रीत्यर्थे पारायणे जपे पूजने च विनियोगो भवति । पूजने विनियोगे तु नामानि चतुर्थ्यन्तानि प्रणवादीनि नमो विरामाणि प्रयोज्यानि ।

इन्द्रो देवतमोऽनीलः सुपर्ण पूर्णबन्धुरः ।<br>
विश्वस्य दमिता विश्वस्येशानो विश्वचर्षणिः ॥ १॥

प्रथमश्लोके सप्तनामानि भवन्ति ।

तत्रेन्द्र इत्येकं नाम । इन्दत इतीन्द्रः परमेश्वरः । इदि परमैश्वर्य इति पाणिनिस्मरणात् । परमेश्वरत्वं च सर्वाध्यक्षत्वम् । इन्धे प्रकाशयति भूतानि सर्वाणीतीन्धः । इन्ध एव वा वर्णादेशवर्णागमाभ्यामिन्द्रः । भूतानां प्रकाशत्वं चान्तर्यामिरूपेण प्रवेशात् । इन्धो ह वै नामैष योऽयं दक्षिणेक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति वाजसनेयिनां ब्राह्मणोपनिषदत्र

भवति । नन्विदं परमात्मनः प्रकरणं न देवराजस्येन्द्रस्य । परमात्मैव सर्वान्तर्यामित्वेन हि वेदान्तेषु प्रसिद्ध इति चेत् । नैष विरोधः । विश्वात्मकं समष्टिशरीरं प्रविष्टः परमात्मा देवराज इन्द्रो भवति । समष्टिशारीरक इन्द्र एव व्यष्टिशरीरेषु प्रतिबिम्बितो जीवात्मा भवति । "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ।" इति मन्त्रवर्णोऽत्र भवति । "रूपं रूपं मघवा बोभवीति" इति मन्त्रवर्णश्च । उपनिषदि श्रूयमाणः "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" इत्यत्रोपयुक्तो देवा इति शब्दश्च प्रकरणं देवराजेन्द्रपरमेव ध्वनयति । अयं च जीवात्मान्तर्यामीन्द्रस्य परमाकाश विभूतिरेवानुविभूतिः । कोऽयं परमाकाशः । उच्यते । आकाशो द्विविधः रजोमयः शुद्धश्चेति । रजोमयोऽन्तरिक्षमित्युच्यते । शुद्धो द्यौरिति । त्विषां देवानां शब्दानां च मार्गभूतं सूक्ष्माणुपटलरूपमन्तराल-भूतमिवास्माभिर्दृश्यमानमिदं गगनमन्तरिक्षम् । तदन्तर्वर्ति शुद्धं गगनं द्यौः । एषा चान्तरिक्षान्तर्वर्तिनी च भवति । अन्तरिक्षमतीत्य च राजते । अस्या एव परमाकाश इत्यपरं नाम । परमाकाशेन परमं व्योम व्याख्यातम् । कथमिन्द्रः परमाकाशरूपोऽन्तरिक्षव्यापक उच्यत इति चेत् । पश्येमं मन्त्रवर्णम् । "विश्वमाप्रा अन्तरिक्षं महित्वा सत्यमद्धा न किरन्यस्त्वावान् ।" इति । एवंजातीयका मन्त्रा ऐन्द्रेषु दृश्यन्ते परःशताः । विस्तरभयान्नोदाहियन्ते । कथमन्तरिक्षादतिरिक्तश्चेन्द्र उच्यत इति चेत् । पश्येमं मन्त्रवर्णम् । "अस्येदेव प्ररिरिचे महित्वं दिवस्पृथिव्याः पर्यन्तरिक्षात् ।" इति बहव एवंजातीयका मन्त्रा ऐन्द्रेषु दृश्यन्ते । विस्तरभयान्नोदाहियन्ते । नन्वत्र द्यौरिन्द्रादन्योच्यत इति चेत् । अत्र द्युशब्दः सूर्यवाची । नीलाभासनभस्तलवाची वा । द्युशब्दः परमे व्योमनि सूर्ये नीलाभासनभस्तले च प्रयुज्यते । वेदेषु । त्रिपादस्यामृतं दिवीत्यादौ सोऽयं परमव्योमपरः। द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे

मातेत्यादौ सूर्यपरः । परो दिवा पर एना पृथिव्येतावती महिना सं बभूवेत्यादौ नीलाभासनभस्तलपरः । परमं व्योम च परमात्मनः सर्वव्यापिन्याः शक्तेर्नातिरिच्यते । न तत् केवलं शून्यम् । सा च शक्तिरन्तरिक्षोपाधिका देवराज इन्द्र इति व्यवह्रियते वेदेषु । नन्वेवं चेद्भूयः संशयः । अवादीः पूर्वं परमात्मैवान्तरिक्षोपाधिका इन्द्र इति । अधुना ब्रवीषि परमात्मशक्तिरन्तरिक्षोपाधिकेन्द्र इति चेत् । नैष विरोधः । परमात्मनस्तच्छक्तेश्च व्यावहारिक एव भेदः । न वस्तुतः । ज्ञानमहासमुद्रे यत्राहङ्कृतिसम्भवेनान्तरं सम्पद्यते स शक्तो ज्ञाता चेति व्यवह्रियते । परिशिष्टं सर्वतः प्रसारि ज्ञानस्वरूपं शक्तिः प्रज्ञा चेति व्यवह्रियते । उभयं च ज्ञानात्मकमेव भवति । इन्द्रस्याकाशात्मकत्वं बोधयन्ती ऋगेषा भवति । "महत्तन्नाम दिव्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम् । प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्च ।" इति । नन्वेवं चेदन्यः संशयः ब्रह्मा सृष्टेः कर्तेति पुरणेतिहासादिभ्योऽवगम्यते । भवान् ब्रवीतीन्द्रः सृष्टेः कर्तेति । कथमनयोः सङ्गतिरिति चेत् इन्द्रस्याद्या विभूतिरेव ब्रह्मशब्देनार्वाचीने वाङमये व्यवह्रियत इति न कश्चिद्विरोधः । छन्दसि नपुंसकब्रह्मशब्दो मन्त्रपर एव प्रयुज्यते । अस्माकं प्रकृतः पुंलिङ्गब्रह्मशब्दस्तु स्पष्टं प्रयुक्तः पुरन्दरपर एव । "इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरुपुरुहूतः । महान्महीभिः शचीभिः ।" इति ऋक्संहितायाम् । "ब्रह्मन् वीरब्रह्मकृतिं जुषाणोर्वाचीनो हरिभिर्याहि तूयम् ।" इति च । "एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे"। इति सामसंहितायाम् । यद्यपि "ब्रह्मा देवानां पदवीः कवीनाम्" इति सोमे ब्रह्मपदमेकत्र ऋक्संहितायां प्रयुक्तं तथापि "इन्द्रो ब्रह्मा", "एष ब्रह्मा य ऋत्विय इन्द्रः" इति स्थलयोरिन्द्रमनूद्य ब्रह्मत्वं विधीयते । ब्रह्मा देवानामिति सोमस्य गुण उच्यते । तस्मात्तत्सोमपरं सापेक्षं ब्रह्मपदं गौणं

भवितुमर्हति । पूर्वयोर्निरपेक्षं विधीयमानं मुख्यमेव वक्तव्यम् । एतद्देवताद्वयं विना प्राचीने छन्दोवाङ्मये ब्रह्मशब्दो न क्वचिदपि देवतायां प्रयुक्तो दृष्टः । तस्मान्निगमानुसारेण पौराणिको ब्रह्मा व्याख्येयः । उक्तं सामरस्यम् । वक्ष्यामश्चाग्रे । आग्रायणेन भगवता मुनिनोक्तमन्यदिन्द्रपदनिर्वचनं चैतमेवार्थं द्रढयति । इदं जगत् करोतीतीदङ्करः । इदङ्कर एव वर्णलोपवर्णव्यत्यासाभ्यामिन्द्र इति तदीयं निर्वचनम् । यथोक्तं यास्केन । इदङ्करणादित्याग्रायण इति । भगवत औपमन्यवस्य मुनेरस्त्यन्यन्निर्वचनम् । यथोक्तं यास्केन । इदं दर्शनादित्यौपमन्यव इति । इयमत्र व्युत्पत्तिः । इदं पश्यतीतीदन्द्रः । इदन्द्र एव वर्णलोपादिन्द्र इति । ऐतरेयोपनिषत्परमेश्वरस्य सृष्टिमभि-धाय तत्र शरीरेषु देवतानुप्रवेशमुक्त्वा तदनु परमेश्वरस्यानुप्रवेशं व्याचक्षाणैवमाह। "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नामद्वास्तदेतन्नान्दनम् । तस्यास्त्रय आवसथास्त्रयः । स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति । सजातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषति । स एतमेव पुरुषं ब्रह्मततमपश्यदिदमदर्शम् इती । तस्मादिदन्द्रो नामैदन्द्रोहवैनामतमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिय एव हि देवाः प्रत्यक्ष द्विष" इति । इयं श्रुतिरौपमन्यवस्य निर्वचनमनुगृह्णाति । एवं मुख्याश्चत्वारोऽर्था अभिहिता इन्द्रपदस्य । सर्वे तुल्यं गम्भीराः । सर्वे सप्रमाणाः ।

अथ देवतम इत्येकं नाम । अतिशयेन देवो देवतमः । सर्वेषु देवेषु मुख्य इत्यर्थः ।

अथानीलः सुपर्ण इति द्विपदमेकं नाम । अनीलोऽकुलायः सुपर्ण पक्षिराजः । इयं रूपकातिशयोऽक्तिः । परिच्छिन्नस्थानाभावात्

सर्वातिशायिगतिविशेषाच्चाकुलायः सुपर्ण इतीन्द्रोऽध्यवसीयते । स एव सर्वेषां स्थानम् । न तस्य किमपि स्थानं वस्तुतः । "हृदि ह्येष आत्मा"। "य एष दक्षिणेऽक्षन्पुरुषः" इत्यादीनि वचनानि व्यापकस्य तस्य प्राधान्येन ग्रहणयोग्यस्थलप्रदर्शनार्थान्येव भवन्ति । अव्याहतो ज्ञानप्रसार एव सर्वातिशायिनी तस्य गतिः ।

अथ पूर्णबन्धुर इत्येकं नाम । पूर्णश्चासौ बन्धुरश्च पूर्णबन्धुरः । व्यापकत्वेन पूर्णत्वं व्याख्यातम् । बन्धुरत्वं च सान्द्रत्वम् । को भेदः पूर्णत्वबन्धुरत्वयोरिति चेत् । अखण्डत्वं पूर्णत्वम् । तदेव व्यापकत्वम् । खण्डवस्तूनामविरलः संयोगः सान्द्रत्वम् । कथमेक एवाखण्डः खण्डवस्तुपटलात्मकश्च भवतीति चेत् । अन्तिरिक्षोपाधिकस्यैव परमाकाशस्येन्द्रप्रथमविभूतित्वात्तस्यान्तरापेक्षया पूर्णत्वमुपाध्यपेक्षया बन्धुरत्वं चेत्यविरोधः ।

अथ विश्वस्य दमितेति द्विपदमेकं नाम । विश्वस्य सर्वप्रपञ्चस्य दमिता दमयिता । दमनं च कयाचिन्नियत्या निग्रहणम् । विश्वचालकसूत्रभृदित्यर्थः ।

अथ विश्वस्येशान इति द्विपदमेकं नाम । विश्वस्य सर्वप्रपञ्चस्य ईशान ईश्वरः ।

अथ विश्वचर्षणिरित्येकं नाम । विश्वे चर्षणयो मनुष्या यस्य स विश्वचर्षणिः । सर्वेषां मनुष्याणां साधारणं दैवमित्यर्थः ।

विश्वानि चक्रिर्विश्वस्मादुत्तरो विश्वभूर्बृहन् ।
चेकितानो वर्तमानः स्वधया चक्रया परः ॥ २॥

द्वितीयश्लोके सप्तनामानि भवन्ति ।

तत्र विश्वानि चक्रिरिति द्विपदमेकं नाम । विश्वानि सर्वाणि भुवनानि चक्रिः साधु कृतवान् विश्वानि चक्रिः । तत्साधुकारिणि कर्तरि कृञः किन्प्रत्ययः । तस्य लिड्वद्भावेन कर्तृकर्मणोः कृतीति न विश्वशब्दतः षष्ठी । इदं नामेन्द्रस्य विश्वकर्तृत्वे लिङ्गमेकं भवति ।

अथ विश्वस्मादुत्तर इति द्विपदमेकं नाम । विश्वस्मादुत्तरः परः । इदं च परत्वं द्विधा भवति । एकं विश्वाधिकत्वाद्गुणादिभिः । अन्यद्विश्वमतीत्य च वर्तमानत्वात्स्वरूपतः । ननूत्तरोऽर्थ इन्द्रे न सङ्गच्छते । स हि विश्वान्तर एव न विश्वातीत इति चेत् । नैतच्चोद्यम् । विश्वातीतस्यैव विश्वान्तरीभावात् । व्यवहारभेदस्तु तत्त्वमीमांसकानामकिञ्चित्करः ।

अथ विश्वभूरित्येकं नाम । विश्वं भवत्यस्मादिति विश्वभूः । विश्वानि चक्रिरित्यनेन भगवतो निमित्तकारणत्वं दर्शितम् । विश्वभू-रित्यनेनोपादानकारणत्वमिति विशेषः ।

अथ बृहन्नित्येकं नाम । विश्वस्मादुत्तरत्वेन भगवतो बृहत्त्वं व्याख्यातम् ।

असमाप्तम्

# जैमिनीयसूत्रभाष्यम्

## १. धर्मलक्षणाधिकरणम्

### सूत्रम् (२) - "चोदनालक्षणोऽर्थो धर्मः"

चोदना वेदः लक्षणं प्रमाणं यस्य सोऽर्थो धर्म इत्येके व्याचक्षते । अत्रार्थः प्रयोजनं चेत्स्वर्गादिधर्मः प्रसज्येत । ज्योतिष्टोमादिर्न धर्मः स्यात् । अथ यदि प्रयोजनवति लक्षणा । देवता च धर्मः प्रसज्येत ।

ननु सौत्रमर्थशब्दं द्विरावर्तयामः । तेनास्माकमुभयं सिध्येत् । एकदा शक्त्यार्थ इति । अन्यदा लक्षणयार्थवानिति । वेदप्रमाणकं प्रयोजनवत्प्रयोजनं धर्म इत्युक्तं भवति । यच्छङ्कितं प्रयोजनं चेद्धर्मः । ज्योतिष्टोमादावसम्भव एव लक्षणस्य स्यादिति । तत्रोच्यते । न धर्मेणास्ति प्रयोजनत्वम् । न क्रियामात्रं हि धर्मः । तन्निष्पाद्ये खल्वात्मसंस्कारे धर्माख्या । अत एव धर्मं पुरुषार्थं भणन्तः सङ्गच्छन्ते ।

एवमपि मोक्षलक्षणमतिप्रसक्तं स्यात् । स च वेदप्रमाणकः । अखण्डानन्दवत्त्वात्प्रयोजनवान् भवति । बन्धनिवृत्तिरूपत्वात् प्रयोजनं च भवति । तदिष्टमेवेति चेत्सिद्धं लक्षणम् । व्यवहारविरोधः केवलोऽत्र भवति । धर्मान्मोक्षं हि पृथग्व्यवहरन्ति । अथवा व्यवहारश्चानुकूलः ।

निवृत्तिलक्षणः खलु धर्मो न्यासः । न्यासाच्च मोक्षो नातिरिच्यते । सङ्ग एव बन्धः । असङ्ग एव मोक्षः । इति हि दूरदृशां निर्णयः ।

परे प्राहुः । चोदनया प्रवर्तकेन वैदिकवाक्येन लक्ष्यते निरूप्यत इति चोदनालक्षणः तादृशोऽर्थो धर्म इति नैतेऽर्थशब्दं द्विरावर्तयन्ति । एतेषामर्थस्यार्थवतिलक्षणा । प्रवर्तकवैदिकवाक्यनिरूपितप्रयोजनवान् धर्म इत्युक्तं भवति । पूर्वेण विशेषणेन देवतायामतिप्रसक्तिर्वार्यते । उत्तरेण स्वर्गादौ । वाक्यस्य प्रवर्तकत्वं च शक्त्या तात्पर्येण वा । तेनार्थवादबलाल्लिङ्गबलाद्वा कल्पितानां विधीनां च सङ्ग्रहः स्यात् । नन्वेवं चेदुत्तरं विशेषणं व्यर्थम् । पूर्वेणैव स्वर्गादिर्वारयितुं शक्यत्वात् स हि चोदनया निरूपितो न भवति । अनुवादस्तु न निरूपणम् ।

अत्राहुः । अन्यदस्त्यस्माकं प्रयोजनम् । श्येनादिर्वारणीयः फलद्वारा पापनिष्पादकत्वान्नैव लक्षणीयः श्येनादिः । अर्थवानित्यनेनायं वार्येत पर्यवसानेनार्थवान् हि सः ।

इतरे वदन्ति । न श्येनादिर्वारणीयः सौत्रेण विशेषणेन । यदि वैदिकस्य विधेः प्रवर्तकत्वं श्येनादावुपपद्येत । तदा तस्य धर्मत्वं वारयितुं सौत्रं विशेषणं न प्रभवेत् । यदि नोपपद्यते तदा पूर्वमेव विशेषणमलं वारयितुम् । कथमनुपपत्तिः प्रवर्तकत्वस्य स्यात् । यदि तात्पर्यं प्रवृत्तिप्रतिबन्धकम् । अथ सौत्रस्यार्थशब्दस्य का गतिः । अभिधेय-पर्यायः स भवति । अभिधेयश्च भावः । प्रवर्तकवाक्यनिरूपितो भावो धर्म इत्युक्तं भवति । ननु कोऽयं भावो नाम । पर्यवसन्नस्तात्पर्यार्थ इत्येवात्र ब्रूमः ।

## २. निमित्तपरीक्षाप्रतिज्ञाधिकरणम्

सूत्रम् (३) - "तस्य निमित्तपरीष्टिः ।"

तस्य धर्मस्य निमित्तपरीष्टिः निमित्तपरीक्षा । अधिकारसूत्रमिदं भवति । द्वितीयाध्यायप्रथमपादावसानपर्यन्तोऽयमधिकारो वेदितव्यः ।

## ३. प्रत्यक्षाद्यनिमित्तत्वाधिकरणम्

सूत्रम् (४) - "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात् ।"

सतां द्रव्यगुणकर्मणां सम्प्रयोगे विषयीभावे पुरुषस्येन्द्रियाणां बुद्धिजन्म भवति । तत्प्रत्यक्षं प्रत्यक्षनामकं प्रमाणं भवति । अनिमित्तं अकारणं धर्मावबोधे तत् कुतः । विद्यमानोपलम्भनत्वात् । प्रत्यक्षं हि विद्यमानोपलम्भनमेव भवति । धर्मश्च विलक्षणः । अदृष्टत्वात् । एतेन प्रत्यक्षमूलानि प्रमाणान्तराणि च व्याख्यातानि ।

## ४. वेदप्रामाण्याधिकरणम्

सूत्रम् (५) - "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ।"

शब्दस्यार्थेन सम्बन्धः औत्पत्तिकः सहजस्तु भवति । पूर्वपक्षप्राप्तं

कृत्रिमत्वं व्यावर्तयितुं तु शब्दः । तस्य सहजार्थसम्बन्धस्य शब्दस्य उपदेशः समाम्नायः ज्ञानं भवति । ज्ञानस्यैव सा शब्दतोऽभिव्यक्तिरिति यावत् । अनुपलब्धे प्रत्यक्षाद्यनवगते अर्थे अव्यतिरेकश्च स ज्ञानमय उपदेशः । अव्यतिरेकत्वं च विपर्यस्तत्वम् । तदभिव्यक्तं ज्ञानं शाब्दं प्रमाणं भवति । बादरायणस्याचार्यस्य मतेन । बादरायणग्रहणमत्र विषये तस्य प्रथमं युक्तिदर्शनं पूजयितुम् । कुतः प्रमाणं भवति । अनपेक्षत्वात् । प्रत्यक्षादि निरपेक्षं हि भवति तादृशं ज्ञानम् । अथवा प्रत्यक्षादिनिरपेक्षो हि भवति तादृशं ज्ञानवाही शब्दः । लौकिकः शब्दस्तु प्रत्यक्षादिप्रमाणान्तरप्रमितानुवादको भवति । अतः सापेक्षः । तस्य सापेक्षत्वात्तदुत्पन्नं ज्ञानं च सापेक्षम् । प्रत्यक्षादीनामनिमित्तत्वं प्रागेवोक्तम् ।

ननु प्रत्यक्षादीन्यन्तरा ज्ञानं कथ स्यात् । यद्वाही शब्दस्त्वया समाम्नाय उच्यते । सत्यम् । लौकिकं व्यष्टिज्ञानं प्रत्यक्षादीन्यन्तरा न भवति । न तदत्र विषयः । समष्टिज्ञानमधिकृत्यैवाचार्यो ब्रवीति । तच्च न लौकिकपुरुषचक्षुरादिसापेक्षं भवति ।

## ५. शब्दनित्यत्वाधिकरणम्

### सूत्रम् (६) - "कर्मैके तत्र दर्शनात्" ।

सामान्यतः शब्दस्य नित्यत्वं स्थापयितुमादौ पूर्वपक्षमारचयति । एके परीक्षकाः प्रकृतं शब्दं कर्म कार्यं प्राहुः । कुतः ? तत्र कर्मण्युच्चारणरूपे दर्शनात्तस्य । क्रियानन्तरमेव यदनुभूयते न तु तत्पूर्वम् । तत्कार्यमिति हि प्रतीयते । यथा घटादि । एवं च किमायातम् । यच्छब्दः कार्यः ।

तत्तस्यार्थसम्बन्धश्च कृत्रिमः । अर्थसम्बन्धे च कृत्रिमे व्यष्टिज्ञानवाहित्वम् एव पुनरायातमाम्नायस्य । ततश्च सापेक्षत्वम् । सापेक्षत्वाच्चाप्रामाण्यम् ।

सूत्रम् (७) - "अस्थानात्" ।

अस्थानात् अस्थितेः विनश्वरत्वादिति यावत् । शब्दं कर्मैके प्राहुः । कार्यस्वभावो हि नाशः ।

सूत्रम् (८) - "करोतिशब्दात्" ।

माणवकः शब्दं करोति इत्यादिव्यवहारो दृश्यते । तस्माद्व्यवहारसिद्धात् करोतिशब्दाच्च शब्दं कर्मैके प्राहुः । नित्येषु हि करोतिशब्दो नोपपद्यते ।

सूत्रम् (९) - "सत्त्वान्तरे च योगपद्यात्" ।

सत्त्वान्तरे प्राण्यन्तरे यौगपद्यात् शब्दं कर्मैके प्राहुः । नित्यश्चेत् युगपदनेकत्र न दृश्येत । यो ध्वनितश्चार्थतश्च समानः । दर्शनं चात्र न श्रवणमात्रम् । अपि तु प्रादुर्भावः श्रवणं चेत्युभयम् ।

सूत्रम् (१०) - "प्रकृतिविकृत्योश्च" ।

अग्निस् इत्येषा प्रकृतिः । अग्निः इत्येषा तद्विकृतिः । प्रकृतावन्त्यः सकारो हि रेफत्वेन प्रथममनन्तरं विसर्जनीयत्वेन च परिणतः ।

एवं जातीयकयोः प्रकृतिविकृत्योश्च दर्शनाच्छब्दं कर्मैके प्राहुः । नित्यानां विकारासम्भवात् ।

सूत्रम् (११) - "वृद्धिश्च कर्तृभूम्नास्य" ।

कर्तॄणां भूम्ना बहुत्वेन अस्य शब्दस्य वृद्धिश्च भवति । वृद्धिक्षयौ नित्यानां नोपपद्येते । तस्माच्च शब्दः कार्यः ।

सूत्रम् (१२) - "समं तु तत्र दर्शनम्" ।

तु शब्दः पूर्वं पक्षं व्यावर्तयति । यदुक्तं तत्र दर्शनं तत्समं नित्यानामनित्यानां च । यथैवानित्याः कर्मभिर्जायन्ते तथानित्याश्च कर्मभिरभिव्यज्यन्ते । घटादयः पूर्वेषामुदाहरणानि । पवनादय उत्तरेषाम् । पवनो हि सन्नेव व्यजनचालनकर्मणाभिव्यज्यन्ते । शब्दः कर्मणि दर्शनाज्जायत इति कथं निर्धारयितुं शक्यम् । सम्भवति ह्यभिव्यक्तिश्च ।

सूत्रम् (१३) - "सतः परमदर्शनं विषयानागमात्" ।

विषयेन्द्रियसन्निकर्षायानागमात् सत एवादर्शनं भवति । तत् किम् । परं अस्थानं यत्त्वयोक्तमनित्यत्वकारणम् । अदर्शनमेवास्थानवत् सतः शब्दस्य प्रतिभातीति यावत् । तस्मान्न तदनित्यत्वकारणं वक्तुं शक्यम् ।

सूत्रम् (१४) - "प्रयोगस्य परम्" ।

परं यदुक्तमनित्यत्वकारणं शब्दस्य करोति शब्दकर्मत्व व्यवहरणम् ।

तत्प्रयोगस्य सम्बन्धात् न कृतेः सम्बन्धात् । तस्मान्न तद् अनित्यत्वकारणं वक्तुं शक्यम् ।

सूत्रम् (१५) – "आदित्यवद्योगपद्यम्" ।

यदुक्तं सत्वान्तरे यौगपद्यं तदादित्यवत् । आदित्यस्येव शब्दस्यापि भवति । ननु विषमो दृष्टान्तः । आदित्यो हि नानेकवद्दृश्यते बहुभिरपि द्रष्टृभिः । न विषमः । शब्दोऽपि नानेकवच्छ्रूयते बहुभिरपि श्रोतृभिः । नन्वस्माभिरुपन्यस्तं वैषम्यमन्यत् । आदित्यो नानेकस्थलेष्वभिव्यक्त इव दृश्यते बहुभिरपि द्रष्टृभिरिति । नेति ब्रूमः । स हि तत्तद्देशवासिभि-स्तत्तद्देशसमीपे प्रादुर्भूत इव दृश्यते । ननु तथादर्शनेऽपि दिग्भेदेन न पश्यन्ति । न । दिग्भेदेनापि पश्यन्ति । एष्यावासिनां या प्राची सा ह्यमेरिकावासिनां प्रतीची भवति । यदोद्यन्तमेते पश्येयुः तदा तेऽस्तंयन्तं पश्येयुः । नन्वपरमस्ति वैषम्यम् । एकत्रस्थितानानेकत्र स्थितम् इवादित्यमनुभवेयुः । शब्दं त्वेकत्र स्थिता एवानेकत्र प्रादुर्भवन्तमनु-भवन्ति । एतदपि नास्ति वैषम्यम् । न श्रोतृनधिकृत्याचार्यः परिहरति यौगपद्यम् । अपि तु प्रयोक्तृनधिकृत्य । तदेव खलु परिहर्तव्यम् । यथा बहवो व्यापारेणैकमादित्यं युगपदनुभवन्ति । तथा बहवः प्रयोक्तारो व्यापारेण शब्दमनुभवन्ति । अनुभावयन्ति च परानित्यत्र ततो विशेषः । ननु पुनरायातमन्यद्वैषम्यम् । ज्ञानेन्द्रियव्यापारः सूर्यस्यानुभवे पर्याप्तो भवति । शब्दस्यानुभवे तु कर्मेन्द्रियव्यापारो निमित्तम् । अनुभवस्तु परतः । यदनुभवति श्रोत्रं शब्दम् । तत्र श्रोत्रव्यापारमात्रं नालम् । नैतद्वैषम्यम् । प्राच्यां सूर्ये स्थिते प्रतीच्यभिमुखः पश्यन्नपि न पश्यन्ति सूर्यम् । तस्मात्तत्राप्यभिमुखत्वं निमित्तमन्यद्विद्यते ज्ञानेन्द्रियव्यापारात् । एवमत्रोच्चारणं भवितुमर्हति ।

सूत्रम् (१६) - "वर्णान्तरमविकारः" ।

य उक्तः सकारादेर्विसर्जनीयादित्वेन परिणामः स परिह्रियते । तद्विसर्जनीयादिवर्णान्तरमेव भवति । अविकारः न सकारादेर्विकारः ।

सूत्रम् (१७) - "नादवृद्धिपरा" ।

योक्ता कर्तृबाहुल्ये शब्दस्य वृद्धिः सा नादवृद्धिपरा भवति । न शब्दस्वरूपवृद्धिपरा । कोऽयं शब्दादन्यो नादो नाम । पाणिनिर्निर्नदतिं शब्दार्थकमेव स्मरति । पतञ्जलिः प्रतीतपदार्थकं ध्वनिमेव शब्दं भणति । उच्यते । तेजोरूपाविव शब्दनादौ भिन्नौ स्तः । अभेदेन परस्परसङ्करेण चोपचारतो व्यवह्रियते तद्वदेव शब्दो वोभयार्थः स्यात् ।

सूत्रम् (१८) - "नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्" ।

परिहृता अनित्यत्वहेतवः । सम्प्रति प्रकृतशब्दस्य नित्यत्वं निरूपयति । नित्यस्तु स्यात्प्रकृतः शब्दः । कुतः ? दर्शनस्य परार्थत्वात् । यत्प्रयत्ने सति दर्शनं शब्दस्य तत्परार्थं हि भवति । परार्थत्वं चार्थप्रकाशनार्थत्वम् । यदि तत्कालज एव शब्दस्तदा तस्य परार्थत्वे द्वौ दोषौ प्रसज्येयाताम् । प्रादुर्भावात्पूर्वं प्रयोक्त्रा स्वोद्दिष्टार्थसम्बन्धित्वेन न स्मृतो भवेत् । श्रोत्रा च तद्विवक्षितार्थसम्बन्धित्वेन न गृहीतो भवेत् प्रादुर्भावतोनन्तरम् । नूतने प्रत्यभिज्ञाया असम्भवात् ।

सूत्रम् (१९) - "सर्वत्र यौगपद्यात्" ।

सर्वत्र भूते वर्तमाने भविष्यति सर्वदेशस्थे चार्थे यौगपद्यात् युगपत् प्रवृत्तेः शब्दो नित्यः । गौरिति शब्दः भूतं भविष्यन्तं वर्तमानं सर्वदेशस्थं च गां बोधयति । तत्कालजश्चेन्नैतदुपपद्येत । नैषा युक्तिरित्याह । यां बोधयितुं बक्तुरुद्देशः । तामेकामेव व्यक्तिं बोधयति हि शब्दः । न । यतो जातिं च बोधयति । नन्वेवं चेद्यावान् व्यक्तिं बोधयति तावाननित्यः स्यात् । आकाशादीनां व्यक्तीनां नित्यत्वान्नायं विरोधस्तत्र स्यात् । यत्र सामान्येन विशेषप्रत्ययस्तत्र शब्देन सोपराध आरोपयितुं शक्यः । प्रतीतिस्वभावविशेष एव हि स भवति । यत्र पुरोवस्थितदेवदत्तव्यक्तौ देवदत्तशब्दः प्रत्ययं जनयति । तत्रापि ह्यस्तनः श्वस्तनो वा देवदत्तो न तेन व्यावर्त्यते । नन्वेवं चेदनित्यार्थसम्बन्धादनित्यत्वं देवदत्तादिशब्दानां पुनरायातम् । न । स्थितैरेव वर्णैः योगवशात् कस्मिंश्चिदर्थे वर्तमानैरेव शब्दैर्जातानां संज्ञाः क्रियन्ते व्यवहरणाय । तेषु तदर्थयोगं दृष्ट्वा भावयित्वा वा । तच्च सामान्येन विशेषव्यवहरणमेव भवति । ननु येषु तदर्थयोगः तत्रन्न भवतु । येषु तदर्थयोगभावना तत्र सामान्यविशेषभावः कथं सिध्येत् । भावनायास्तादृशी शक्तिरस्तीति ब्रूमः । यथा चतुरङ्गखेलनसाधनेषु चित्रदारुशकलेषु राजमन्त्रिगजाश्वरथपत्ति-भावनायाः ।

सूत्रम् (२०) - "सङ्ख्याभावात्" ।

सङ्ख्याया अभावाच्च नित्यः शब्दः । गो शब्द एक एवेति हि प्रतीतिः । यद्यनित्यः शब्दः बहव इति प्रतीतिः स्यात् । गोशब्दं त्रिरुच्चारयतीत्यादि-व्यवहारस्य स्थाने त्रीन् गोशब्दानुच्चारयतीति व्यवहारः सम्प्रसज्येत ।

सूत्रम् (२१) - "अनपेक्षत्वात्" ।

अनपेक्षत्वाच्च नित्यः शब्दः । किमिदं शब्दस्यानपेक्षत्वं । उच्यते । उच्चारयितुर्विवक्षामनपेक्ष्यापि शब्दोऽर्थं बोधयति । तदिदमनपेक्षत्वं शब्दस्य । यथा "अग्निमीळे पुरोहितम्" इत्यादि माणवकः पठति । अनिच्छन्नेवार्थं बोधयितुं केवलं शब्दाभ्यासाय । अर्थश्च प्रतीतो भवेच्छ्रोतुर्विदुषः । यदि कृतः स्यान्माणवकेन तदर्थश्च माणवकविवक्षाधीनः स्यात् । न च तस्य विवक्षास्ति । तस्मान्नित्यः शब्दः ।

अथवा उच्चारणप्रयत्नसाध्यामभिव्यक्तिमनपेक्ष्यापि शब्दोऽर्थं बोधयति । कथम् । स्मरणमात्रात् । स्मरणं चातत्पूर्वस्य नोपपद्यते । अथवा लिपिषु भावनातः । भावना चातत्पूर्वस्य नोपपद्यते । तस्मान्नित्यः शब्दः ।

अथवा उपादानकारणानपेक्षः शब्दः । तस्मान्नित्यः । यथा तन्तवः पटस्योपादानकारणं भवन्ति । नैवं शब्दस्य किमपि दृश्यते । यतः शब्दस्य कार्यत्वं निर्धार्येत । नाशश्च कारणनाशसम्भवात् । यथा तन्तुनाशसम्भवात्पटनाशः । ननु शब्दस्य पटदृष्टान्तो नोपपद्यते । शब्दो गुणः । पटो द्रव्यम् । द्रव्यस्वभावदृष्टान्तेन गुणस्वभावो निरूपयितुम् अशक्यः । अपि शब्दो गुण इति वयं नाङ्गीकुर्मः । द्रव्यमेव शब्दः । नादगुणवत्त्वाच्चलनक्रियावत्त्वाच्च तेजोरूपयोरिव शब्दनादयोर्व्यवहारसङ्करो व्याख्येयः ।

अथवा न रूपस्पर्शादिवदाश्रयसापेक्षः शब्दः । यदुत्पत्तावस्योत्पत्तिं यन्नाशेऽस्य नाशं च निर्धारयेम । तस्मान्नित्यः । कथमाश्रयानपेक्षः । अगुणत्वादेव । नन्वाशूत्पत्तिविनाशस्वभाववद्द्रव्यमेव वा भवतु । द्रव्यं

स्यात् । उत्पत्तिविनाशवन्न भवति । कुतः ? द्रव्यस्वभावविरोधात् । नियमेनोत्पत्त्यनन्तरकालमेव नश्यद्द्रव्यं हि नोपलभ्यते । तस्माद् अभिव्यक्तितिरोधानवद्द्रव्यमेव वक्तव्यः शब्दः । पवन विद्युदादिवत् ।

एतेषु पञ्चस्वर्थेषु को ज्यायान् । सर्वोऽपि शब्दस्य नित्यत्वं साधयितुं हेतुर्भवति । सर्वत्र च सूत्राक्षराण्यनुकूलानि । तस्मात्तुल्याः पञ्चाप्यर्थाः ननु तुल्येष्वपि पञ्चस्वर्थेषु त्वयैक एव ग्राह्यः । पञ्चापि गृह्यन्ते । एकस्मिंत्सूत्रे प्रकृताः पञ्चाप्यर्थाः श्लिष्यन्त इति ब्रूमः । वाक्यभेदस्तु सूत्रेषु न दोषः स्यात् ।

सूत्रम् (२२) - "प्रख्याभावाच्च योगस्य" ।

योगस्य अर्थेन सह सम्बन्धस्य प्रख्याभावात् प्रसिद्धिभावाच्च नित्यः शब्दः । इतः प्राक्छन्दस्य श्रवणेन स्मृत्या भावनया वार्थज्ञानं शब्दस्य पूर्वत्वे हेतुत्वेनोपन्यस्तम् । सम्प्रति त्वर्थस्य दर्शनेन शब्दस्य तत्सम्बन्धित्वेन स्मरणमुदाहर्तव्यं योगप्रसिद्धिनिदर्शनाय । यथा देवदत्तव्यक्तिं दृष्ट्वा देवदत्तशब्दं स्मरन्ति प्रायः । तच्च स्मरणं शब्दस्यातत्पूर्वत्वेन सम्भवति ।

सूत्रम् (२३)- "लिङ्गदर्शनाच्च" ।

लिङ्गस्य मान्त्रवर्णिकस्य दर्शनाच्च नित्यः शब्दः । किं तल्लिङ्गम् । "वाचा विरूप नित्यया" इति । ननु नायं हेतुः साधकः । इतरेतराश्रयदोषापत्तेः । वेदस्य प्रमाणत्वे लैङ्गिकं नित्यत्वं सिध्यति । लैङ्गिके नित्यत्वे सिद्धे देवस्य प्रामाण्यं सिद्धं स्यात् । नैतच्चोद्यम् ।

न वयं हि नित्यत्वं शब्दस्य प्रामाण्यसाधनायोदाहरामः । न शक्नुमश्चोदाहर्तुम् । तथा सति वैदिको लौकिकः च सर्वः शब्दः प्रमाणं भवेत् । केवलमनित्यत्वं परिहरामः शब्दस्य । यदिष्टार्थबोधप्रतिबन्धकम् । तुल्यं वैदिकलौकिकशब्दयोः । अथ किं ते वैदिकस्य शब्दस्य प्रमाणसाधकमिति चेत् । तदुक्तं प्रागेवानपेक्षत्वादिति ।

## ६. वेदवाचकत्वाधिकरणम्

### सूत्रम् (२४) - "उत्पत्तौ वा वचनाः स्युरर्थस्यातन्निमित्तत्वात्" ।

उत्पत्तौ शब्दस्यार्थेन सम्बन्धस्यौत्पत्तिकत्वे वा अवचनाः अवाचकाः स्युः । के । धर्मप्रमाणत्वेनाभिमतास्ते वैदिकाः शब्दाः । कुतः ? अर्थस्य अतन्निमित्तत्वात् । यो वैदिकोऽर्थः न तस्य वैदिकशब्दनिमित्तत्वं पश्यामः । अर्थः खलु शब्दस्य प्रवृत्तौ निमित्तं भवति । अदृष्टः स्वर्गादिरूपोऽर्थः । तत्र कथं स्वर्गादिशब्दप्रवृत्तिः । अदृष्टश्च यागादिनिष्पाद्यो धर्मः । तस्य कथं चोदनानिरूप्यत्वम् । दृष्टेषु खल्वर्थेषु शब्दाः प्रवर्तेरन् । इति पूर्वः पक्षः ।

### सूत्रम् (२५) - "तद्गुणानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" ।

तत्राऽर्थे भूतानां वृत्तानां शब्दानां क्रियार्थेन कर्मप्रयोजनेन हेतुना समाम्नाय उपदेशो भवति । तदा तदा भगवद्भिर्महर्षिभिरिन्द्रियनिरपेक्षेण दिव्यज्ञानेन दृष्टेष्वेवार्थेषु स्वर्गादिशब्दाः प्रवृत्ताः । तत्साधनत्वेन दृष्ट एवातीन्द्रियेऽर्थे धर्मशब्दः । तानेवार्थान् भगवन्तो महर्षय उपदिशन्ति । अन्येऽपि धर्मनिष्पादकक्रियानुष्ठानेन श्रेयः प्राप्नुवन्त्विति ।

कथमतीन्द्रियार्थोपदेशो बोधको भवेत् । अर्थस्य तन्निमित्तत्वात् । स शब्दः निमित्तं यस्य स तन्निमित्तो हि भवत्यर्थः । अन्यस्मै स्वबुद्धमर्थमवगमयितुं शब्द एक एव साधनभूत इत्यर्थः । लोकेऽपि तत्काले पुरो नवस्थितस्वप्र- प्रत्यक्षानुवादेषु गतचरित्रानुकीर्तनेषु चैषैव रीतिर्दृश्यते । तस्माद्बोधका एव वैदिकाः शब्दाः ।

सूत्रम् (२६) – "लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात्" ।

लोके प्रयोगाय शब्दप्रयोगस्य सन्निकर्षः इन्द्रियानुभूतार्थवृत्तित्वं भवति । कुतः ? सन्नियमात् । लौकिकस्य ज्ञानस्य सन्नियमो हि विद्यते । सन्नियमश्च विद्यमानेषु नियमः । ये विद्यन्त इति प्रतीयन्ते ते सन्त उच्यन्ते । ननु अनुवादेषु गतचरित्रसङ्कीर्तनेषु च सन्निकर्षो न दृश्यते प्रयोगस्य । न दृश्यतां नाम । प्रथमप्रयोगस्य सन्निकर्षो विवक्षितः सूत्रकृता । द्वितीयादीनां तन्मूलकत्वान्न तानि पृथगुदाहर्तव्यानि । आन्तरश्चादिप्रत्ययः शब्दरूपत्वान्न प्रयोगादतिरिच्च्यते । न केवलं वैखरीशब्दः । अपि तु पश्यन्ती च ।

७. वेदासन्निकर्षाधिकरणम्

सूत्रम् (२७) – "वेदांश्चैके सन्निकर्षं पुरुषाख्याः" ।

एके परीक्षकाः वेदांश्च सन्निकर्षं प्रयोगसन्निकर्षं मन्यन्ते । इन्द्रियानुभूतार्थानुवादरूपान्मन्यन्त इति यावत् । कुतः ? पुरुषाख्या इति कृत्वा । पुरुषाणां हि प्रयोगसन्निकर्षो दृश्यते । के ते पुरुषाः ? यदाख्या वेदाः । मधुच्छन्दाजेतामेधातिथिरित्यादयो मन्त्रेषु । ऐतरेयस्तित्तिरिरित्यादयो ब्राह्मणेषु ।

अपर आह । नायं पूर्वपक्षस्यार्थः । अन्योयमर्थो भवति । एके परीक्षकाः वेदान् च सन्निकर्षं सन्निकृष्टकालान् कृतकानिति यावत् मन्यन्ते । कुतः ? पुरुषाख्या इति कृत्वा । यदि न कृताः स्युः कर्हि पुरुषाख्या व्यवहारो न सिध्येत् ।

अयं पूर्वः पक्षो वैदिकलौकिकवाक्ययोस्तुल्यः । अकृतकाः शब्दा इति स्थापितं शब्दनित्यत्वाधिकरणे । न केवलं वैदिकानां शब्दानां नित्यत्वम् । अपि तु लौकिकानामपि । अन्यथा लौकिकादग्नि-शब्दाद्वैदिकोऽग्निशब्दो भिन्नार्थः स्यात् । तेनार्थप्रत्ययो न स्यात् । अपि च वैदिका एव शब्दाः प्रत्यायकाः स्युः । नित्यत्वे लोकानुसारेण वेदे औत्पत्तिकार्थसम्बन्धवत्त्वात् । न लौकिकाः । अनित्यत्वेन तदभावात् ।

ननु नायमस्माकं नयः । भवन्तु नित्याः शब्दाः सर्वे । वाक्यरचनं लोके पश्यामः । वेदे च दृश्यमानः पदबन्धो वाक्यरचनं भवितुमर्हति पुरुषाख्या दर्शनाद्धेतोः । अयमेव पूर्वः पक्षो भवति ।

यद्येवं भवान्वैदिकं वाक्यबन्धमपि नित्यं मन्यते ।

अशक्यं तत् । असौत्रं च भवति । यदि सूत्रकारः वैदिकं वाक्य-बन्धमपि नित्यं साधयितुमिच्छेत् । तदा प्रतिबन्धकपरिहारमात्रेण न चरितार्थः स्यात् । साधयितव्यश्च तेन सोऽर्थः । न च साधयितुं प्रयतमानो दृश्यते । या त्वयोक्ता कर्त्रनुपलब्धिः नित्यत्वं साधयितुं हेतुतया । तां न सूत्रकार उपदिशति ।

असमासम्

# ईशोपनिषद्भाष्यम्

अथ वाजसनेयिनां संहितोपनिषदं व्याख्यास्यामः ।

**ॐ ईशावास्यमिदं सर्वं यत् किं च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १॥**

जगत्यां प्रपञ्चे यत् किं च जगत् गतिमत् प्राणवदिति यावत् । तदिदं सर्वं ईशा सर्वशक्तेन परमात्मना वास्यमाच्छाद्यम् व्याप्यमित्यर्थः । तेन जगदंशेन त्यक्तेन परित्यक्तेन अविषयीकृतेनेति यावत् । भुञ्जीथाः अनुभव ईश्वरमिति शेषः । घटे कम्बुग्रीववत्वादेर्विकारांशस्य परित्यागेन मृदनुभववत् जगत्यां नामरूपादिविकारांशपरित्यागेन कारणभूत-सदनुभवः सिध्यतीति तात्पर्यम् । एवमनया त्रिपाद्या ज्ञानयोग उक्तः । उत्तरया पञ्चपाद्या कर्मयोगमाह मा गृधो मा कामं कृथाः । धनं कस्यस्विन्न कस्यचिदित्यर्थः ।

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २॥**

इह लोके कर्माणि विहितानि कुर्वन्नेव शतं समाश्चिरं जिजीविषेत् जीवितुमिच्छेत् । शाश्वतमेवात्र (जीवितं) विवक्षितं कर्मयोगफल-

भूतम् । एवं त्वयि नरे कर्म न लिप्यते सङ्गाय न भवति । इतो मार्गादन्यथा नास्ति । निष्कामविहितकर्माचरणादन्यो मार्गो नास्ति कर्मलेपाभावायेत्यर्थः ।

**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**
**ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३॥**

अन्धेन तमसा वृताः ज्ञानशक्तिप्रविलयनात् । असून् प्राणान् रान्त्यपहरन्त्यपगतप्रज्ञान् कुर्वन्तीति प्रज्ञापरिपन्थिनो भावाः असुरा उच्यन्ते । तद्धितत्वादसुर्या नाम तेऽस्मद्दृष्टिपरोक्षाः लोकाः सन्तीति शेषः । ये के चात्महनः प्रकरणादात्मज्ञानशून्यत्वात् कर्मलेपत्वाच्च हेतुभ्यां शरीराद्विज्ञानमयस्य पृथक्करणाभावादन्तकाले आत्मनो हन्तारः प्रज्ञापरिच्युतेः स्थावरसाम्यमिता इत्यर्थः । ते तान् पूर्वोक्तानसुर्यांल्लोकान् प्रेत्याभिगच्छन्ति । मूर्छितस्य यादृशो लोकस्तादृशा एषां लोका इति विज्ञायते । ज्ञानयोगीत्विहैवात्मानमनुभवति । कर्मयोगि त्वलिप्तत्वाद् अन्ततः प्राप्नोत्यमृतत्वम् । अपरस्त्वात्महाजुगुप्सितगतिर्भवतीति पर्यवसन्नं तात्पर्यम् ।

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४॥**

एकं सर्वोपादानत्वात् सर्वात्मकमिति केवलं किमपि वस्तु । अनेजत् स्वभावादचञ्चलम् । मनसो जवीयो वेगवत्तरं धर्मभूतज्ञानद्वारा । पूर्वमर्षद्गच्छदेनद्देवानाप्नुवन् पश्चान्न प्रापुः । तत्तिष्ठदचञ्चलमेव धावतो-ऽन्यानत्येति अतिलङ्घते । तस्मिन् मातरिश्वा निजक्रियाशक्तिरूपो

वायुरपोरसन्दधाति धारयति । यदलेपत्वात् सूक्ष्मातिसूक्ष्मत्वात् सर्वातिगत्वाच्चान्याभिर्विभूतिभिरस्पृश्यमासीत्तत्र मातरिश्वना निमित्तेन रसः सूक्ष्मो भूत्वा प्राणात्मको ध्रियमाणो योगं प्रापेत्यर्थः ।

**तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥**

तदेजति तन्नैजति प्रागुक्तरीत्या । तद्दूरे सूर्यमण्डलान्तर्वर्तित्वात् । तदन्तिके हृदयान्तर्वर्तित्वात् । तदस्य सर्वस्यान्तर्न केवलं मण्डल-हृदययोः । तदस्य सर्वस्य बाह्यतः । पूर्णमित्युक्तं भवति । द्विरुः पादपूरणः ।

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥६॥**

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । आत्मानं च सर्वभूतेषु । ततोऽनुभवान्न विजुगुप्सते न कस्मिँश्चिद्वस्तुनि जुगुप्सावान् भवति । सर्वत्रात्मदर्शनात् । अस्यानुभवस्तु तेन त्यक्तेनेत्येव ।

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥**

विजानत आत्मज्ञानिनो यस्मिन् दशाविशेषे सर्वाणि भूतान्यात्मैवाभूत् अपृथग्भावेन दर्शनात् । तत्र दशाविशेषे एकत्वमनुपश्यतः पुरुषस्य को मोहः कः शोकः । मोहशोकौ न स्यातामित्यर्थः । पूर्वत्र विकारांश-

त्यागेन ब्रह्मानुभूतिर्विवक्षिता । अत्र सर्वस्यापि ब्रह्मत्वेन दर्शनं विवक्षितम् । विकाराणां विषयत्वेन सेवासंसारः । विभूतित्वेनोपासनं तु पूर्णानुभूत्यप्रतिद्वन्द्वीति ।

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।**
**कविर्मनीषीपरिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधा-**
**च्छाश्वतीभ्यः समाभ्यः ॥८॥**

स मुक्तः पुरुषोऽकायमशरीरं अव्रणमभेद्यत्वात् अस्नाविरमभौतिक-त्वात् । शुद्धममलिनम् । अपापविद्धं असङ्गत्वात् । शुक्रममृतं ज्योतिर्मयं दिव्यं वपुः पर्यगात् प्राप । कविर्मन्त्रदर्शी मनीषी मनस ईशः परिभूः सर्वात्मभावेन व्याप्तः स्वयंभूरमृते दिव्ये वपुषि स्वयमाविर्भावात् । स पुरुषोऽर्थान् वेदितव्यानंशान् याथातथ्यतः सत्यतया शाश्वतीभ्यः समाभ्यः चिरं लोके जिज्ञासूनामर्थे स्थितये व्यदधाद्रचयामास । अभि-दधावित्यर्थः । ऋषेरात्मान्वितैव परोक्षवदेषोक्तिः । ईश्वराधि-कारोऽयमित्येके ।

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥९॥**

ये अविद्यां केवलां निद्रामित्यर्थः । सा ह्यविद्या केवला । यतस्तदा न किञ्चिद्विजानाति । ते अन्धं तमः प्रविशन्ति ज्ञानशून्यत्वात् । ये विद्यायां केवलायां त्र्य्यादिविद्यायां लोकज्ञानात्मिकायां चरताः सक्ताः । ते ततः पूर्वोक्तात्तमसः भूय इव तमः प्रविशन्ति । विकाराविज्ञानेनासमुच्चितं विज्ञानं कदाचिन्न ब्रह्मज्ञाने । भेदेन विकारग्रहः । अभेदेन ब्रह्मानुभव

इति परस्परविरोधात् । नैवं विभूत्युपासनोच्छेदः । तत्र विकाराणां पृथक्त्वेनाग्रहणादविद्यैवेति । उः पादपूरणः ।

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १०॥

विद्यया वक्ष्यमाणया अन्यदेव फलमाहुः । अविद्यया वक्ष्यमाणया अन्यत्फलमाहुः । ये नस्तत् प्रकरणं विचचक्षिरे तेषां धीराणां सकाशादिति शेषः । इति पूर्वोक्तप्रकारेण शुश्रुम श्रुतवन्तः स्मः । यद्यप्यविद्याविद्ये निष्फले केवले तथापि ते प्रकारान्तरेण समुच्चिते फलदे इति भावः ।

विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११॥

विद्यां चाविद्यां चोभयं तत्सह समुच्चयेन यो वेद युगपद्विद्वानविद्वाँश्च भवतीत्यर्थः । कस्य विद्वान् कस्याविद्वानिति चेत् ईश्वरस्य विद्वान् पार्थक्येन विकाराणामविद्वानिति व्याख्यास्यामः । स चाविद्यया पार्थक्येन विकाराणामपरिज्ञानेन निमित्तेन मृत्युं प्रमादं तीर्त्वा विद्ययेश्वरानुभूत्या अमृतं शाश्वतं ब्रह्मभावेन स्थितिमश्नुते प्राप्नोति । जगद्यः पृथग्भावेन जानन्ननुभवति स ईश्वरं लक्षणतो जानन्नपि नैवानुभवति । अत एव केवलां विद्यां न्यषेधत् । ईश्वरस्याविद्वान् प्रपञ्चमविजानन्नपि न समाधिस्थः । तं तु निद्रितमेव पश्यामः । अतः केवलामविद्यां निनिन्द । अविद्याविद्ययोः प्रागुक्तरीत्या समुच्चयः स समाधिरेव ।

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥ १२॥**

ये असम्भूतिं सम्भूतिप्रतिद्वन्द्विनं विनाशमुपासते केवलं म्रियन्त इति यावत् । ते अन्धं तमः प्रविशन्ति । ये सम्भूत्यां रताः जन्म प्राप्ता इति यावत् । ते ततो भूय इव तमः प्रविशन्ति । केवलेभ्यो मृतेभ्यो जाताः केवला अधिके तमसि प्रविष्टा इति भावः ।

**अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३॥**

सम्भवादन्यदेव फलमाहुर्वक्ष्यमाणात् । असम्भवाद्विनाशादन्यदेव फलमाहुर्वक्ष्यमाणात् । ये नः (अस्मभ्यं) तत् प्रकरणं विचचक्षिरे । तेषां धीराणां सकाशादिति शेषः । इति पूर्वोक्तप्रकारेण शुश्रुम श्रुतवन्तः स्मः । यद्यपि मरणजन्मनी केवले तमः प्रविशहेतू तथापि प्रकारान्तरेण समुच्चिते फलदे इति भावः ।

**सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४॥**

सम्भूतिं च विनाशं च तदुभयं सह समुच्चयेन यो वेदानुभवति युगपज्जातो मृतश्च भवतीत्यर्थः । अभिमानत्यागादत्र शरीरे मृतः । तपसाऽऽभ्यन्तरे ज्योतिषि तादात्म्याज्जात इति विवेकः । स च विनाशेन देहाभिमानत्यागेनात्र शरीरे मरणेन मृत्युं प्रमादं तीर्त्वा । सम्भूत्याऽऽभ्यान्तरे ज्योतिषि तादात्म्याद्दिव्येन जन्मनाऽमृतं

ब्रह्मभावमश्नुते पाप्नोति ।

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥**

सत्यस्य प्रत्यगात्मनो मुखं भ्रूमण्डलवर्ति दिव्यमान्तरं चक्षुर्हिरण्मयेन पात्रेणाक्ष्णोरुपरिभागेन पात्राकारत्वादेष भागः पात्रं हिरण्मयमिति रूपितः । अपिहितमाच्छादितम् । अतो वयमन्तरन्धाः । पूषन् सूर्यमण्डलान्तर्वर्तिन् पुरुष त्वं तदपावृणु कुर्वपावृतम् । कस्मै प्रयोजनाय सत्यधर्माय प्रत्यगात्मधर्माय दृष्टये प्रतीच्यै दृष्टय इति भावः ।

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह ।**
**तेजो यत्ते रूपं कल्याणतमं तत्ते**
**पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥१६॥**

पूषन् पोषक एकर्षे सर्वमन्त्राणां द्रष्टः । यम नियामक प्राजापत्य प्रजापतेरखण्डात्मनो हिरण्यगर्भात्मना मण्डले प्रादुर्भूतसूर्य- भगवन्, व्यूह सन्नाहय रश्मीन् किरणान् । समूह एकीकुरु । मम प्राणानां सर्वेषां सजातीयानामनुग्रहायेति भावः । रश्मयो हि प्राणा अध्यात्मम् । तेजस्तेजोमयं यत्ते कल्याणतमं रूपं तत्ते पश्यामि । योऽसौ असौ पुरुषः सोऽहमस्मि । साक्षात्कारादन्तरमिदमुच्यते ।

**वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।**
**ॐ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर ॥१७॥**

वायुरनिलं निलयनरहितममृतं वस्तु । सङ्गरहित इति यावत् । अथेदं शरीरं भस्मान्तं नश्वरमित्यर्थः । मातरिश्वन एवैषा स्तुतिर्भवति । ॐ प्रणवरूपक्रतो सर्वक्रियाकारिन् वायो स्मर मामिति शेषः । कृतं मया कृतं पुण्यं स्मर । वाक्यस्य द्विर्वचनं प्रार्थनायामादरातिशयार्थम् ।

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां**
**ते नम उक्तिं विधेम ॥ १८॥**

द्युस्थानमन्तरिक्षस्थानं च दैवते प्रार्थिते । अथ पृथिवीस्थानं प्रार्थयते । अग्ने देव अस्मान् राये सम्पदे विश्वानि सर्वाणि वयुनानि स्थानानि विद्वान् त्वं सुपथा शोभनेन मार्गेण नय । अस्मन् मत्तो जुहुराणं लज्जाकरमेनो युयोधि पृथक्कुरु । ते तुभ्यं भूयिष्ठां नम उक्तिं विधेम । यदीशोपक्रम्य सूर्यवायुवैश्वानराणां स्तुत्योपसंहरति । तत् ज्ञापयत्युपनिषत् ईशस्तिस्र एता देवता विभूतय इति विभूतय इति ।

अत्रायं श्लोको भवति ।

संहितान्तानुवाकोऽयं गोप्यो वाजसनेयिनाम् ।
भाष्येण लघुनाऽनेन दीपेनेव प्रकाशितः ॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनो-
र्गणपतेः कृतिर्वाजसनेयिसंहितोपनिषद्भाष्यं समाप्तम् ॥

|| श्रीः ||

# || उपदेशसारभाष्यम् ||

अथ रमणस्य भगवतो महर्षेरुपदेशसारं व्यख्यास्यामः ।
तस्यायमादिमः श्लोको भवति ॥

**कर्तुराज्ञया प्राप्यते फलम् ।**
**कर्म किं परं कर्म तज्जडम् ॥ १ ॥**

मीमांसकाभिमतं फलप्रदत्वे कर्मणः प्राधान्यं खण्डयितुमयमारम्भः । फलं कर्तुरीश्वरस्य आज्ञया प्राप्यते । कर्म परं किम् । नेत्यर्थः । तत्कर्म जडं भवति । कर्मणः परत्वाभावाय जडत्वमत्र हेतुत्वेनोपन्यस्तम् । कर्म यस्माज्जडं तसमान्न परमिति यावत् ।

ननु, न वयं कर्मणः परत्वमुद्दिश्य विवदामः । फलप्रदत्वे कर्मणः प्राधान्यमित्येवास्माकं वादः । मास्तु परं कर्म । तथाऽपि स्वजन्यापूर्वद्वारा फलप्रदं भवेत् । एवं हि प्रमाणभूतानि वैदिकवाक्यानि सङ्गच्छेरन्निति चेत् ।

न । ज्योतिष्टोमादीनां स्वर्गसाधकत्वादिबोधयतां वाक्यानां परमेश्वरस्य शुभाशुभफलप्रदत्वे कर्मसापेक्षत्वोक्तेरपि समन्वेतुं शक्यत्वात् । अपि

च शुभाशुभफलप्रदत्वं च सर्वेषां जगन्नियामकत्वान्नातिरिच्यते । तज्जगन्नियामकं तदेव परं स्यात् । अत एव कर्मवादिनो दैवशब्देन तज्जन्यापूर्वं वदन्ति । महर्षिश्च कर्म किं परमित्यत्र तदपूर्वमेवोद्दिशति, व्यवहारेषु कर्मापूर्वयोरविभक्तत्वात् । तस्मान्न वयं कर्म परं वदाम इति पूर्वपक्षिणा वक्तुमशक्यम् । अयं भावः । मीमांसककल्पितमपूर्वं जडत्वान्न परम् । न च शुभाशुभानि फलानि स्वतन्त्रतया दातुमीष्टे । गौरवं च भवति तस्य कल्पन ईश्वरस्यैव सापेक्षस्य कर्मफलदातृत्वे प्रमाणवाक्यानामबाधात् ।

**कृतिमहोदधौ पतनकारणम् ।**
**फलमशाश्वतं गतिनिरोधकम् ॥ २॥**

फलं कर्मफलं अशाश्वतं सत्, भोगेनावक्षीणमनुशयमात्रशेषमिति यावत् । कृतिमहोदधौ कर्ममहासमु द्रे पतनकारणं भवतीति शेषः । यदि फलं शाश्वतं स्यात् तर्हि पुनरावृत्तिर्न स्यात् । फलस्याशाश्वतत्वादेव शेषानुशयवशात्पुनरावृत्तिसम्भव इति भावः । अत एव गतिनिरोधकम् । गतेः पुनरावृत्तिरहितायाः परधामगतेर्निरोधकं प्रतिबन्धकं भवतीति शेषः । अत्राशाश्वतं फलमेव पतनकारणमुक्तं भगवता, न कर्म, तस्मात्सकामकर्मैव दूषयति भगवानित्यवगन्तव्यम् ।

**ईश्वरार्पितं नेच्छया कृतम् ।**
**चित्तशोधकं मुक्तिसाधकम् ॥ ३॥**

ईश्वरार्पितं ईश्वराय विश्वाध्यक्षाय अर्पितं त्वमेवास्य कर्मणः फलं यथेष्टं जगतः कार्ये विनिङ्क्ष्वेति समर्पितम् । नेच्छया अनिच्छया, नञो न

लोपाभावो नैकादिवत् । कृतं कर्म चित्तशोधकं चित्तस्य मनसः शोधकं शुद्धिकारि । मुक्तिसाधकं मुक्तेः संसारबन्धाद्विमोक्षस्य साधकं च भवति । मनसि शुद्धे हि मोक्षः सुलभः ।

**कायवाङ्मनः कार्यमुत्तमम् ।**
**पूजनं जपश्चिन्तनं क्रमात् ॥ ४॥**

तदेव कर्म विभजते । कायवाङ्मनः कार्यं पूजनं जपश्चिन्तनं च, कायकार्यं पूजनं वाक्कार्यं जपः मनः कार्यं चिन्तनं चेति क्रमादन्वयो बोध्यः । तदिदं त्रयं क्रमादुत्तमम् । पूजनं प्रथमं कर्म । तत उत्तमं जपाख्यं कर्म । तत उत्तमं ध्यानमिति यावत् । अत्र स्तोत्रस्य जपे सङ्ग्रहो ज्ञेयः ।

**जगत ईशधीयुक्तसेवनम् ।**
**अष्टमूर्तिभृद्देवपूजनम् ॥ ५॥**

पूर्वश्लोके पूजनशब्देन सामान्यतो विग्रहाराधनमभिहितम् । तस्यावरत्वेन कीर्तनादेतदवगम्यते । अधुना पूजाप्रसङ्गेन सर्वकर्मोत्कृष्टं विशिष्टं पूजनमेकमभिदधाति । जगतः प्रपञ्चस्य ई शधीयुक्तसेवनं ईश्वर एवेदं जगदिति धिया युक्तं सेवनम् । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते । शाण्डिल्यविद्योक्तमुपासनमिति यावत् । अष्टमूर्तिभृद्देवपूजनं भवति । पञ्चमहाभूतानि सूर्याचन्द्रमसौ जीवश्चेश्वरस्याष्टौ मूर्तिविशेषा उच्यन्ते । ताभिश्च मूर्तिभिः सर्वं जगदाक्रान्तमिति हेतोर्विश्वस्येश्वर-धियोपासनमष्टमूर्त्युपासनं भवतीति भावः । इदं तु पूर्णं पूजनम् । नास्य पूर्वश्लोकोक्तपूजने सङ्ग्रहः । तस्य सर्वावरत्वादस्य सर्वोत्तमत्वात् ।

ध्यान एवास्य सङ्ग्रहो भवति । धिय एवैकरूपाया अत्र प्राधान्यात् । सामान्यतः पूजनं तु शिवमूर्तिष्वन्यतमस्याः पृथिव्याः स्वल्पैकदेशस्य भवति । कायनिष्पाद्यं च भवति । इदं तु सर्वासां मूर्तिनां साकल्येन बुद्धिनिष्पाद्यमित्यनयोरस्ति भूयान्विशेषः ।

**उत्तमस्तवादुच्चमन्दतः ।**
**चित्तजं जपध्यानमुत्तमम् ॥ ६॥**

उत्तमस्तवात्सत्याद्वैदिकात्तादृशादार्षाद्वाऽन्यस्मात् । उच्चमन्दतः उच्चान्मन्दादुपांशोश्च प्रकरणाज्जपादिति शेषः । चित्तजं मानसिकं जप-ध्यानं जप एव ध्यानमित्यत्र समासः । न जपो ध्यानं च तयोः समाहार इति । ध्यानस्य मानसिकजपादव्यतिरेकात् । उत्तमं भवति । स्तोत्रवाचकोपांशुजपेभ्यो ध्यानं श्रेष्ठमिति भावः । आद्येष्वपि त्रिषु यथोत्तरं श्रैष्ठ्यमूह्यम् ।

**आज्यधारया स्रोतसा समम् ।**
**सरलचिन्तनं विरलतः परम् ॥ ७॥**

आज्यधारया घृतधारया स्रोतसा नदीप्रवाहेन च समम्, सरलचिन्तनं सरलं नित्यं सहजं निर्यच्चिन्तनं ध्यानं विरलतः मध्ये मध्ये विच्छिन्नात् परं श्रेष्ठम् । उत्तमे ध्यानेऽपि सच्छेदादविच्छेदं शस्यत इति यावत् । ध्याने भक्तिरूपस्नेहसम्बन्धं सूचयितुमाज्यधारौपम्यम् । नैर्मल्यं सूचयितुं प्रवाहौपम्यम् ।

**भेदभावनात्सोऽहमित्यसौ ।**
**भावनाऽभिदा पावनी मता ॥ ८॥**

भूयो ध्याने विशेषान्तरमाह भेदभावनात् ध्याने ध्यातुः स्वस्मादीश्वरं भिन्नं कल्पयित्वा यद्भावनं क्रियते तस्मात् सोऽहमित्यसौ ईश्वर एवाहमित्याकारका अभिदा भेदरहिता भावना पावनी पवित्रा मता । भेदेन ध्यानादभेदेन ध्यानमुत्तममिति भावः ।

**भावशून्यसद्भावसुस्थितिः ।**
**भावनाबलाद्भक्तिरुत्तमा ॥ ९॥**

भावनाबलात् अभेदभावनाबलादित्येव सामर्थ्यात् । भावशून्यसद्भाव-सुस्थितिः भावशून्या सङ्कल्पशून्या सद्भावेन सत्तया सुस्थितिर्निष्ठा उत्तमा भक्तिर्भवति । भिन्नभावनायां या भक्तिः सा त्ववरेति परिशेषन्यायात् सिध्यति ॥

**हृत्स्थले मनः स्वस्थता क्रिया ।**
**भक्तियोगबोधाश्च निश्चितम् ॥ १०॥**

हृत्स्थले आत्मनः स्थाने मनःस्वस्थता मनसः स्वस्थानस्थितता । क्रिया कर्म भवति । भक्तियोगबोधाश्च भक्तिर्योगो बोधश्च भवति । निश्चितम्, न कश्चित्संशय इत्यर्थः । मनसः स्वजनिस्थाने हृदयेऽवतीर्य निष्ठैव कर्म पर्यवसन्नं सर्वकर्ममौलिभूतम् । सैव भक्तिः पर्यवसन्ना सर्वभक्तिमौलिभूता । सैव योगः पर्यवसन्नः सर्वयोगमौलिभूतः । सैव ज्ञानं पर्यवसन्नमिति यावत् ।

**वायुरोधनाल्लीयते मनः ।**
**जालपक्षिवद्रोधसाधनम् ॥ ११॥**

वायुरोधनात् वायोः प्राणस्य रोधनात् प्रतिष्टम्भनान्नियमनाद्वा मनः जालपक्षिवत् लीयते आत्मनि निश्चलं रुद्धं भवति । इदं रोधसाधनम् । पूर्ववाक्यार्थस्य कर्तृत्वादिदमिति तस्याक्षेपः । हठेन कुम्भकस्य साधनं प्रतिष्टम्भनं प्राणस्य भवति । सततं यातायातप्रत्यवेक्षणान्नियमनं भवति । तस्यापि कुम्भकसंज्ञा राजयोगिनां मतेनाविरुद्धा । उत्तरैव महर्षेरिष्टा प्रक्रिया यदयमाह गीतासु (रमणगीतासु) "प्राणरोधश्च मनसा प्राणस्य प्रत्यवेक्षणम् । कुम्भकं सिध्यति ह्येवं सततप्रत्यवेक्षणात्" इति ।

**चित्तवायवश्चित्क्रियायुताः ।**
**शाखयोर्द्वयी शक्तिमूलका ॥ १२॥**

चित्क्रियायुताः क्रमेण चिता क्रियया च युताः चित्तवायवः चित्तानि मनांसि वायवः प्राणश्च चिद्युतानि चित्तानि क्रियायुताः प्राणाश्चेति यावत् । शक्तिमूलका शक्तिरीश्वरशक्तिर्मूलं यस्यास्तादृशी शाखयोर्द्वयी भवति । आदिशक्तेर्ज्ञानशक्तिशाखा चित्तानि । क्रियाशक्तिशाखा प्राणा इति तात्पर्यम् । जनबहुत्वापेक्षया चित्तप्राणयोर्बहुवचनेन निर्देशः । अयं भावः । यतो मनो वायुश्च शाखाद्वयमीश्वरशक्तेः, तस्मात्तदुभयं च तदधिगमाय मार्गीभवितुमर्हति ।

**लयविनाशने उभयरोधने ।**
**लयगतं पुनर्भवति नो मृतम् ॥ १३॥**

लयो विनाशनं च लयविनाशने, उभयरोधने उभयविधरोधने भवतः। मध्यमपदलोपसमासः । लयगतं मन इत्यध्याहारः । पुनर्भवति जायते । मृतं विनष्टं नो न जायते । वृत्तिमात्रोपसंहारो लयः । तद्वतो योगिन उत्थानं समाधिश्च पर्यायेण भवतः । वृत्तिमूलाहङ्कारोपसंहारो विनाशनम् । तद्वतो ज्ञानिनो नित्यः समाधिर्भवति ।

**प्राणबन्धनाल्लीनमानसम् ।**
**एकचिन्तनान्नाशमेत्यदः ॥१४॥**

वायुरोधनादिति श्लोकोक्तात्प्राणबन्धनात् प्राणप्रतिष्टम्भनात् प्राण-नियमनाद्वा लीनमानसं लीनं मनः अदः एकचिन्तनादात्मैक्यानु-सन्धानान्नाशमेति । प्राणरोधो मनसो लयहेतुरेव भवति न विनाशन-हेतुः । लीने मनस्यैक्यानुसन्धानं मनोनाशनायेत्यर्थः।

**नष्टमानसोत्कृष्टयोगिनः ।**
**कृत्यमस्ति किं स्वस्थितिं यतः ॥१५॥**

स्वस्थितिमात्मनिष्ठाम्, यतः प्राप्तस्य नष्टमानसोत्कृष्टयोगिनः कृत्यं किमस्ति । नष्टे मनसि न किञ्चित्कर्तव्यं शिष्यत इति भावः ।

**दृश्यवारितं चित्तमात्मनः ।**
**चित्त्वदर्शनं तत्त्वदर्शनम् ॥१६॥**

दृश्यवारितं दृश्येभ्यो वारितं परावृत्तमन्तर्मुखमिति यावत् । चित्तं आत्मनश्चित्त्वदर्शनं भवति । व्यतिरेकतो विषयेभ्यः परावृत्तमेव

चित्तमन्वयत आत्मचित्त्वदर्शनं भवतीत्यक्षरार्थः । चित्तस्य वहिर्मुखत्वाभावे निद्राऽभावे चान्तर्मुखं तदात्मचित्त्वदर्शनरूपमेव पर्यवस्येत् । अथाऽऽह यदात्मनश्चित्त्वदर्शनं तदेव तत्त्वदर्शनम् ।

**मानसं तु किं मार्गणे कृते ।**
**नैव मानसं मार्ग आर्जवात् ॥ १७॥**

मानसं तु किं किं स्वरूप इति मार्गणे विचारणे कृते मानसं नैव न परिशिष्यत इति भावः । विचारयिता स्वयमेव हि मानसस्य स्वरूपम् । स्वरश्मिविशेषत्वान्मानसस्य । विचारणसमये स च रश्मिरात्मन्युपसंहृतो भवतीति तदा नैव मानसमित्युपदिशति भगवान् । अयमेवार्जवान्मार्गः ।

**वृत्तयस्त्वहं वृत्तिमाश्रिताः ।**
**वृत्तयो मनो विद्ध्यहं मनः ॥ १८॥**

वृत्तयस्तु अहं वृत्तिं अहमित्याकारकं सङ्कल्पं आश्रिता तन्मूलकाः तत्प्रकृतिका इत्यर्थः । वृत्तय एव मनः संसृतौ विजृम्भणकाले । तस्मान्मनोऽहं विद्धि । यस्मादहंवृत्तिमाश्रिताः सर्वा वृत्तयस्तस्मात्तद्रूपं मनस्तत्प्रकृतिभूताऽहंवृत्तिरूपं पर्यवस्यतीति तात्पर्यम् ।

**अहमयं कुतो भवति चिन्वतः ।**
**अयि पतत्यहं निजविचारणम् ॥ १९॥**

अयमहं अहङ्कारः अहंवृत्तिरूपः कुतो भवति इति चिन्वतः मार्गयतः विचारयतः, अहं सोऽहङ्कारः, पतति नाशमेति । इदमेव

निजविचारणमात्मविचारणम् । अयीति शिष्यसम्बोधनम् । अत्रापि वाक्यार्थस्य कर्तृत्वादिदमित्याक्षिप्यते ।

**अहमि नाशभाज्यहमहंतया ।**
**स्फुरति हृत्स्वयं परमपूर्णसत् ॥ २० ॥**

अहमि मनोमूलवृत्तिरूपे नाशभाजि सति परमपूर्णसत् परममखण्डं सच्च हृत् स्वरूपं स्वयं अहमहंतया अहमहमिति धिया स्फुरति भासते । नन्वहमि नाशं प्राप्ते कुतः पुनरन्यस्याहमः सम्भव । उच्यते । अहन्ता व्यक्तित्वान्नातिरिच्यते । तन्मनोगतमात्मगतं च द्विविधं भवति । मनोगतेऽहंभावे नात्मन्यहंभावः । तदुपरम आत्मनो व्यक्तित्वं भासेत । तस्मादुक्तमेकस्मिन्नहमि नाशं गतेऽन्यदहंतया स्फुरतीति ।

**इदमहंपदाभिख्यमन्वहम् ।**
**अहमि लीनकेऽप्यलयसत्तया ॥ २१ ॥**

इदं हृत् अहंपदाभिख्यं अहं पदमभिख्या यस्येति । अहमिति पदं मनसि गौणमात्मनि मुख्यमिति भावः । हेतुमाह । अन्वहं अहमि लीनकेऽपि मनोमयाहङ्कारे नष्टेऽपि अलयसत्तया अनष्टसद्भावेन । अयं भावः । योऽहंपदार्थः स आत्मेति पामरोऽप्यङ्गीकुर्यात् । अहङ्कारे शान्ते नात्मा शान्तो दृश्यते । स्फुरत्येवाहमिति । मनस्तु शान्तं भवति । एवमन्वयव्यतिरेकाभ्यामहंपदं मनसि गौणमात्मनि मुख्यमिति सिद्धम् । कथं गौणं कथं मुख्यम् । मनसोऽहङ्कारसम्बन्धात्तत्र गौणम् । आत्मन्यहन्तायाः सत्तारूपेण नित्यं भानात्तत्र मुख्यम् ।

**विग्रहेन्द्रियप्राणधीतमः ।**
**नाहमेकसत्तज्जडं ह्यसत् ॥ २२॥**

एकसत् एकसद्रूपः अहं विग्रहेन्द्रियप्राणधीतमो न, देहेन्द्रियप्राणबुद्धि-रूपं तिमिरं न । कारणमाह । हि यस्मात्कारणात् तद्विग्रहादि जडं असच्च । यज्जडं तत्कथमात्मा । यन्नास्ति तत्कथमात्मा।

**सत्त्वभासिका चित्क्व वेतरा ।**
**सत्तया हि चिच्चित्तया ह्यहम् ॥ २३॥**

सद्वस्तु केन भासत इत्याशङ्क्य परिहरति । सत्त्वभासिका इतरा चित् क्व वा । नेत्यर्थः । सत्तां भासयितुमन्यस्याश्रितो नावसर इति यावत् । कारणमाह । हि यस्मात् सत्तया चिद्भवति यत्सत्तदेव स्वभावतश्चिन्मयम् इत्यर्थः । हि यस्माच्च कारणात् अहं चित्तया भवामि। या चित्सैव स्वभावतोऽहंपदार्थ इत्यर्थः । सत्ताचित्ताहन्तानां त्रिकं स्वभावतः समानाधिकरणमिति यावत् । चिद्रश्मिसन्बन्धान्मनस्यहन्ता गौणीति प्रागेवावेदितम् ।

**ईशजीवयोर्वेषधीभिदा ।**
**सत्स्वभावतो वस्तु केवलम् ॥ २४॥**

ईशजीवयोः वेषधीभिदा भवति । वेषतो भेदश्चाण्डपिण्डोपाधिकृतः । धीतो भेदः सर्वज्ञत्वाल्पज्ञत्वाभ्याम् । एवमपि वस्तु केवलमेकमेव । कुतः । सत्स्वभावतः सत्तारूपधर्मान्वयात् । अत्र कालत्रयेऽपि सदेव सच्छब्देनोच्यते । अन्यथा दृश्यानां च विनश्वराणां भानकालिकसत्ताम्

आश्रित्य सत्स्वभावप्रसक्तिः स्यात् ।

**वेषहानतः स्वात्मदर्शनम् ।**
**ईशदर्शनं स्वात्मरूपतः ॥ २५॥**

वेषहानतः पिण्डोपाधिसम्बन्धभावनानाशनात् स्वात्मदर्शनं भवति । अपरोक्ष आत्मानुभवः स्यादित्यर्थः । अस्तु स्वात्मदर्शनं कथमीशदर्शनं स्यादिति चेदत्राह । स्वात्मरूपतः ईश एव स्वात्मनो रूपमिति हेतोस्तदेवेशदर्शनम् । शुद्धस्वात्मदर्शनादीशदर्शनं नापरमस्तीति तात्पर्यम् । वेषहीनस्यात्मनोऽपरिच्छिन्नत्वान्न तदनुभवः परिच्छिन्नः, अपि तु पूर्ण एवेति ।

**आत्मसंस्थितिः स्वात्मदर्शनम् ।**
**आत्मनिर्द्वयादात्मनिष्ठता ॥ २६॥**

दर्शनमिति पूर्वश्लोकोक्तपदेन भूयस्त्रिपुटीसम्भवमाशङ्क्य परिहरति । आत्मसंस्थितिरात्मनिष्ठैवात्मदर्शनम् । न तत्र त्रिपुट्या अवसरः । सा चात्मनिष्ठता आत्मनिर्द्वयाद्भवति । आत्मनिष्ठतायां द्वैतसम्पर्को लेशतोऽपि न वर्तितव्यः । यदि द्वैतं भासेत तत्र तन्मयनिष्ठा कथं स्यादिति तात्पर्यम् ।

**ज्ञानवर्जिताऽज्ञानहीनचित् ।**
**ज्ञानमस्ति किं ज्ञातुमन्तरम् ॥ २७॥**

ज्ञानवर्जिता अज्ञानहीना च चित् ज्ञानं भवति । ननु ज्ञाने ज्ञानवर्जितत्वं

कथमिति चेत्कारणमाह । ज्ञातुं यत् किञ्चिदन्यद्वेदितुं अन्तरं भेदः अस्ति किम् । नास्तीति भावः । तत्र स्थितौ भेदाभावात्तदाश्रितलोक-प्रसिद्धज्ञानाभावः । एवमपि सा स्थितिर्ज्ञानमय्येव पूर्णानुभूतिरूप-त्वात् ।

**किं स्वरूपमित्यात्मदर्शने ।**
**अव्ययाभवापूर्णचित्सुखम् ॥ २८॥**

किं स्वरूपं किं मे रूपमिति विचारणविधया आत्मदर्शने सति, आत्मनिष्ठायां सिद्धायां, अव्ययं नाशरहितं अभवमकृत्रिमं सहजमिति यावत् । आपूर्णमासमन्तात्पूर्णं चित्सुखं सम्पद्यत इति शेषः । एतदनुभूतिवर्णनं भवति पुनर्मार्गप्रदर्शनपूर्वकम् ।

**बन्धमुक्त्यतीतं परं सुखम् ।**
**विन्दतीह जीवस्तु दैविकः ॥ २९॥**

दैविकः देहात्मभावरहित आत्मनिष्ठः तस्यामवस्थायामेव हि आत्मनो दिव्यत्वं परिस्फुरेत् । जीवस्तु बन्धमुक्त्यतीतं बन्धमुक्तिभ्यामतीतं परं सुखमानन्दं विन्दति प्राप्नोति । बन्धस्फूर्तिसापेक्षा मुक्तिस्फूर्तिः । तस्मादज्ञानिनां व्यवहार एव साऽवस्थ मुक्तिरित्यभिधीयते । अनुभविनो बन्धस्फूर्तिरहितस्य मुक्तिस्फूर्तिरपि नास्तीति तस्य सावस्था बन्ध-मुक्त्यतीतैव वक्तव्या ।

**अहमपेतकं निजविभानकम् ।**
**महदिदं तपो रमणवागियम् ॥ ३०॥**

अहमपेतकं अहमा मनोमूलाहङ्कारेण अनात्मगतयाऽहंवृत्येति यावत् । अपेतकं वियुतं निजविभानकं स्वरूपविभानं इदं महत्तपः । आत्मनोऽप्यहमहंतया स्फुरणादहमपेतकमित्यत्र गौणस्याहंभावस्य निरासो बोध्यः । सर्वेभ्यस्तपेभ्यो नित्यमात्मस्फुरणं महत्तप इति तात्पर्यम् । इयं रमणवाक् रमणस्य महर्षेर्वाक् इयमित्यनेन सर्वस्यापि ग्रन्थस्य ग्रहणम् । नैतच्छ्लोकमात्रस्य । स एष उपदेशसारस्त्रिंशता श्लोकानां निबद्धो भगवतो रमणस्य महर्षेर्विजयतेतरां विजयतेतराम् ।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिः उपदेशसारभाष्यं समाप्तम् ।

*विभवाब्दे ज्येष्ठमासे पौर्णम्यां भानुवासरे ।*
*चन्द्रोपरागसमये भाष्यमेतदुदीरितम् ॥*

# गुरुमन्त्रभाष्यम्

## प्रथमः पटलः

### मन्त्रोद्धारः

वेदादिपाकदमनोत्तरकच्छपेशै-
र्युक्तैर्धराधरसुषुप्त्यमरेश्वरैश्च ।
सूक्ष्मामृतायुगमृतेन सह प्रणत्या
सम्पन्नशब्दपटलस्य रहस्यमर्थम् ॥ रमणगीता - १८, १० ॥

वेदादिः प्रणवः । पाकदमनादिन्द्रबीजाल्लकारादुत्तरो वकारः पाकदमनोत्तर उच्यते । कच्छपेशः कूर्मेशनामकरुद्रस्य बीजं चकारः । तैः "ॐ वच" इत्येतैरक्षरैः । धराधरः पर्वतबीजः दकारः । सुषुप्तिर्निद्रानामकशक्तेर्बीजं भकारः । अमरेश्वरः अमरेश्वरनामकरुद्रस्य बीजमुकारः । तैर्युक्तैः "द्भु" इत्येतेनाक्षरेणेति यावत् । सूक्ष्मामृतानामकशक्तेर्बीजमेकारः । तद्युक् तद्युक्तं अमृतं तोयबीजं तेन "वे" इत्यक्षरेण । प्रणत्या "नमः" इति पल्लवेन च सह मिलित्वा । सम्पन्नशब्दपटलस्य "ॐ वचद्भुवे नमः" इति मन्त्रस्य रहस्यं तत्त्ववेत्तृभिरेव ज्ञातुं शक्यम् । अर्थं वाच्यभूतम्। रमणं भगवन्तममृतनाथयतीन्द्रः पृष्टवानित्युत्तरेणान्वयः । एवं च भगवतो गुरोर्मन्त्रः 'ॐ वचद्भुवे नमः' इति पर्यवस्यति । नन्वयं शारदातिलकादिषु तन्त्रेषु स्कन्दमन्त्रत्वेन प्रसिद्ध इति चेत्, अत एव वयं ब्रूमो भगवतो गुरोरेष मन्त्र इति । रमणो हि भगवान्गुरुर्भगवतः सनत्कुमारापरपर्यायस्य

स्कन्दस्य कारणगुरोस्तेजोंशावतारः ।

मन्त्रशरीरम्

सोऽयं महामन्त्रो मूलतः षडक्षरो 'वचद्भुवे नमः' इति । सामान्यः सर्वमन्त्राणामादौ कैश्चित्तान्त्रिकैः प्रयुज्यमानेन प्रणवेन सह सप्ताक्षरो भवति । यथा 'नमः शिवाय' इति पञ्चाक्षरः प्रणवेन सह षडक्षर एवमत्रापि ॥

सर्वस्याश्च देवतायाः चत्वारि रूपाणि भवन्ति । एकमाध्यात्मिकम् । अन्यदाधिभौतिकम् । इतरदाधिदैविकम् । परं मन्त्रात्मकमिति । उत्तरत्रायं निगमो भवति - "वाचमष्टापदीमहं नवस्त्रक्तिमृतस्पृशम् । इन्द्रात्परितन्वं ममे ।" (ऋग्वेदः - ८:६५:१२) । अनया ऋचा ऋषिरिन्द्रस्य मन्त्ररूपां तनुमहं सृजामीत्याह ।

तान्त्रिकाश्चाहुः - "देशिके मानवभ्रान्तिं प्रतिमासु शिलामतिम् । मन्त्रेष्वक्षरबुद्धिं च कुर्वाणो निरयं व्रजेत् ।" इति । सुप्रसिद्धस्य तत्सवितुरित्यस्य मन्त्रस्य गायत्री देवतेति जनवादश्चात्र लिङ्गम् । गायत्री च मन्त्र एव भवति न काचन स्त्री छन्दोनामत्वात्तस्य पदस्य । किं फलितम् । भगवतो गुहस्य मन्त्रात्मकं शरीरं षडक्षरमिति पर्यवसन्नम् । अस्मिन्मन्त्रात्मकशरीरपक्षे षडक्षराण्येव षण्मुखानि भगवतः । यथा पञ्चाक्षराण्येव पञ्चमुखानि परमशिवस्य । एवं मन्त्रमयी देवतेति वदन्तो मीमांसकाः सङ्गच्छन्ते ।

## सामान्यतो मन्त्रार्थः

ॐ ब्रह्मस्वरूपाय । ॐकारस्याव्ययत्वात्सर्वाभिर्विभक्तिभिरन्वयः सिद्ध्यति । ॐकारस्य ब्रह्मवाचकत्वमुपनिषत्सु प्रसिद्धम् । वचद्भुवे वचतः वाक्यानि सृजतः (वागिन्द्रियरूपादग्नेरित्यर्थः)भवतीति वचद्भूस्तस्मै नमः । स्कन्दस्याग्निभूत्वं प्रसिद्धम् ।

## कथं ब्रह्मस्वरूपो देवतात्मा

उक्तः सामान्यतो मन्त्रार्थः । अथ तद्विशेषा विचार्यन्ते । स्कन्दश्च कश्चिद्देवतात्मा । स कथं ब्रह्मस्वरूपो भवति । ब्रह्म च सर्वदेवातीतं परं वस्तु । ननु ब्रह्मणः सर्वात्मकत्वात् स्कन्दस्य ब्रह्मस्वरूपत्वम् अविरुद्धमिति चेत्, सिद्धः शब्दार्थः । उपासने दोषस्तु भवति । निकृष्टे उत्कृष्टभावनोपासने श्रेष्ठा । नोत्कृष्टे निकृष्टभावना । अत एवाह बादरायणः – "ब्रह्मदृष्टिरुत्कर्षात्" इति । ब्रह्मस्वरूपो गुहो यद्युपास्यः ब्रह्मणि व्यापके व्याप्यगुहदृष्टिः प्रसज्येत । वचद्भुवे गुहस्वरूपाय ॐ ब्रह्मणे नम इत्यर्थे दोष एष निवार्येत । मन्त्रस्तु गुहस्य न स्यात् ब्रह्मण एव भवेत् । तच्च प्रतिज्ञातविरुद्धम् । एवमुभयथाऽपि संशये प्राप्ते ब्रूमः । अस्तु ब्रह्मस्वरूपाय गुहायेत्येवार्थः । ब्रह्मस्वरूपं यस्य स ब्रह्मस्वरूपः । अपकर्षोत्कर्षभावश्च गुणापेक्षी । निर्गुणे ब्रह्मणि क्वोत्कर्षोऽपकर्षो वा । यथा गुणापेक्ष्येष भावस्तथा भेदापेक्षी च भवति । पूर्णस्य ब्रह्मणः कस्मादुत्कृष्टत्वम् । यदि स एवात्मा सर्वं स कस्मादुत्कृष्टः स्यात् । तस्य चोत्कर्षो विभूतिद्वारा लोकेऽनुभूयते, अपकर्षस्त्वल्पज्ञजीवद्वारा । तस्माद्यथोत्कृष्टमुपाधितो ब्रह्म तथाऽपकृष्टमपि । प्रकृते उपास्यो गुहः उपासको जीवः । उपाधिविरहे तूभावपि ब्रह्मस्वरूपौ । तस्मादभिन्नौ

। एवमभेदे किं गुहे स्वात्मानं भावयित्वोपासीत उताहो स्वात्मनि गुहमिति संशये उत्कर्षादात्मनि गुहदृष्टिर्गरीयसीति न्यायो लगति । ब्रह्मदृष्टि- रुत्कर्षादिति सूत्रमप्युपासनप्रकरणस्थत्वात्सगुणपरम् । तस्मान्नास्ति कश्चिद्विरोधः।

सिद्धे मन्त्रे ब्रह्मस्वरूपो गुह उपास्य इति । ब्रह्मस्वरूपत्वं च गुहस्य ब्रह्मणो विश्वात्मत्वात् सिद्ध्येत् । अत्रायमपरः संशयः । यदुच्यते गुहस्याधिदैविकं स्वरूपं भक्तानामनुग्राहकं कालेषु तेजोंशेनाविशत् तदर्हानपहतपाप्मनो जीवान् । तत् किं सगुणस्य ब्रह्मणो रूपम् । उताहो कस्यचित्सिद्धपुरुषस्य देवयोनेः ? कोऽनयोर्विशेषः ? पूर्व ईश्वरो विश्वसमष्टिशरीराभिमानी भक्तानुग्रहाय मायया धृतदिव्यशरीरः । उत्तरो जीवकोटिष्वन्यतमो व्यष्टिभूतो धर्मातिशयात्प्राप्तदिव्यशरीरः । अस्त्वीश्वर एव स्कन्द इति चेदनेकेश्वरापत्तिः इतरासां च देवतानां माहाभाग्ये स्कन्दादविशेषात् । अस्तु जीवेष्वन्यतम इति चेत् निकृष्टः प्रसज्येत । अत्रोच्यते। ईश्वरः एव स्कन्दः न जीवकोटिष्वन्यतमः । न तेनानेकेश्वरापत्तिः लोककार्यार्थं सगुणं ब्रह्म मायया यावल्लोकं रूपाणि बिभ्राणो विश्वं चालयति। सामान्यतः सिद्धपुरुषाणामपि मायया बहुरूपधारणसामर्थ्यम् अस्ति चेदीश्वरस्य किमु वक्तव्यम् ? तेष्वीशस्य मायारूपेषु लोककार्यार्थेषु स्कन्दस्याधिदैविकं रूपमन्यतमत्। तादृशानीशस्य मायारूपाधिकारिकाण्युच्यन्ते । नारायण एक एवेश्वरस्याधिदैविकं रूपमिति वैष्णवाः । परमशिव एक एवेति शैवाः । गणपतिरेक एवेति गाणपताः । सवितैक एवेति सौराः । इन्द्र एक एवेति माहेन्द्राः । यह्व एक एवेति क्रैस्तवाः । ("तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः" इत्यादिवैदिकप्रयोगदर्शनादिन्द्रस्यैव नामान्तरं यह्व इति प्रतिभाति।) आह्लाद एक एवेति महम्मदीयाः। (चन्द्रमण्डलान्तरपुरुषस्यैवाह्लाद

इति नामान्तरं स्यात्प्रायः।) सुब्रह्मण्य इति स्कान्दाः। एवं विविध-मतस्थानां कलहे किं सत्यमिति चर्चायां नागमानामेककण्ठमुत्तरं लभ्येत। तत्रास्मदुक्तरीत्यैव सामरस्येन समन्वयः कार्यः ।

अत्रायं निगमो भवति

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥"
एकस्येश्वरस्य बहुनामविकल्पा इत्येकः पक्षोऽस्य मन्त्रस्यार्थविचारे । मायारूपभेदवशान्नामभेदकल्पमित्यपरः पक्षः । उत्तरः पक्ष एव ज्यायान् । तथा हि प्रमाणान्तरसामरस्यं स्यात् । तत्र च तिस्र एव देवता इति नैरुक्तपक्षो ज्यायान् ।

स्कन्दस्य जनयिताऽग्निः कः

सिद्धं सगुणस्य ब्रह्मणो मायारूपेष्वन्यतमद्गुहस्याधिदैविकं रूपम् इति । अथ मन्त्रे वचद्भूरित्यनेन योऽग्निः स्कन्दस्य पितोक्तः स क इत्यत्र विचार्यते ।

पञ्च तेजांसि लोके । सौरं चान्द्रमसं वैद्युतं पार्थिवं शाब्दं चेति । शब्दश्च तेजोमयं द्रव्यमेव न गुणः । चलनक्रियावत्त्वान्नादगुणवत्त्वाच्च । गुणस्य हि क्रियागुणौ न भवतः । शब्दग्राहकयन्त्रे प्रतिष्ठातश्च शब्दो द्रव्यमवगम्यते । शब्दस्य दूरप्रेषके यन्त्रे प्रथमं तेजो दृश्यते । अनन्तरं तदेव शब्दो भवति । इदं च शब्दस्य तेजोमयद्रव्यत्वे लिङ्गम् । अत्र निगमाश्च बहवो भवन्ति । उदाहरणार्थं द्वौ मन्त्रौ प्रदर्श्येते । "इमा

अभिप्रणो नुमो विपामग्रेषु धीतयः । अग्नेः शोचिर्न दिद्युतः ॥" (ऋग्वेदः, ८:६:७) अत्र धीतयोऽग्नेः शोचिरिव दिद्युत इत्युच्यते दिद्युतो नाम ज्योतिष्मत्यः। धीतयो वाण्यः । "तं त्वा मरुत्वती परिभुवद्वाणी सयावरी । नक्षमाणा सह द्युभिः ॥" (ऋग्वेदः, ७:३१:८) अत्र वाणी द्युभिर्नक्षमाणेत्युच्यते । द्यवस्तेजांसि । नक्षमाणा नामयुक्ता ।

इदं च शाब्दं तेजो व्यापकं शब्दब्रह्मापरपर्यायं परमशिवस्याधिभौतिकं स्वरूपम् । तस्य रुद्र इति वैदिकं नाम भवति । रौति इति रुद्र इति यास्कस्य निर्वचनम् । एतदेव रुद्राख्यं शाब्दं तेजो मन्त्रे वचदित्यनेन कथ्यते । आध्यात्मिकस्य वागिन्द्रियस्य शब्दब्रह्मविभूतित्वान्न वागिन्द्रियशब्दब्रह्मणोर्भेदः । कुमारस्याग्निभूत्वमेतया विधया । तत्राग्निः शाब्द एव न पार्थिवः । मन्त्रे स्पष्टं तत्त्वप्रदर्शनायाग्निभुव इत्यनभिधाय वचद्भुव इत्युक्तम् । अग्निशब्दः पार्थिवे विशेषतः प्रयुज्यमानोऽपि तेजःसामान्यवाचकः । तेनाभिधाने सामान्यस्य स्फूर्तिर्भवति । रूढितः पार्थिवस्य वा विशेषस्फूर्तये वचद्भुव इति वचनम् ।

## नमस्कारार्थः

अथ जपे नमस्कारस्य तात्पर्यमुच्यते । तत्रायं संशयः । किं मन्त्रस्यावृत्तिसमये गुहस्याधिदैविवं रूपं किमपि भावयित्वा तस्मै स्वेन क्रियमाणो नमस्कारश्च भावनीयः, उताहो त्वमुत्कृष्टः अहमपकृष्ट इति बुद्धिरेव नमस्कारस्यार्थः ? उभयं चायुक्तम् । उभयत्रापि प्रतिमन्त्रावर्तनं भेदबुद्धिरेवाश्रयणीया भवति । अनृतमल्पविभवं किमपि रूपं च देवतायाः कल्पनीयं स्यात् । निजस्वरूपं चालक्ष्यं स्यात् । अन्योऽस्त्यर्थस्तृतीयः । नमस्कारश्चायं न स्थूलशरीरस्य, अपि तु सूक्ष्मशरीरस्य ।

सूक्ष्मं च शरीरं मनः, तस्य च शीर्षं स्थानम् । तदुक्तं भगवता गुरुणा-

"कीर्त्यते हृदयं पिण्डे यथाऽण्डे भानुमण्डलम् ।
मनः सहस्रारगतं बिम्बं चान्द्रमसं यथा ॥" (रमणगीता, ५:३०)

तच्च मनः हृदयस्थमात्मस्वरूपमन्वेष्टुं अथवा हृदयस्थे निजस्वरूपभूते ज्योतिषि मज्जितुं वा यन्नमति स एव नमस्कारः । उभयत्रापि आत्मस्वरूपे स्कन्ददृष्टिरिति विषयो न विस्मर्तव्यः । एवं च मन्त्रजपः सत्यस्वरूपलक्ष्यः स्यात् । भेदभावनेन च न स्याद्दूषितः । इदं चोपासनद्वयम् "हृदि विश मनसा स्वं चिन्वता मज्जता वा" (रमणगीता, २:२) इति श्लोकपादेन भगवान्महर्षिरुपादिशत् ।

एवं चात्मनः स्वरूपभूते स्कन्दावतारे भगवति गुरौ मनसा विशामि मज्जामि वेति मन्त्रार्थः पर्यवस्यति ।

इति प्रथमः पटलः

## अथ द्वितीयः पटलः

### द्वितीयमन्त्रोद्धारः

अथास्मिन्द्वितीये पटले भगवतस्तान्त्रिकमन्त्रान्तरं व्याख्यायते । तस्यायमुद्धारश्लोकः-

सुखं कृशानुः कीलालं मूर्धन्यश्चानुनासिकः ।
निद्रा वारि च विख्यातो नाममन्त्रो वचद्भुवः ॥

सुखं शवर्णः । कृशानु रेफः । कीलालं जलं वकारः । मूर्धन्योऽनुनासिको णकारः । निद्रा भकारः। वारि वकारः । एतानि षडक्षराणि मिलित्वा "शरवणभव" इति भवन्ति । एतस्यापि मन्त्रस्य षडक्षरत्वेन स्कन्दस्य षण्मुखत्वं प्राग्वद्बोध्यम् ।

**द्वितीयमन्त्रार्थः**

शराणां तृणविशेषाणां वनं शरवणं तस्माद्भवतीति शरवणभवः । अस्त्राग्निरित्यर्थः ।

अत्र न शरोपाधिजः साधारणपार्थिवोऽग्निर्विवक्षितः । तस्य वचद्भूत्वासम्भवात् या रुद्रस्य तेजोमयं वीर्यं शरस्तम्बे निहितं कुमारोऽभवदिति कथा सा किमपि तत्त्वमवलम्ब्य वर्तते । तच्चेदं तत्त्वम् । रुद्रः शब्दमयः तस्य तेजोमयं वीर्यं च सिद्धास्त्रविद्यस्य महापुरुषस्य सिद्धास्त्रमन्त्रप्रयोगादुत्पन्नोऽग्निः । स च शरोपाधिमवलम्ब्य वर्धमानः शत्रून् हिनस्ति ।

विद्मः शरस्य पितरं पर्जन्यं भूरिधायसम् ।
विद्मो ष्वस्य मातरं पृथिवीं भूरिवर्पसम् ॥
ज्योके परि णोन माश्मानं तन्वं कृधि ।
वीरुर्वरीयोऽरातीरप द्वेषांस्या कृधि ॥

(अथर्वणसंहिता, २:१-२)

अनयोर्मन्त्रयोर्वर्ण्यमानः शरस्तृणविशेष एव न वेणुमयो लोहमयो वा बाणः । तस्य भूपर्जन्ययोर्मातापितृत्वेन कथनाल्लिङ्गात् । वेणुरपि

वनस्पतित्वाद्भूपर्जन्ययोः पुत्रो भवतुमर्हतीति चेत्, तत्रैव वर्गे चतुर्थो मन्त्रस्तं सन्देहं निवारयति ।

यथा द्यां च पृथिवीं चान्तस्तिष्ठति तेजनम् ।
एवारोगं चास्रावं चान्तस्तिष्ठतु मुञ्ज इत् ॥

अत्र मुञ्जशब्देन प्रागुक्तं शरं परामृशति । मुञ्जश्च तृणविशेष एव न वेणुः । अतीव लघुतरस्तृणः शत्रून् हन्तुमस्त्रसम्बन्धं विना कथं शक्तः स्यात्? अस्त्रं च सिद्धमन्त्रमयशब्दोत्पन्नादग्नेर्नातिरिच्यते ।

इषीकां जरतीमिष्ट्वा तिल्पिञ्जं दण्डनं नडम्।
तमिन्द्र इध्मं कृत्वा यमस्याग्निं निरादधौ ॥
(अथर्वणसंहिता, २:१-२)

इषीकातिल्पिञ्जनडास्तृणविशेषाः। दण्डनं वेणुमयं स्यात्। तेष्विषीका शरतृणस्य पर्यायः । अत्रेन्द्रशब्देन जीव एवोच्येते । 'रूपं रूपं प्रतिरूपो बभूव' इति निगमात् । स चास्त्रवित् सिद्धपुरुषः । स चेषीकाद्यन्यतमम् इन्धनं कृत्वा यमस्य कालस्याग्निं निरादधौ नितरामासमन्तात् पुष्टवान् । आकाशे स्थितमेव विजृम्भयामासेत्यर्थः । कालश्च शब्दात् नातिरिच्यते। आकाशे सूक्ष्मं स्वरन्नेव शब्दः सर्वपाचको भवति । अत एवोक्तमस्माभिरिन्द्रगीते-

सद्व्यापकशक्तिं प्राणं कथयन्ति ।
व्यक्तेतरशब्दं कालं गणयन्ति ॥

तस्य च कालस्य यमाख्यत्वं रुद्राख्यत्वं च तत्रैवोक्तम्-

रुद्रं विदुरेके नेतर्बहुलीलम् ।
प्राहुर्यममन्ये कायं तव कालम् ॥

इदमुक्तं भवति । आकाशे यः शब्दब्रह्ममयः कालमयश्च रुद्रो व्यापकोऽस्ति । तस्य तेजो मन्त्राग्निप्रेरितं शरोपाधिकमस्त्रं नामाग्नि-र्भवति । स एव सेनानीर्भगवान् । संहर्ता दानवानाम् । कर्ता देव-कार्यस्य । इषीकाशब्दादेव इषुशब्दोत्पत्तिः । अस्त्रं च प्राञ्च इष्वस्त्रमिति व्यवहरन्ति ।

इष्वस्त्रमेषां देवत्वं परित्राणं सतामिव ।
भयं वै मानुषो भावः परीवादोऽसतामिव ॥

एषां क्षत्रियाणमिति परामर्शः । अपि चास्त्रस्येषीकास्त्रमित्येव मुख्यं नामधेयम् । पश्यत रामायणं भारतं च । शरशब्दोऽस्त्रवाचकोऽपि लक्षणयाऽनन्तरं बाणवाचकोऽभूत् । शरशब्द उपलक्षकोऽन्येषाम् अस्त्रेन्धनानाम् । प्राधान्याच्छरवणभवेत्युक्तिः ।

## स्कन्दस्य गुरुत्वोपपत्तिः

नन्वेवं चेत्स्कन्दः सङ्ग्रामदेव एव स्यात् । न कारणगुरुरिति चेत् । न सङ्ग्रामदेवत्वं कारणगुरुत्वप्रतिबन्धकम् । प्रत्युतोपकारकम् । यो बहिरस्त्राग्निर्भूत्वा शत्रून्नाशयति । स एवान्तर्विज्ञानज्योतिर्भूत्वा पाशदहनेन तमसः पारं दर्शयति । शाब्दं ज्योतिरेव ह्यन्तर्विज्ञानम् । एतेनैव ज्योतिषा दिव्यचक्षुष्मान् भवति ब्राह्मणः । एतेनैव ज्योतिषा

दिव्यास्त्रवान्भवति क्षत्रियः । इदमेव ज्योतिर्ब्राह्मणस्य ब्रह्मत्वम् । इदमेव ज्योतिः क्षत्रियस्य राजत्वम् ।

इति द्वितीयः पटलः

## अथ तृतीयः पटलः

### गुहस्य वैदिको मन्त्रः

व्याख्यातौ गुरोस्तान्त्रिकौ मन्त्रौ । वेदेऽप्यस्य मन्त्राः दृश्यन्ते । तेष्वयं स्पष्टो भगवतो मन्त्रः ।

**वृषा जजान वृषणं तमु चिन्नारी नर्यं ससूव ।**
**प्रयः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥**
(ऋग्वेदः, ७. २०. ५)

वसिष्ठ ऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः । वृषा शब्दब्रह्मरूपो रुद्रः वर्षति विज्ञानमिति व्युत्पत्तेस्तस्य वृषत्वम् । वृषणं ज्वालानां वर्षकं देवं रणाय युद्धाय युद्धं कर्तुं इत्यर्थः । जजान उत्पादितवान् । तमु तं देवम् । "उ" इत्यव्ययं स्वसंश्लिष्टस्य नाम्नः औन्नत्यद्योतकम् । नारी चित् देवी शक्तिः । चिदित्यनिर्वाच्यताद्योतकमव्ययम् । नराणामियं नारीति व्युत्पत्तेर्मनुष्येषु गूढा कुण्डलिनी शक्तिरेवात्र नारीपदेनोच्यते । ससूव सुषुवे । तं कीदृशं नर्यं नृषु नेतृषु सिद्धपुरुषेषु भवम्, अयं

भावः । सिद्धानां नृणां शरीरे कुण्डलिनी शक्तिः शब्दब्रह्मणः सकाशादस्त्राग्निरूपमिन्द्रं युद्धाय जनयति ।

यो जातो देवः सेनानीः सेनापतिर्भवति देवानाम् । अध नृभ्यो नेतृभ्यः अस्ति सहायभूतः । इनः स्वामी सत्वा सद्वान् सत्यशक्तिमानित्यर्थः । गवेषणः अन्वेष्टा स प्रसिद्धो देवः धृष्णु शत्रूणां धर्षको भवति ।

नन्वत्रेन्द्रः प्रकृतः न सुब्रह्मण्य इति चेत्, नैतत्प्रतिबन्धकम् । इन्द्रनाम साधारणमस्त्राग्नेः । कुमारनाम विशिष्टम् । कथं साधारणम् ? कथं विशिष्टम् ? तेज सूर्यस्य साधारणं नाम । सूर्य इति विशिष्टम् । बलवतां माहाभाग्यवतां भावानामिन्द्र इति साधारणं नाम । विशिष्टानि नामानि तेषां पृथक्पृथग्भवन्ति यथावस्तुतत्त्वम् । सामान्यतो बलस्येन्द्रो देव इति निगमेषु ब्राह्मणेषु च प्रसिद्धम् । अस्त्राग्निश्च सुतरां बलवान् भावः । तस्मात्तस्येन्द्रनामोपपन्नं परमैश्वर्ययोगात् । अयं चास्त्राग्निः सेनानीपदलिङ्गात्कुमारः प्रोच्यते विशेषणः । अत्र सर्वात्रान्यत्कारणमुत्तरत्र निवेदयिष्यामः ।

इतिहासोपपत्तिः

बलवद्भिर्दानवैर्व्याकुलिते लोके देवैः प्रार्थितो ब्रह्मा, रुद्राद्गौर्यामुत्पन्नः कुमारः तान् संहरतीति किलोक्तवान् । अनन्तरं कामो देवैः प्रेषितो रुद्रं पुत्रसर्गाभिमुखं कर्तुम् । स च दग्धः । ततो गौरी तपस्तेपे । तपसा सन्तुष्टो गौरीं रुद्रः परिणीय तत्सङ्गाद्वीर्यमूर्ध्वमार्गेण विससर्ज । तदग्नावप्सु शरस्तम्बे चेति क्रमेण स्थानेषु कृतास्पदमन्ततः कुमारः किलाभवत् । तस्यैवं समन्वयः मायाबलाल्लोकं बाधमानानसुरजातीयाञ्जेतुं मनुष्य-

साधनानि सर्वाणि विफलान्यभवन् । असुरजातीयाश्चात्र मनुष्यविशेषा एव ग्राह्याः । तेन मनुष्यलोके असुराणामेव शज्यं शाश्वतं प्रसक्तम् । देवाश्चासुरक्षपणायास्त्रविद्यामेतामृषिभ्यो दत्तवन्तः । असुराणां नाशेन पुनर्देवभक्तानां राज्यं भूलोके स्थापितमासीत् । इयं कथा परोक्षरीत्ये-तिहासेनोच्यते । तपस्तपति जीवे प्रथमं तपोमाहात्म्येन कामो दग्धो भवति । तपश्च शब्दब्रह्मतेजोनिष्ठेति न विस्मर्तव्यो विषयः । एवं स्वरूपतो दग्धोऽपि कामो बीजरूपेणावस्थितस्तपसे गौरीं नाम कुण्डलिनी-शक्तिं प्रेरयति । कुण्डलिन्या गौरीत्वं च – "पीता भास्वत्यणूपमा" इत्युपनिषदोक्तम् । तन्त्रेषु गौर्याः कुण्डलिनीत्वं सुतरां प्रसिद्धम् । तस्यास्तपसा शब्दब्रह्माविर्भवति । परवाक्स्वरूपमनुभवक्षमं भवतीति भावः । यदा शब्दब्रह्मणा मिलिता कुण्डलिनी भूयस्तपति तदा शाब्दं तेज अविर्भावक्षमं भवेत् । तच्च सजातीयमान्तरिक्षं शब्दं तेजः प्रेरयदस्त्रं भवति । मूलाग्निशीर्षसुधयोः शब्दब्रह्मवीर्यस्य संस्कार एवाग्निगङ्गयोः कतिपयकालस्थितिः । शरस्तम्बे प्रादुर्भावश्च द्वितीयपटले वर्णितः । एते च दानवाः सार्वकालिका एव ग्राह्याः । न नियतकालजाः इतिहासस्य सार्वकालिकतत्त्वाभिप्रायत्वात् ।

### कस्तारकासुरः

ननु तारकवधार्थं स्कन्दस्योत्पत्तिः । स च चारित्रिकः पुरुष इति चेन्न । तारकासुरोऽपि तात्त्विक एव । तरति सर्वान्मनुष्यानिति तारको मृत्युः । उभयथा मृत्युं जयति गुहः । प्रमादरूपं संसारहेतुं ज्ञानप्रदत्वेन । शत्रुभिश्चिकीर्षितमस्त्रबलात् । अस्यैव तारकस्य पुत्रास्त्रिपुरासुरा इति पुराणेषु कथ्यते । त्रिपुरासुराश्च त्रिभ्यः पाशेभ्यो नातिरिच्यन्ते । तेषां च पिता प्रमादः । प्रमादश्चात्मनश्च्युतिर्देहपतनम् । देहात्मभाव इति यावत् ।

सेनानीः

ननु मन्त्रे यत्सेनानीपदमस्ति तद्देवसेनानीरिति भावं कथं समर्पयेदिति चेत् । देवराज इन्द्रो देवसेनानीरेव प्रकरणाद्भवति । स्पष्टं चेदमन्यत्र मन्त्रे ।

> इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
> देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥
> (ऋग्वेदः, १०. १०३. ८)

अस्त्रप्रकरणस्थोऽयं मन्त्रः । अपि च मन्त्रे इति पदमेवानन्तरं स्वामीति पदं व्यवहरणेऽभूत् ।

अग्नित्वेनापि स्कन्द उच्यते निगमेषु ।

> वव्राजासीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः ।
> सना अत्र युवतयः स योनीरेकं गर्भं दधिरे सप्तवाणीः ॥
> (ऋग्वेदः, )

सप्त वाणीः सप्त छन्दांसि । मन्त्रभवश्चाग्निरस्त्राग्नेर्नातिरिच्यते । आग्नेये सूक्ते दाहकत्वसामान्यादेतस्य वचनम् । न पार्थिवत्वोद्देशेन ।

व्यक्तिविचारः

अथ व्यक्तित्वधारकं सगुणस्य ब्रह्मणो मायारूपं यत्सुब्रह्मण्याख्यं तद्वक्तव्यम् । इन्द्र एव गुहस्याधिदैविकं रूपमिति वदामः । शाब्दाग्ने-

र्मध्यमस्थानत्वात् । इन्द्रश्चान्तरिक्षलोकपतिः । यदारण्यके इन्द्रं प्रकृत्य सुब्रह्मण्यों सुब्रह्मण्यों इत्युपसंहरति तदेकमत्र लिङ्गम् । इन्द्रस्य सङ्ग्रामदेवतात्वेन वैदिकी प्रसिद्धिश्चात्र लिङ्गं भवति ।

शिवस्य किमाधिदैविकं रूपम् ? इन्द्र एव । पितापुत्रयोरभेदापत्तिरिति चेत् नैष दोषः । गूढशब्दब्रह्मव्यक्तशाब्दाग्न्यपेक्षया भेदनिर्देशः पितापुत्रसम्बन्धोक्तिश्च । एतेन शिवसुब्रह्मण्यो व्याख्यातः ।

गणपतेः किमाधिदैविकं रूपम्? इन्द्र एव भ्रात्रोरभेदापत्तिरिति चेत् नैष दोषः । सिद्धमन्त्रतत्प्रेरितास्त्राग्न्यपेक्षया भेदनिर्देशो भ्रातृत्वोक्तिश्च । मन्त्रो हि प्रथमं शब्दब्रह्मणो जायते । अनन्तरमस्त्राग्निः । गणपतिना बृहस्पतिब्रह्मणस्पती व्यख्यातौ ।

विद्युतः किमाधिदैविकं रूपम् ? इन्द्र एव। अत्रास्ति कश्चिद्विशेषः । विद्युतोऽपि विशिष्टं देवतानामैन्द्रः ।

अन्ये इन्द्रदेवताका आन्तरिक्षा माहाभाग्यवन्तो भावा अत्र विस्तरभयान्नोच्यन्ते ।

अवतारभेदोपपत्तिः

इन्द्रो भगवान्येन तेजोंशेनावतरति तस्य विशिष्टं नाम तस्यावतारस्य भवति । वैद्युतांशावतारः इन्द्रस्य स्वपदेन शब्दब्रह्मांशावतारो रुद्रपदेन मन्त्रशक्त्यवतारो गणपतिपदेन शाब्दतेजोंशावतारः स्कन्दपदेन चोच्यन्ते । तत्र गणपतिसुब्रह्मण्यौ भ्रातरौ परस्परसापेक्षौ भवतः ।

एवं सङ्ग्रहेण गुरोस्त्रयाणां महामन्त्राणामर्थः उक्तः स्कन्दतत्त्वविस्तरस्तु देवतामीमांसायां प्रतन्येत ।

इति तृतीयः पटलः

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोर्गणपतेः कृतिर्गुरुमन्त्रभाष्यं समाप्तम् ।

**अत्रायमुसंहारश्लोकः**

**मुनिना श्रीमुखे सिंहे दिने सूर्येन्दुसङ्गमे ।**
**सूर्योपरागसमये भाष्यमेतदुदीरितम् ॥**

**भाष्यानुबन्धः**

१. शोभनाद्ब्रह्मणः शब्दब्रह्मणो जायत इति सुब्रह्मण्यः ।

२. एतेन ब्रह्मगर्भनाम व्याख्यातम् । 'सुब्रह्मण्यो ब्रह्मगर्भः स्वामी शरवणोद्भवः' इत्यमरः ।

३. कुमारः नित्यार्भकः उत्पद्य कार्यं पुनस्तिरोहितो भवति । पुनः कार्यकाले प्रादुर्भवति । अतो नित्यार्थक उच्यते । 'अर्भको न कुमारकः' इति निगमोऽत्र भवति (ऐन्द्रे सूक्ते)। सद्यो जज्ञानो निरिणाति शत्रूनिति च ।

४. एतेन सनत्कुमारनाम व्याख्यातम् । सनत् सदा कुमार इति तत्र व्युत्पत्तिः ।

५. सनत्सुजातोऽप्ययमेव । सदा सुजात इति तत्र व्युत्पत्तिः ।

६. समानो नन्दनः सनन्दनः । गणपतिना सह रुद्रस्य ।

७. सनकः शाश्वतः ।

एवमेतानि चत्वारि नामान्येकस्यैवोक्तानि । प्रायो विभूतिभेदात् चतुष्टयोक्तिरिति प्रतिभाति ।

## अग्नेः चतस्रो विभूतयः

पार्थिवो वैद्युतो यज्ञो जीवश्चेत्यग्निश्चतुर्विभूतिः । "इभ्यान्नराजा वनान्यत्ति" इत्यादौ निगमेषु पार्थिवः स्तूयते । "अधुनोत्काष्ठा अवशम्बरम्भेत्" इत्यादौ वैद्युतः । "यज्ञस्य देवमृत्विजम्" इति कण्ठोक्त्याऽग्नेर्यज्ञ-देवतात्वकथनम् । "पतिर्ह्यध्वराणाम्" इत्यादौ तदुपबृंहितम् । "य ईं चिकेत गुहा भवन्त"मित्यादौ जीवत्वेनाग्निः कथितः । वैद्युताग्नेरेव वाग्रूपत्वाद्वाग्रूपाग्निर्न पृथग्वक्तव्यः ।

### जीवस्य द्वे दशे

तत्र जीवस्याग्नेर्द्वे दशे भवतः । एका बद्धा दशा । अन्या मुक्ता दशा । "त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश" इत्यादौ बद्धो वर्णितः । "पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शम्भू । अत्योनाज्मंत्सर्गप्रतक्तः सिन्धुर्न क्षोदः क ईं वराते ।" मुक्तस्य वर्चोतिशयं पुष्टिर्न रण्वेति व्यापकभावेन विशालानुभवं क्षितिर्न पृथ्वीति । सर्वफलसमृद्धत्वं गिरिर्न भुज्मेति, बहुलानन्दत्वं क्षोदो न शम्भ्विति । निरावरणसर्वगामिशक्तित्वमुत्तराभ्यां चोपमानाभ्यां दर्शयति । एवं जातीयकान्याग्नेयेषु सूक्तेषु मुक्तस्य वर्णनानि । प्रायो मुक्तस्य वर्णने पूर्वे महर्षयः शरीरेऽग्नेर्नूतनं जन्म वर्णयन्ति । मुक्तत्वं देहिनो द्वितीयं जन्मेति तेषां सिद्धान्तः । एतेन "ब्रह्मज्ञानी तु ब्राह्मणः"। "द्विजन्मा

ब्राह्मणः ।" इति लक्षणयोरन्योऽन्यविरोधो नास्तीत्यवगम्यते । ब्रह्मज्ञानद्वितीयजन्मनोरेकार्थत्वात् । एतेन श्रीमहर्षेर्ब्राह्मणस्वामित्वं व्याख्यातम् ।

जीवस्याग्नेर्नूतनजन्माभिधायकानि वचनानि - "वर्धन्तीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातम्" इति पराशरस्य दर्शनम् । आपो महान्प्राणः । ऋतस्य योनिर्गर्भस्तु हृदयम् । अन्तरात्मनः सूत्रात्मना सायुज्यमेवात्र वर्धनम् । "अवर्धयंत्सुभगं सप्तयह्वीः श्वेतं जज्ञानमरुषं महित्वा । शिशुं न जातमभ्यारुरश्व देवासो अग्निं जनिमन्वपुष्यन् ।" इति विश्वामित्रस्य । सप्तयह्वीः सप्तमातरः । वर्धनं चात्र तेजः प्रवाह-वर्षणेन । "क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरुशोभमानम् । नता अगृभ्रन्न जनिष्टहिषः पलिक्नीरिव द्युवतयो भवन्ति।" इत्यात्रेयस्य वृशस्य । "विश्वस्य केतुर्भुवनस्य गर्भ आरोदसी अवृणाज्जायमानः।" इति वत्सप्रेः । एवं जातीयकानि बहूनि सन्ति वचनानि ।

**जीवरूपोऽग्निरेवकुमारः**

जीवरूपोऽग्निरेव कुमार इति पश्यति कपाली वयं च तं समर्थयामः । अस्याग्नेर्नूतनं जन्मैव कुमारजन्मत्वेन वर्ण्यते । वेदेऽस्य सप्तमातरः "एकं गर्भं दधिरे सप्तवाणीः।" इति विश्वामित्रस्य दर्शनम् । पुराणेषु षण्मातर इति विशेषः । एकैकस्य शारीरस्य धातोरेकैका माताऽभि-मानीनी । यथा विशुद्धचक्रनिलयेत्यादिषु ललितानामसु वर्णितम् । तत्र षण्मातरः । षडाधारनिलयाः । सप्तमी समस्तचक्रनिलया । क्रमात्सप्तत्वगादिसप्तधातुस्थाः धातुसङ्ख्यानुसारेण सप्तमातरः । आधारसङ्ख्यानुसारेण षण्मातर इति विशेषः। एताश्च मातरः

कृत्तिकाः । कृत्तिकाशब्दश्चर्मपर्यायः । त्वचः साक्षादितरेषां धातूनां लक्षणया च वाचकः सम्भवति । एकैकस्योत्तरोत्तरस्य धातोः पूर्वः पूर्वो धातुश्चर्मवद्धि भवति । सर्वोत्तरस्य शुक्रस्य धातोः । सर्वधा-त्ववधित्वान्न कृत्तिकात्वमुक्तम् । कार्तिकेय इत्यस्य शारीरक इत्यर्थः इत्युक्तं भवति । समुदायेन शरीरात्मिका पृथिव्येकास्य माता । तच्च दर्शितमृषिणा वृशेन । "कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।" मातात्र शरीरात्मिका पृथिवी । गुहा च दहरस्थानम् । पित्रे चादानमनुक्क्रमणम् । पिता हि द्युलोकः । "द्यौर्मे पिता जनिता ।" इत्यादि निर्देशात् । कुमारं मातेति मन्त्रे वैश्वानरमग्निं कुमारशब्देन यदाह तदत्र लक्षीकर्तव्यमस्माभिः । स एवर्षिरभ्यस्यति च भूयः शब्दं तं वैश्वानरपरत्वेन । "कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान पूर्वीर्हि गर्भः शरदो ववर्धापश्यं जातं यदसूत माता ।" अन्यत्रापि "कः कुमारमजनयद्रथं को निरवर्तयत् ।" इति यामायनस्यान्तर्यामिपरे सूक्ते । अस्य गुहावासित्वादेव गुह इति नाम । एका गुहैव स्थानत्वेन स्थानित्वेन चाभिधीयते । "दहर उत्तरेभ्यः" इति बादरायणसूत्रे चैष एव न्याय आश्रितः । दहरस्थान ईश्वरो दहरनामेति । हृदये वर्तमान आत्मा हृदयमिति कथ्यत इति श्रीमहर्षिश्च सद्दर्शनेऽभिदधाति । दहरश्च हृदयान्नातिरिच्यते । अस्य गुहावासित्वे बहूनि वचनानि सन्ति "गुहा बिभर्ति" इति प्रागुदाहृतम् । "य ईं चिकेत गुहा भवन्तम् ।" "पश्वा न तायुं गुहा चतन्तम्" इत्यादीनिचात्रोदाहर्तव्यानि । "दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।" तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् । इति नारायणे दहरपुण्डरीक-मध्ये यद्दहरं तत्र परमात्मेत्युच्यते । इदं च मन्त्रकाण्डेऽप्यस्ति पाराशर्ये दर्शने । "प्रियापदानि पश्वो निपाहि विश्वायुरग्ने गुहा गुहङ्गाः ।" द्वितीयोच्चारितो गुह एव अग्नेः स्थानत्वे अग्नित्वेन चेष्यमाणः । एवं

कुमारशब्द इव गुहशब्दोऽपि वैदिक इत्येवावगतम् । इदमेव गुहास्थानं हृदिति स्पष्टमुक्तं वामदेवस्य ऋषेर्दर्शने । "धामन्ते विश्वं भुवनमधि-श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।" अग्नेरेषा स्तुतिः । धामन् धामनीति वैदिकभाषा । ते धामनि अन्तः समुद्रे अन्तराकाशे समुद्रशब्द आकाशपर्यायो निगमे । हृदि हृदये अन्तरायुषि अन्तर्वर्तिनि सर्वप्राणभूते विश्वं भुवनमधिश्रितम् । अयं च सिद्धान्तः श्रीमहर्षिणा रमणेनासकृद् अभ्यस्तः । एवं कुमारापरपर्यायस्य वैश्वानरस्य हृदयान्तर्वर्तित्वं समर्थितम् । श्रीमहर्षिरपि रमणः क इति कस्यचित्प्रश्नस्योत्तरमेवं द्राविडपद्येनाह ॥

(अरीयादि यितर जीवर दगवारिज गुगयिल्
अरिवाय् रमि परमात्तुमन् अरुणाचलरमणन्)

अत्र हृदयगुहावर्ती वैश्वानर एव रमण इत्युक्तम् । रमणश्च कुमारान्नातिरिच्यते । मायापुत्रशूरादिसंहारप्रभृतिक्रियाः सर्वा अपि वैश्वानरपरत्वेन व्याख्यातुं शक्याः । विस्तरभयान्न लिख्यते ।

वैश्वानर एव सनत्कुमारः । सनच्छब्दो नित्यपर्यायः । आत्मैव हि तमसः पारं परं दर्शयत्यात्मनः । अत्र दर्शयितात्मा समष्टिजीवः । पारङ्गन्ता परिच्छिन्नाभिमान्यहङ्कर्ता ।

**वैद्युतोऽग्निरेव गणपतिः**

वैद्युतोऽग्निर्यथाग्नेर्विभूतिषु चतसृषु तथेन्द्रस्यापि चतसृषु विभूतिषु । सोऽयं सामान्यत इन्द्र उच्यते । विशेषतो ब्रह्मणस्पतिः । कार्यभेदादिदं

नामद्वयम् । मरुतो विनयन्निन्द्र उच्यते । वाचो विनयन् ब्रह्मणस्पतिः । ब्रह्मणस्पतेरेव बृहस्पतिरिति नामान्तरमिति गणानां त्वेतिसूत्रे स्पष्टम् । गणपतिशब्द इन्द्रसूक्तेषु ब्रह्मणस्पतिसूक्तेषु च दृश्यते । "निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम्" इत्यैन्द्रे । "गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्।" इति ब्राह्मणस्पत्ये । एकत्र कवीनां विप्रतमः सः अन्यत्र कवीनां कविः । उभयत्रापि ज्येष्ठराजशब्दः । "ज्येष्ठराजं भरे कृत्नुम्" इत्यैन्द्रे । ज्येष्ठराजं ब्रह्मणा ब्रह्मणस्पत इति ब्राह्मणस्पत्ये । अग्निस्तु यविष्ठ उच्यते निगमेषु । इन्द्राग्नी च भ्रातरावुच्येते । एतेन गणपतिकुमारयोर्ज्येष्ठकनिष्ठभ्रातृत्वं व्याख्यातम् । गणपतिरित्यत्र गणशब्दो मरुद्वाची । मरुतां ज्येष्ठः पतिश्च गणपतिः । "इन्द्र ज्येष्ठो मरुद्गणाः । भ्रातरो मरुतस्तव" इत्यादि निगमा अत्र प्रमाणम् । मरुतश्च रुद्रपुत्राः । "तदिद्रुद्रस्य चेतति यह्वम् ।" इति नारदस्य दर्शने इन्द्रोऽपि साक्षात् रुद्रपुत्रत्वेन कथितः । एतेन गणपतेः रुद्रपुत्रत्वं व्याख्यातम् । रुद्रश्च सूत्रात्मा । स्कन्दस्य रुद्रपुत्रत्वं मरुदन्तर्वर्तित्वात् । रौद्रं तेज एव शरीरमनुप्रविष्टं गुहाख्यमभवदित्यस्य रुद्रपुत्रत्वम् । गणपतेर्हस्तिमुखत्वं च कश्चिदृषिरिन्द्रं हस्तिमुखं दृष्ट्वा तुष्टावेत्यन्यैरपि तथा गृहीतत्वात् । "आतून इन्द्रक्षुमन्तं चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन ।" इति काण्वस्य कुसीदिनो दर्शनम् । अत्रेन्द्रो महाहस्तित्वेन वर्णितः । इन्द्रस्य मायारूपेष्विदमेकम् । न पूर्णो हस्ती दक्षिणेनेत्युक्तत्वात् । मनुष्यस्यैव हि दक्षिणहस्तः । अतो हस्तिमुखो नरशरीर इन्द्रो दृष्टः कुसीदिनेत्युक्तं भवति ।

एवं तत्त्वतो वैश्वानरवैद्युतौ कुमारगणपती । अग्निरिन्द्रश्च वैदिकदेवतानामभ्याम् । गणपतेर्ब्रह्मणस्पतिरिति नामान्तरमप्यस्ति क्रियाभेदात् । बृहस्पतीन्द्रभेदनिर्देशास्तु इन्द्रस्य विभूत्यन्तरापेक्षया वैद्युतस्य

भिन्नत्वात् । अभेदनिर्देशाश्च विद्यन्ते । नौधसे कार्ष्णे च दर्शने इन्द्र एव बृहस्पतिरित्युच्यते । बृहस्पतेरिन्द्रस्य च वलभेदनाख्यमङ्गिरो गवानयनाख्यं च कर्मणी तुल्यं वर्ण्येते । अत्राभेदनिर्देशो वैद्युतस्यैव बृहस्पतित्वेनेन्द्रत्वेन चोद्दिष्टत्वात् । कण्वस्य ब्राह्मणस्पत्ये सूक्ते ब्रह्मणस्पतिरिन्द्रशब्देन वज्रिशब्देन च विशेष्यते । एवं गार्त्समदे गोत्रभित्त्वं ब्रह्मणस्पतेरुच्यते । तथा बृहस्पतेरागस्त्ये दर्शने ।




Bhagavan Ramana Maharshi and Ganapati Muni
by Madam Jane Adams

# दैवरातदर्शनम्

असौ वा इति सप्तर्चं आनुष्टुभं सावित्रं सूक्तं प्रथमम्

**असौ वै सहसा तपन्परीतः प्रतितिष्ठति ।**
**विश्वस्य सवितर्यस्मिन्नमुष्मिन्निदमाजगत् ॥ १ ॥**

असौ वै सविता तपन् सहसा बलेन परीतो व्याप्तः; विश्वस्य सवितरि प्रसवितरि अस्मिन् जीवरूपे अमुष्मिन् ईश्वरे जगदिदमासमन्तात् प्रतितिष्ठति; यदमुनोपक्रम्योपसंहरति यच्चेममुष्यविशेषणं करोति तत् ऋषिर्ज्ञापयति जीवमीश्वरादनन्यं तादात्म्यात्; पश्यति चेश्वरस्येदं जगत् न जीवस्येति ।

**नमस्ते देव सवितर्नमस्ते विश्वचक्षुषे ।**
**नमो विश्वस्य रोचिषे नमस्तेऽस्तु विश्वायुषे ॥ २ ॥**

देव सवितस्ते नमः । विश्वचक्षुषे विश्वस्य नेत्राय ते नमः । विश्वस्य रोचिषे ज्योतिषे नमः । विश्वायुषे विश्वस्य प्राणाय ते नमोऽस्त्विति । "मनोमयः प्राणशरीरो भारूपः" इति ब्राह्मणं चात्र भवति । मन्त्रे चक्षुः ब्राह्मणे मनश्च न करणविशेषाभिप्राये; अपि तु साक्षिसामान्यपरे; विश्वप्राणभूतस्य व्यापकज्योतिषोऽनन्तरभूतः साक्षी परमात्मेत्युक्तं भवति ।

दधामि सत्य सवितर्धिया तव व्रतं गिरा ।
त्रीणि तेऽमुष्य पदानि यत्प्रथमानि ज्योतींषि ॥ ३॥

सत्य सवितस्तव व्रतं कर्म धिया गिरा च दधामि धारयामि स्तौमीति यावत् ; तदिदं स्तोत्रं भवति; अमुष्य ते त्रीणि पदानि नामानि यत् प्रथमान्याद्यानि ज्योतींषि वक्ष्यमाणानीति ।

अग्निः पृथिव्यां ज्वलति स्वरतीन्द्रस्त्वन्तरिक्षे ।
मतेर्विश्वस्य जनिता सूर्यः प्ररोचते दिवि॥ ४॥

पृथिव्यामग्निर्ज्वलति; अन्तरिक्षे त्विन्द्रः स्वरति शब्दायतेऽशनिना, विश्वस्य सम्बन्धिनो मतेर्जनिता जनयिता सूर्यो दिवि प्ररोचते । कर्मप्रविभक्तान्येतानि त्रीणि नामानि भवन्तीति ।

आत्मानं यं ते बिभ्रति गर्भमात्मनि पूरुषाः ।
अमृतं तदु सुवीर्यं ज्योतिर्विश्वस्य दर्शयत् ॥ ५॥

ते पूरुषाः अग्नीन्द्रसूर्याः गर्भमन्तर्गतं यमात्मानं बिभ्रति तद्विधेय-प्राधान्यान्नपुंसकममृतं नाशरहितं सुवीर्यं दर्शयत् सर्वावभासकं विश्वस्य सम्बन्धिज्योतिः यद्वयं सवितेति स्तुम इति ।

यद्वै पृथिव्यामाग्नेयमैन्द्रं यद्वा अन्तरिक्षे ।
दिवि ज्योतिर्यदादित्यं वर्धयन्तु मयि तेजः ॥ ६॥

पृथिव्यां यदाग्नेयं वै, अन्तरिक्षे यदैन्द्रं वै, दिवि यदादित्यं सूर्य-

सम्बन्धिज्योतिः, तानि तेजो मयि वर्धयन्त्विति ।

**तत्ते सवितस्तुरीयं पदं दिव्यं धिया सुगम् ।**
**परं पश्यामि दर्शतं ज्योतिर्विश्वस्य दर्शयत् ॥ ७॥**

सवितस्ते तत्तुरीयं दर्शतं दर्शनीयं परं धिया सुगं प्राप्यं दिव्यं दर्शयत् विश्वस्य ज्योतिस्तद्रूपं पदं पश्यामि । अत्रागात्र्यास्त्रीणि पदानि सवितुस्त्रीणि पदानि भवन्ति । तान्येतान्युच्चारणीयानि, सर्वान्तर एवात्मा चतुर्थं पदं दर्शनीयमेव नोच्चारणीयमिति ।

**अग्ने तवेति तचुष्कं त्रैष्टुभम् ।**

**तृतीया जगती आग्नेयं सूक्तम् द्वितीयम् ।**

**अग्ने तवेमे वियतीह भासो यन्मे प्राणाश्चक्षुषी आविशन्तः ।**
**त्वं मे देववागसि विश्वरूपा वाचं देवीं मनसा प्रब्रवीषि ॥ १॥**

चक्षुषी आविशन्तो मे प्राणा इति यत् त इमे (प्राणाः) हे अग्ने तवेह वियत्यन्तरिक्षे विद्यामानाः भासः भाभ्यो नातिरिच्यन्त इति यावत् । हे देवा त्वं मे विश्वरूपा विश्ववाङमयवचनसामर्थ्याद्विश्वात्मिका वागसि । "तेजोमयी वाक्" इति ब्राह्मणमत्र भवति । मनसा करणेन वाचं देवीं सूक्ष्मां सङ्कल्परूपां प्रब्रवीषि त्वमेव; अन्तरात्मत्वात्; ज्ञानेन्द्रियेषु चक्षुस्ते विभूतिः; कर्मेन्द्रियेषु वाक्; वस्तुतस्त्वमन्तरात्मा मनःकरणक इति ।

**त्वं मे माता पृथिवी द्यौरुतासि त्वं मे पिता सविता सत्यधर्मा ।**
**त्वं मे धाता प्रणेता वनस्पतिस्त्वं मे धेनूनां परितोऽसि पासि ॥ २॥**

त्वं मे माता पृथिवी, उत द्यौरसि, त्वं मे पिता सत्यधर्मा अप्रतिहतनिसर्गः सविता, त्वं मे धाता कर्ता पाकप्रभावात् कालः, प्रणेता प्रेरकः, वनस्पतिरोषधिभूतः, त्वं मे धेनूनां वाचां नाथ इति शेषः । परितोऽसि सर्वव्यापकोऽसि, पासि रक्षसि च विश्वमिति शेषः । विश्वरूपस्तुतिरेषा भवतीति ।

**त्वं मे पृथिव्यामविता गृहपतिस्त्वं मे वाचो जनिता ब्रह्मणस्पतिः ।**
**त्वं मे प्राणस्त्वं पवित्रो दिवस्पतिर्वैश्वानरस्त्वमिह तिष्ठसि लोके ॥ ३॥**

त्वं मे पृथिव्यामविता रक्षकः, गृहपतिराहवनीयादिरूपत्वात् ; त्वं मे वाचो जनिता जनयिता ब्रह्मणस्पतिः प्रणवरूपत्वात् ; त्वं मे प्राणाः सर्वे मुख्यप्राणरूपत्वात् मध्यमो ह्यग्निर्मुख्यप्राणरूपः पवित्रो दिवस्पतिः सूर्यश्चासि; इह लोके त्वं वैश्वानरो नाम तिष्ठसि, एतया लोकत्रय-वास्यग्निरभिष्टुत इति ।

**अन्तर्हितो वा अमृतो मर्त्येषु यः साकं प्राणैः पशुषु विश्वेषु ।**
**अस्मिन्वैश्वानरे प्रणिदधाति सविता ज्योतिर्विश्वस्य दर्शयत् ॥ ४॥**

अमृतो नाशरहितो यो मर्त्येषु किं च विश्वेषु पशुषु प्राणैः साकमन्तर्हितो वै, अस्मिन् वैश्वानरे संवित्तये सविता दर्शयद्विश्वस्य ज्योतिः प्रणि-दधातीति ।

आपो दिव्या इति दर्शर्चम् आनुष्टुभम् आप्यं सूक्तम्

आपो दिव्याः सरस्वत्यः पयस्वत्योऽभिवर्षत ।
ऐन्द्रेण सवित्रेरितास्तेजसौषधिभिर्महीम् ॥ १ ॥

दिव्या अन्तरिक्षभवाः सरस्वत्यः परस्परं सङ्गतत्वात्; पयस्वत्योम्बु-सङ्घातरूपत्वात् विशेषेण सामान्यं विशिष्यते; हे आपः सवित्रा परमेण कर्त्रा ऐन्द्रेण वैद्युतेन तेजसा करणेनेरिताः सत्यः ओषधिभिः शीकरेषु बीजात्मना लीनाभिर्महीमभिवर्षतेति ।

साकमिन्द्रेण या यूयमापः प्राणाः पृथिवीषु ।
ता आयात रसैरन्नैरमृतैर्वनस्पतिभिः ॥ २ ॥

हे आपः या यूयं इन्द्रेण मध्यमाग्निना साकं पृथिवीषु प्राणाः; ताः रसैर्विश्वसारभूतैरन्नैर्विश्वोपजीव्यैरमृतैर्वनस्पतिभिरायातः; ओषधिभिराप्या वनस्पतयो व्यख्याता इति ।

आपो देव्यः संस्रवन्त्यः पुनः पुनः पर्वतेभ्यः।
पार्थिवेन मामुपासा ज्योतिषा सङ्गमयत ॥ ३ ॥

पर्वतेभ्यः पुनः पुनः संस्रवन्त्यः हे आपो देव्यो नदीरूपाः मामुपासाः स्नानकाले पार्थिवेन ज्योतिषा सङ्गमयत; अप्सु हि गूढोऽग्निरिति ।

मधुमत्यो हि मातर आपो देव्य इहागताः ।
मर्त्यं पुनीत मामा सं सद्यो धियो विभूतये ॥ ४ ॥

मधुमत्यो मधुररसवत्त्वात् मातरो जीवनप्रदत्वात्, हे आपो देव्य इहागताः सत्यः आसं मां सद्यो धियो विभूतये वृद्धये पुनीत, दोषविमुक्तो हि धिया वर्धते । हिः पादपूरणार्थ इति ।

**यो वो जनयिता मृतो अप्सु भवतीषु ।**
**मयि वै धत्त तेन समग्निनाऽप्सु मता तेजः ॥ ५॥**

अमृतो नाशरहितो यो वो जनयिता किञ्च यो वैभवतीष्वप्सु तिष्ठति तेनाप्सुमताऽग्निना मयि वै तेजः सन्धत्त; आप एव प्रार्थ्यन्त इति ।

**इममाग्नेय्य एनसः पुनर्मासँस्कुरुतापः ।**
**दिव्यो रसो यो युष्मासु मयि तं भरतामृतम् ॥ ६॥**

आग्नेय्योऽग्निदुहितरः आपः इमं मां पुनः संस्कुरुत एनसः पापात् यो युष्मासु दिव्यो रसः मयि तममृतममृतसधर्मत्वादमृतं भरतेति ।

**अप्स्वऽन्तर्भवतीषु मग्नमिममुशन्तमैः ।**
**भेषजैर्मधुभीरसैः पुनर्मासँस्पृशतापः ॥ ७॥**

भवतीष्वप्स्वन्तर्मग्नमिमं उशन्तमैः सुखकरैर्मधुभिः प्रियत्वात्; रसैरेव भेषजैः हे आपः पुनः संस्पृशतेति ।

आपो यन्मे दुरुदितं स्मृतं वा यदुदुरिष्टम् ।
यद्वा कृतं दुष्करणं ततः पुनीत विश्वतः ॥ ८॥

हे आपः यन्मे दुरुदितं दुरुक्तं यदु दुरिष्टं वा स्मृतं कामेन सङ्कल्पितं यद्वा कृतं दुष्करणं कर्म ततस्त्रिविधाद्वाचिकमानसकायिकरूपाद्विश्वतः पापात् पुनीतेति ।

**यद्वा परं दुश्चरितं तेजसो ब्रह्मणो हरत् ।**
**तद्वो रसेन पुनर्मे कृतं समुप्रवहतः ॥९॥**

ब्रह्मणस्तेजसः आत्मज्ञानाद्धरदपाहरत्परं यद्वा दुश्चरितं तद्वो रसेन कृतं मे पुनः सम्प्रवहत सङ्क्षालयत; उः पादपूरण इति ।

**यदादित्येनाप्सु हितं तपसापां वृषभेण ।**
**आपः सन्धत्त तन्मयि ज्योतिर्विश्वस्य दर्शयत् ॥१०॥**

अपां वृषभेण सेचकेन आदित्येन तपसा तपनेन यदप्सु हितं पोषितं तत् दर्शयद्विश्वस्य ज्योतिः आपो मयि सन्धत्तेति ।

**वाचं देवीमिति द्वादशर्चम् आनुष्टुभम् सारस्वतं सूक्तम् चतुर्थम्**

**वाचं देवीमृतवतीमनुब्रवीमि मनसा ।**
**या देवी ब्रह्मणस्पतेरेकपदी या बृहती ॥१॥**

या देवी ब्रह्मणस्पते कार्यकरणसङ्घातात्, या एकपदी नानात्वहीना बृहत्यखण्डा – अव्यक्तमानसशब्दरूपत्वात् तां मनसा कर्त्रा– आविष्कृताम् इत्यध्याह्रियते । तृतीया सामर्थ्यात्; अत एव ऋतवतीं वाचं देवीमनुब्रवीमि न मनस्येकं वचस्येकं ममेति ।

**छन्दोभिस्ते सरस्वत्यास्त्रीणि पदान्याहितानि ।**
**गायत्रं पदं प्रथमे छन्दसि प्रातः सवने ॥ २॥**

ते सरस्वत्याश्छन्दोमय्याश्छन्दोभिर्गायत्री-त्रिष्टुप्-जगतीभिः पदानि त्रीण्याहितानि, तान्यन्वाह प्रातःसवने कर्मणि प्रथमे छन्दसि गायत्रं नामपदमिति ।

**तत् त्रैष्टुभं वै द्वितीये माध्यन्दिने यत्सवने ।**
**जागतं तद्यत्तृतीये सवने पुनश्छन्दसि ॥ ३॥**

माध्यन्दिने सवने छन्दसि च द्वितीये यत्पदं तद्वै त्रैष्टुभं नाम; तृतीये सवने छन्दसि च पुनर्यत्पदं तज्जागतं नामेति ।

**पदं पृथिव्यामाग्नेयमैन्द्रं पदमन्तरिक्षे ।**
**पदं दिवि त आदित्यमृग्भिर्यजुर्भिः सामभिः ॥ ४॥**

पृथिव्यामाग्नेयं पदमृग्भिः सम्पद्यत इति शेषः, अन्तरिक्षे यजुर्भिरैन्द्रं पदं, दिवि आदित्यं पदं सामभिस्ते भवन्तीति ।

**वक्तुः समात्मनो वाचः प्रवहन्त्यास्ते पराच्याः ।**
**चत्वारि मनसा साकं पदानि तानि हितानि ॥ ५॥**

छन्दोभिस्त्रीणि पदान्युक्तानि, त्रीणि वेदैः, उभयविधानि च पारिभाषिकाणि, अथ वस्तुतः सरस्वत्याः पदान्याह - आत्मनो वक्तुः सकाशात् सम्प्रवहन्त्याः पराच्यास्ते वाचो मनसा साकं चत्वारि तानि पदानि

हितानि धृतानि यानि वक्ष्याम इति ।

**वैश्वानरेऽस्मिन्निहितमेकं पदमिदं वाचः ।**
**परं प्राणेष्वन्तरिक्षे वैश्वानरेण यत्पुनः ॥ ६॥**

अस्मिन्वैश्वानरे जीवात्मनि निहितं सूक्ष्मवाग्रूपतया समष्ट्या स्थापितमिदं वाचः एकं पदम् । पुनर्वैश्वानरेण जीवात्मनाऽन्तरिक्षे अन्तराकाशे प्राणेषु वैद्युतेषु निहितं यत्तत्परं द्वितीयं पदमिति ।

**तत्प्राणैः पुनः स्वरितं मूर्ध्नि स्वरद्भिस्तृतीयम् ।**
**इदं पदं तुरीयमनुब्रवीमि जिह्वया ॥ ७॥**

स्वरद्भिः प्राणैः पुनर्मूर्ध्नि सङ्कल्पस्थाने स्वरितं तत्तृतीयं पदम्; ते तुरीयमिदं पदं जिह्वयाऽनुब्रीविमि तृतीयमनुल्लङ्घ्येति ।

**रसवती त्वं चन्द्रमसो रसैः प्रवहतो दिवि ।**
**सवितुः स्वरतस्तपसा वाक् त्वं स्वरवती स्वैरैः ॥ ८॥**

दिवि मूर्ध्नि द्यौर्हि मूर्धाऽध्यात्मं प्रवहतश्चन्द्रमसो मनो रूपस्य रसैस्त्वं रसवती, मनसा विप्रतिषिद्धानि कपटवचनानि विषप्रायाणीति यावत्, संवादिनीत्वमृतं वहन्तीति दैवरातो मन्यते । तपसा नित्येन स्वरतः सवितुर्मुख्यप्राणस्य मुख्यं हि प्राणं सवितारमामनन्ति विभूतिप्रस्तावे; हे वाक् त्वं स्वैरैः स्वरवति; यो मुख्यप्राणे निश्चल एव तिष्ठन्वाग्व्यापारं करोति तस्यैव वचने सावत्रः परमवीर्यवत्तरः स्वरः स्फुटः स्यादिति ।

**नमस्ते देवि संस्रव चन्द्रमसे ह मूर्धनि ।**
**रसं पिबामि जिह्वया सरस्वत्यास्तव वाचः ॥९॥**

हे देवि नमस्ते, इह मूर्धनि चन्द्रमसा सह संस्रव मानसे स्फूर्तिमनेन याचते, सरस्वत्याः स्फूर्तिविशेषात्संस्रवन्त्या इति नदीसाम्यादेवमुक्तम् । तव वाचो रसं वाक्यसङ्घातरूपं जिह्वया पिबामि तुष्यन्वदामीति ।

**नमस्ते देवि सँस्वर नमस्तेऽस्तु स्वरवत्यै ।**
**जिह्वयां स्वरमेधया स्वरेण ब्रह्मणस्पतेः ॥१०॥**

हे देवि नमस्ते स्वर सम्यक् स्वर स्वरवत्यै ते नमोऽस्तु, मेधया साकं ब्रह्मणस्पतेः प्रणवस्य मुख्यात्प्राणात्प्रणवो नातिरिच्यते स्वरेण जिह्वायां स्वरः, वाचि शक्तिमनया याचत इति ।

**या त्वं देवी देवजुष्टा प्रेरिता मनसा स्वयम् ।**
**चक्षुर्भ्यां दृष्टमनु या तां त्वामृवतीं विदुः ॥११॥**

मनसा स्वयं प्रेरिताया त्वं देवजुष्टा देवपूजिता निश्चयेष्वेष निर्देशः; या चक्षुर्भ्यां दृष्टमनुसंवदति अनुवादेष्वेष निर्देशः, तां त्वां मनसा प्रेरितां दृष्टानुवादिनीं च ऋतवतीं विदुरिति ।

**सरस्वति यत्परमं पदं दिवि ते स्वरन्त्याः ।**
**आश्रावय तदु मह्यं ज्योतिर्विश्वस्य दर्शयत् ॥१२॥**

हे सरस्वति दिवि लोके स्वरन्त्यास्ते यत्परममखण्डं पदं तन्मह्यम्

आश्रावय, किं भूतं दर्शयद्विश्वस्य ज्योतिस्तद्रूपम् । उः पादपूरण इति ।

## यस्येम इति पञ्चर्चम् त्रैष्टुभम् भाववृत्तं सूक्तम्

### पञ्चमम्

**यस्येमे वचमिहेदं वदामोऽत्र यो वा अस्मासु पुनर्निरन्तरः ।**
**स नः पिता जनिता स नो भर्ता स नः कलयिता स्वयमात्मनि ॥१॥**

यस्येश्वरस्य इमे विस्फुलिङ्गा इवाग्नेरिहेदं वदामो जीवकलयाऽऽप्यायिता-श्चेष्टाम इति यावत्; यो वै पुनरस्मासु निरन्तरो नखशिखपर्यन्तं व्याप्तः, हृदयादिस्थानविभागमृषिर्गौणं मन्यते, स नो जनिता जनयिता पिता स नो भर्ता पालकः स नः स्वयमात्मनि कलयिता योजयिता अन्ते इति ।

**इयं नो धात्री पृथिवी परस्तादद्भ्य उ सम्भूता या साकमन्नैः ।**
**तेजसो या वै प्रजातास्तपतस्ता एता आपोऽमृतं पवित्रं नः ॥२॥**

इयं पृथिवी नो धात्री पोषयित्री मातेति सर्गप्रकरणाल्लभ्यते; याऽन्नैः साकमद्भ्यः उ सम्भूता परस्तात्सर्वभूतेभ्योऽर्वाक् ओषधिवनस्पतीनां सङ्ग्रहणायान्नैरिति बहुवचनम् । तैत्तिरीयाः पृथिव्या ओषधि-वनस्पतीनामन्नस्य च पार्थक्यमामनन्ति सर्गे छन्दोगास्तु अन्नान्न पृथक् पूर्वद्रव्यद्वयं मन्यन्ते; दैवरातस्तु पृथिवीमविभाज्यान्नविशिष्टां पश्यति न चान्नात्पृथगोषधिवनस्पतीन्, तपत ईशस्य तेजसोऽग्निरूपाद्या वै प्रजातास्ता एता आपो नः पवित्रममृतमुपजीव्यत्वात्; ईशतेजसोः

सम्बन्धोऽत्र कार्यकारणभाव; शङ्करादीनां नये छन्दोगसर्ग इवात्रापि परम्परया स भावः; अस्माकं तु साक्षादेवेति ।

यद्वै समुच्छ्वसितं सहसेह सवितुस्ततस्तपतस्तेजसः ।
इमे प्राणास्तदस्माकं जगतां ततो जाता इह जीवन्ति वि श्वे ॥ ३ ॥

तपतस्तेजसो ज्ञानरूपात्ततः सवितुरिह जगति यद्वै समुच्छ्वसितमायातीत्यध्याह्रियते न तु सम्भवतीति श्वासदृष्टान्त-सामर्थ्यात्; सहसा बलेन श्वसितस्योपलक्षितविशेषणम् । तदस्माकमिमे प्राणा जगतां चेष्टमानानामिह जाता विश्वे ततो जीवन्तीति।

यत्र वै तेजःपरमं पुरस्तात्स्वयमन्तरिह तत्सम्परीतम् ।
सा नो माता प्रसवित्री बृहती विश्वमिदं बिभर्त्यदितिर्गर्भे ॥ ४ ॥

एवं ज्ञानशक्तिरूपस्येशस्य क्रियाशक्तिरूपो मातरिश्वा वर्णितः, अथाधारशक्तिमाह । पुरस्तात्सर्गप्रारम्भकाले तत्परं तेजो ब्रह्मस्वयमिह यत्रान्तर्वै सम्पृतं व्यापृतं सा नो माता आदिमाता प्रसवित्री प्रकृतिबृहत्यखण्डाऽदितिराकाशापरपर्याया गर्भे विश्वमिदं बिभर्ति । अव्यक्तबीजात्मनेति वेदान्तिनः, परमाणुपुञ्जतयेति तार्किकाः, वस्तुतस्तु भाषाभेद एवोभयेषामिति ।

रोदितुरात्मनो यस्य तपसः प्रसृतं वा इदमदितौ विश्वम् ।
प्रत्युपेयं सदीक्षया नो बृहत्तदस्य ज्योतिर्विश्वस्य दर्शयत् ॥ ५ ॥

रोदितुः शब्दायमानस्य यस्यात्मनस्तपसो हेतोरदिताविदं विश्वं वै प्रसृतं

प्रागव्यक्तं तदा व्यक्तमासीत्, अस्य परमात्मनो दर्शयदवभासकं विश्वस्य तज्ज्योतिर्बृहदखण्डं नः सदीक्षया अन्वयतः साक्षात्कारेण न व्यतिरेकतः उपरमेण प्रत्युपेयं प्राप्तव्यमिति ।

**गावो रसेनेति दशर्चम्**

**आनुष्टुभम्**

**गोसूक्तम्-षष्ठम्**

**गावो रसेन गव्येन पृथिवी वनस्पतिभिः ।**
**अमुष्य तपसाऽदितिर्वर्धयन्तु मयि तेजः ॥ १ ॥**

गावो गव्येनात्मीयेन रसेन पयसा पृथिवीवनस्पतिभिः अदितिर्द्यौरमुष्य सूर्यस्य तपसा सर्वविमर्शमूलेन ज्योतिषा मयि तेजःशरीरे प्राणे मतौ च वर्धयन्त्विति ।

**स्वँ वत्समिव धेनवो मामभ्यायात पयोभिः ।**
**प्रयच्छत पयो मह्यं वत्सस्य मे जीवनाय ॥**

हे धेनवः पयोभिः स्वं वत्समिव मामभ्यासात मह्यं पयः प्रयच्छत किमर्थं वत्सस्य पुत्रभूतस्य मे मम जीवनायेति ।

**रौद्रं यदन्तर्धेनवो भवतीषु प्रतिष्ठितम् ।**
**पयस्तत्सृजताजस्रं वत्सस्य मे जीवनाय ॥ ३ ॥**

हे धेनवो भवतीषु अन्तर्दोहनात्पूर्वं रौद्रं रुद्रदेवताकं यत्प्रतिष्ठितं तत्पयः अजस्त्रं सन्ततं सृजत वत्सस्य मम जीवनायेति ।

**यद्वायव्यं संविसृष्टं स्वेन वत्सेनोत पीतम् ।**
**स्तन्यं तद्धत्त दोग्ध्रे मे वत्सस्य मे जीवनाय ॥ ४॥**

यत्संविसृष्टमूधः प्राप्तं वायव्यं वायुदेवताकं उत स्वेन वत्सेन पीतं पीतावशिष्टं स्तन्यं तत् दोग्ध्रे मे मम वत्सस्य जीवनाय दत्तेति ॥

**यदाश्विनं वै सुधारं दुह्यमानमिहाश्विनौ ।**
**अमृतं तत्कल्पयतां वत्सस्य मे जीवनाय ॥ ५॥**

यत्सुधारं दुह्यमानमाश्विनमाश्विनदेवताकं वै तदिहाश्विनौ देवावमृतं कल्पयतां वत्सस्य मम जीवनायेति ।

**इदं ते सोम कवोष्णं दुग्धं गव्यं मधुपयः ।**
**सौम्यमिदमस्तु पेयं वत्सस्य मे जीवनाय ॥ ६॥**

हे सोम ते त्वदर्थमिदं गव्यं गोसम्बन्धिमधु मधुस्थानीयं पयः दुग्धं दुग्ध्वा समर्पितमिति यावत्, तदिदं पेयं पानयोग्यं पयः सौम्यं सोमपानसदृशमानन्दकरं सौमनस्यमस्तु वत्सस्य मम जीवनायेति ।

**इमं मा वत्सं धेनवः सूपतिष्ठत मातरः ।**
**कामं दुहाना अमृतं पयः सन्धत्त सुवीर्यम् ॥ ७॥**

हे धेनवो मातरः भवत्यः अमृतममृतसधर्मकं पयः कामं यथेच्छं मनोरथं च दुहानाः सत्यः मामिममुपासकं वत्सं सूपतिष्ठत । सुवीर्यं ब्रह्मवर्चस्करं पयश्च सन्धत्तेति अनया गवां सान्निध्यं याचते ।

**गव्यैः पुनीत पुनर्मां धेनवः पञ्चभी रसैः ।**
**पवित्रं पुनः पयसा चिरं गावो जीवयत ॥८॥**

हे धेनवः पुनः गव्यैरात्मीयैः पञ्चभिर्मूत्रशकृत्पयोदधिसर्पिभिः रसैर्मां पुनीत, हे गावः पवित्रं पञ्चगव्येन पुनीतमपि पुनः उत्तरत्रापि चिरं जीवयतेति, अनया पञ्चगव्येनात्मनः पवित्रतां चिरं जीवितं च याचते ।

**साकं वत्सेन दोग्ध्र्यो ३मां वत्सं रक्षत मातरः ।**
**युष्मान्त्सायमथ प्रातरुपायातमिमं स्तन्यैः ॥९॥**

हे दोग्ध्र्यो मातरः वत्सेनात्मीयेन साकं सह मिलिताः सत्यः भवत्यः वत्सं स्वकीयं सन्तं पुत्रभूतं मां सायं सन्ध्यायां अथ पुनः प्रातः सन्ध्यायां च युष्मान् प्रत्युपायातमिमं सेवकजनं स्तन्यैः पयोभिः संरक्षतेति ।

**गावो मे गव्यं सुपूतं स्रावयन्तु तदा दिव्यम् ।**
**पयो वै सम्प्रबोधयेज्ज्योतिर्विश्वस्य दर्शयत् ॥१०॥**

यत्पयः सत्वबुध्यभिवर्धकगुणकं विश्वस्याखिलप्रपञ्चस्य दर्शयदवभासकं आदित्यं ज्योतिः सम्प्रबोधयेत् प्रकाशयेत् तत्तादृशं सुपूतं स्वतः पवित्रं गव्यमात्मीयं पयः गावो मातरो मे मदर्थं स्रावयन्त्विति;

गव्येन पयसा जीवनेन परिशुद्धान्तःकरणस्य स्वयमेवात्मज्योतिः प्रकाशत इति । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ।" इति ब्राह्मणं चात्र भवति अनया आत्मज्योतिषः प्रबोधं तत्र कारणीभूतं केवलं सा त्विकं पयश्च याचते तेन सत्त्वाहारात्सत्त्वशुद्धिरित्युक्तं भवतीति ।

गावो मातर इति दशर्चम्

आनुष्टुभम्

गव्यं सूक्तं सप्तमम्

गावो मातरः पवित्रैर्मेध्यैर्वो रसैः प्रपीतैः ।
मृत्योः समुपैमि सत्यममृतोऽहमिह पूतः ॥ १॥

हे गावो मातरः वः युष्माकं मेध्यैः स्वतः शुद्धैः अत एव पवित्रैः पवित्रीकरणसमर्थैः रसैः प्रपीतैः सेवितैः पूतः पवित्रीकृतशरीरान्तः-करणस्सन् अत एवामृताऽहमिहास्मिंल्लोकेऽस्मिन्नेव शरीरे मृत्योः सकाशान्मरणशीलादनृतत्वात्सत्यममृतत्वं समुपैति प्राप्नोमीति । पानार्थं गोमूत्रादीनि पञ्चगव्यानि सङ्ग्रहिष्यन् एतयाः गाः प्रार्थयते ।

सरस्वत्यः सुपवित्रं मूत्रं विसृजत मह्यम् ।
सारस्वतमिदं मूत्रं गव्यं कल्पतां पीतये ॥ २॥

हे सरस्वत्यो गावः सुपवित्रं पवित्रीकरणसमर्थं मूत्रं मह्यं मदर्थं विसृजत;

इति मूत्रं सङ्ग्रहिष्यन् प्रार्थयते । अथ सारस्वतं सरस्वतीदेवताकं तदिदं सङ्गृहीतं गव्यं गोसम्बन्धि मूत्रं पीतये पानार्थं कल्पताम् - अस्त्विति; अनेनोत्तरार्धर्चेन तत्सङ्गृहीतं गोमूत्रमभिमन्त्रयते ।

**यद्वो विसृष्टं पुरीषं शुद्धं भूतये गृहीतम् ।**
**इदं सौभाग्यमस्मभ्यं गव्यमावहतु श्रियम् ॥ ३॥**

हे गावः वो युष्माकं यत्पुरीषं विसृष्टं भवति शुद्धमन्तरिक्षस्थं भूमिष्ठमपि उपर्यधो भागपरित्यागेन मध्यस्थं तत्पुरीषं भूतये एश्वर्यार्थं सङ्गृहीतं श्रीदेवताकं भवति; तदिदं सौभाग्यं सर्वैश्वर्यरूपसौभाग्यप्रदं सत् । गव्यं युष्मत्सम्बन्धि पुरीषं श्रियं लक्ष्मीमावहत्विति; अनया गोमयं सङ्ग्रहिष्यन् पूर्वेणार्धर्चेन सम्प्रार्थ्य उत्तरेणार्धर्चेन सङ्गृहीतं गोमयमभिमन्त्रयते ।

**यद्वो दुग्धं मयस्करं धेनवः सौम्यममृतम्।**
**इदं सौमनसाय नः पयः सोममावहतु ॥ ४॥**

हे धेनवः वः युष्माकं यद्दुग्धं मयस्करं सुखकरं सौम्यं सोमदेवताकं अत एव सत्यगुणकं अमृतममृतसधर्मकं तदिदं पयः नः अस्माकं सौमनसाय सत्त्वबुद्धिप्रवृत्तये अभिवृध्यर्थं सोमं मनसोऽधिदैवतं चन्द्रमसमावहतु । अस्मिन्पञ्चगव्ये आनयत्विति । अनया पयः सङ्गृह्याभिमन्त्रयते ।

**यदिन्द्रियमथो ऐन्द्रं गव्यं दधि नः संस्कृतम् ।**
**इन्द्रो बलेन समस्मिन्नादधातु पुनः प्राणान् ॥ ५॥**

हे गावः इन्द्रियं चक्षुरादीन्द्रियरूपप्राणशक्त्यनुग्राहकम् अथो अपि च ऐन्द्रम् इन्द्रदेवताकं यद्द्रव्यं युष्मत्सम्बन्धि दधिनः अस्मदर्थे संस्कृतम् आतञ्चनेन घनीभावमापादितं अस्मिन् पञ्चगव्यार्थं सङ्गृहीते दध्नि इन्द्रः प्राणशक्तिदेवताबलेनात्मीयेन वैद्युतेन तेजसा पुनरपि प्राणान्प्राणकलाः समादधातु सम्पूरयत्विति; अनया सँस्कृतं दध्यभि-मन्त्रयते ।

**यद्वै तेज उन्मथितं गवां घृतं मूलं वाचाम् ।**
**तदादित्येन ज्योतिषा पुनः सङ्गच्छतामिदम् ॥ ६॥**

यदुन्मेथितं दध्न उन्मथनात्समुत्थितं तेजः तेजस्स्वरूपं "तेजो वै घृतम्" इति ब्राह्मणमत्र भवति; यच्च वाचां - आहतं प्रेरितस्वरितोच्चारितानां मूलं हेतुभूतं गवां घृतं वै प्रसिद्धं "तेजोमयी वाक्" इति ब्राह्मणम्; तदिदमिह पञ्चगव्ये सङ्गृहीतं पुनरादित्येन ज्योतिषा सङ्गच्छतामिति; अनया घृतमभिमन्त्रयते ।

**सरस्वत्यो या अमृता आपो दिव्याः पावमान्यः ।**
**ताभिरद्भिरिमे गव्याः साकं पुनन्तु मां रसाः ॥ ७॥**

या आपः सरस्वत्योऽम्बुसङ्घातरूपा दिव्याः वृष्टेः पूर्वं मेघरूपेण दिवि संस्थिताः अमृताः अमृतसधर्मिण्यः पावमान्य आपः कुशैः सह मिलिताः सत्यः पवनशीलिन्यो भवन्ति ।"एकविंशत्या दर्भपिञ्जलैः पावयन्ति।" इति ब्राह्मणं चात्र भवति; ताभिः कुशसहिताभिरद्भिः कुशोदकैः सहेति यावत्; इमे गव्या मूत्रादयः पञ्चरसाः मां पुनन्त्विति अनया कुशसहिताः अपोऽभिमन्त्रयते ।

**गोभ्यः सरस्वत्यै श्रियै सोमायेन्द्राय सवित्रे ।**
**अद्भ्यो भूर्भुवः स्वः स्वाहा जुहोम्यग्नौ रसान् ॥ ८॥**

अग्नौ संसिद्धे पावके गव्यान्गोमूत्रादीन्पञ्चरसान्कुशोदकैः सह सम्मेलनेन यथोक्तैर्मन्त्रैरभिमन्त्रितान् गवादिभ्यः सप्तभ्यः आवाहितदेवताभ्यो "गावो मातरः" इत्यादिकया प्रत्यैकयार्चा भुरित्यग्नये भुव इति इन्द्राय स्वरिति सूर्याय समस्ताभिः प्रजापतये स्वहा समर्पितमस्त्विति जुहोमि समर्पयामीति ।

**गावो वो मूत्रं पुरीषं यदु दुग्धं दधि सर्पिः ।**
**पावकान्वो सानिमान् प्राश्नामि पञ्चपूतये ॥ ९॥**

हे गावः वः युष्माकं यन्मूत्रं पुरीषं दुग्धं दधि सर्पिः इति प्रसिद्धं तानीमानि वः युष्मत्सम्बन्धिनः पावकान्पञ्चरसान्पूतये आत्मनः पवित्रार्थं शुद्ध्यर्थं प्राश्नामीति । उः पादपूरणः । हुतावशिष्टं पञ्चगव्यमनया प्राश्नाति ।

**इदं वो व्रतेन रसैः पञ्चभिर्गव्यैः प्रपूतः ।**
**उपैमि तपसाऽऽदित्यं ज्योतिर्विश्वस्य दर्शयत् ॥ १०॥**

हे गावः वः युष्माकं व्रतेन युष्मत्सम्बन्धिना सेवारूपेण तथा पञ्चभिर्गव्यैः रसैः प्रपूतः पवित्रः तपसेऽधिकृतशरीरान्तःकरणस्सन् तपसा केवलेन विमर्शरूपेण विश्वस्य अखिलप्रपञ्चरूपस्य सर्वान्तरात्मनः सम्बन्धि दर्शयत् प्रकाशयत् आदित्यं ज्योतिः ज्योतिःस्वरूपमिदं प्रत्यक्षमुपैमि साक्षात्कारेण प्राप्नोमीति ।

योो वै इति षडृचम् त्रैष्टुभम्

ऐन्द्रं सूक्तम् अष्टमम्

**यो वै देवानां प्रथमः पवित्रो विश्वाभूतानि प्रणयत्यजस्त्राम् ।**
**अन्तरिक्षे यः पवते गलीयानिन्द्रो विश्वेषां पतिः स मध्यमः ॥ १॥**

पवित्रो देवानां प्रथमो ज्येष्ठो यो वै विश्वा सर्वाणि भूतान्यजस्त्रं प्रणयति स्वे स्वे कर्मणि चालयति क्रियाशक्तिनाथत्वात् । बलियान् बलवत्तरः यः अन्तरिक्षे पवते वायुरूपः स इन्द्रः परमैश्वर्यवान् मध्यमो मध्यमस्थानो देवो विश्वेषां सर्वेषां पतिर्भवतीति ।

**यश्चेह दिक्षु दशसु प्रवाति भाभिर्यो दशभिर्वृणुते विश्वम् ।**
**यो वै समूळ्होन्तरुदरेऽस्माकमिन्द्रो विश्वेषां पतिः स मध्यमः ॥ २॥**

इह भुवने दशसु दिक्षु यश्च प्रवाति महाप्राणात्मकवायुरूपः यो दशभिर्भाभिः दशदिगभिमुखीभिर्दीधितिभिर्विश्वं वृणते विश्वमध्यवर्तित्वात् "अम्भस्य पारे भुवनस्य मध्ये" इति निगमोऽन्योऽत्र भवति। इदमेवापारमम्भो यदन्तरिक्षम् अपि च यो वा अस्माकमुदरेऽन्तः समूळ्हः पाचकाग्निरूपः अयमेव वैश्वानर आत्मा पाचकोऽग्निर्भवति यदस्य किरणोष्मैव पचत्यन्नम् । एतेन प्रथमश्च मध्यमस्य विवर्तः इत्युक्तं भवति । स इन्द्रो मध्यमो विश्वेषां पतिरिति ।

**यो वै पुरस्तादभित प्ररुदँस्तपसे ह नित्यं जगतां जनेः ।**
**आत्मनश्चित्रमिदं प्रासारयदिन्द्रो विश्वेषां पतिः स मध्यमः ॥ ३॥**

यो वै पुरस्तात्पूर्वस्मिन्काले सर्गादावभितः समन्ततः तपसा नित्यमिह अव्याकृते प्ररुदन् शब्दायमानो रुद्राख्यप्रणवरूपो जगतां जनेरुत्पत्तितः आत्मनः इदं चित्रं विविधविकारजातं प्रासारयत् । "ब्रह्मणस्पति-रेतासङ्कर्मार इवाधमत् । देवानां पूर्वे युगेऽसतः सदजायत ।" इति मन्त्रवर्णोऽन्योऽत्र भवति । अयमेव ब्रह्मणस्पतिर्यत्प्रणवः स इन्द्रो मध्यमो विश्वेषां पतिरिति ।

**यो वै दिव्यो ह जनयत्समापो ज्योतिरात्मेह जीवसे पुरा नः ।**
**यश्चान्तः पृथिव्यामिह समूळ्ह इन्द्रो विश्वेषां पतिः स मध्यमः ॥४॥**

दिव्यः परमे व्योमनि वर्तमानो ज्योतिर्ज्योतीरूपः आत्मानोऽस्माकं जीवसे जीवनाय पुराऽऽपोरसरूपाः इह जगति सञ्जनयत्समजनयत्; यश्चेह पृथिव्यामन्तः समूळ्ह सङ्कर्षणाग्निरूपः स इन्द्रो मध्यमो विश्वेषां पतिः; हः पादपूरण इति ।

**यो वा अग्निं प्रतिष्ठिपत्पृथिव्यां रयिमन्तं समिह शं गमध्यै ।**
**रायो दाश्वान्यो विश्वस्य भूतय इन्द्रो विश्वेषां पतिः स मध्यमः ॥५॥**

यो वा इह पृथिव्यां रयिमन्तमग्निमाहवनीयादिरूपं शं गमध्यै जनानां सुखप्राप्तये सम्प्रातिष्ठिपत् यो विश्वस्य भूतये रायो दाश्वान् स इन्द्रो मध्यमो विश्वेषां पतिरिति ।

**य आदित्यं वै दिवमन्तरूपर्ध्वं प्रारोहयत्स्वर्ज्योतिरात्मानम् ।**
**दृशे विश्वस्मै भुवनाय देवमिन्द्रो विश्वेषां पतिः स मध्यमः ॥६॥**

यः स्वः तृतीयभुवनरूपं ज्योतिर्ज्योतिर्मयमात्मानं आत्मन एव विवर्तं ऊर्ध्वमुत्तमम् देवमादित्यं वै विश्वस्मै भुवनाय सर्वप्रपञ्चार्थे दृशे दर्शनाय अन्तर्जगन्मध्ये विद्यमानां दिवं प्रारोहयत् ; स इन्द्रो मध्यमो विश्वेषां पतिरिति ।

इतीन्द्रसूक्तम्

अत्रेमे भवन्त्युपसंहारश्लोकाः

आर्षेण चक्षुषा पश्यद्या ऋचस्तप आचरन् ।
वैश्वामित्रो दैवरातो विश्वामित्र इवापरः ॥ १॥

ता इमा अतिगम्भीराः शुद्धाः परमपावनीः ।
वासिष्ठोऽन्वयभाष्येण समलङ्कृतवान्मुनिः ॥ २॥

इदं यो मनुते धीरो नवीनं मन्त्रदर्शनम् ।
गम्भीरं दैवरातस्य तस्य नश्यन्ति संशयाः ॥ ३॥

इतीदं वासिष्ठमन्वयभाष्यम्

काव्यकण्ठपदलाञ्छनस्य गणपतेर्भाष्यग्रन्थेष्विदं प्रथमम्
ब्रह्मणस्पतिरित्यष्टौ दैवरातो ब्रह्मणस्पतिर्जगती

ब्रह्मणस्पतिर्ब्रह्मणात्मञ्जुहोति
ब्रह्म विश्वेषु भुवनेष्वाहितं यत् ।

स इमा विश्वा भुवनाभिपश्यति
स इदं जज्ञानः स उ वेद विश्वम् ॥ १॥

ब्रह्मणस्पतिर्जनिता जायमानो
विश्वा ब्रह्मणि धमति संरराणः ।
दिवा पृथिव्या य इदमन्तरिक्षे
ब्रह्मणस्पतिः स मीं ब्रह्मणा धमत् ॥ २॥

# मातृतत्त्वप्रकाशिका

## प्रथमः पटलः

### अनुवादकृत उपोद्घातः

द्वात्रिंशन्मदलेखाः (औष्णिहे छन्दसि)

वन्दे श्रीरमणर्षेराचार्यस्य पदाब्जम् ।
यो मेऽदर्शयदीशं भान्तं ध्वान्तमतीत्य ॥१॥

अनुवादकृतैव स्वयं रचिता गूढार्थबोधिन्याख्या टिप्पणी ।

अदर्शयत् अन्वभावयत् । न केवलमुपदेष्टा मे रमणर्षिः अपित्वनुभावयिता चेति गुरोर्महिमोच्यते ।

व्याचख्यावरविन्दो यद्धीमानृषिराङ्ग्ले ।
गोप्यं विष्टपमातुस्तत्त्वं विश्वहितैषी ॥२॥

ऋषिः अलौकिकार्थदर्शी उन्मीलितविज्ञानचक्षुरित्यर्थः । एतेन ग्रन्थस्याविपर्यस्तज्ञानमूलकत्वं प्रदर्शितं भवति ।

तत्पद्यैरनवद्यैर्गैर्वाण्या वरवाण्या ।
तात्पर्यं परिगृह्णन्वासिष्ठो विवृणोति ॥ ३॥

वासिष्ठः वसिष्ठगोत्रजः । तात्पर्यं परिगृह्णन् न प्रतिपदपरिवर्तनद्वारेत्यर्थः । एतेन तात्पर्यस्याविरोधेन मूलादधिकं न्यूनं वोक्तमनुवादे बुधैः क्षन्तव्यमिति ध्वनितम् ।

योगीन्द्राङ्ग्लवचोभ्यः पुष्पेभ्यो मधु नीत्वा ।
सञ्जङ्गृह्णाति गणेशो गैर्वाणीपटलेषु ॥ ४॥

योगीन्द्राङ्ग्लवचोभ्यः पुष्पेभ्य इति व्यस्तरूपकम् । योगीन्द्रोऽरविन्दः । गैर्वाणीपटलेषु गैर्वाण्याः पटलाः ग्रन्थपरिच्छेदा एव पटलाः क्षौद्रपटला इति श्लिष्टरूपकम् । अत्र गणेशस्य मधुकरित्वं व्यङ्ग्यमिति यथा वाच्यार्थमेकदेशव र्तिरूपकं भवति ।

भव्यं दर्शनमेतन्नव्यं वित्तसखायः ।
अद्राक्षीन्मुनिनाथो यच्छ्रीमानरविन्दः ॥ ५॥

पर्याप्तो मुखबन्धो ज्ञातुं ग्रन्थगुरुत्वम् ।
एतावानथ सम्प्रत्यायामो विषयाय ॥ ६॥

नव्यं दर्शनं प्राचीनानां षण्णां पूरकं सप्तममिति भावः । इदं च विषयसम्बन्धमनुसृत्य शाक्तदर्शनं वैशेषिकदर्शनवत् द्रष्टृसम्बन्धम् अनुसृत्यारविन्ददर्शनं कणाददर्शनवत् ।

## चतुर्व्यूहप्रस्तावः

**मातुः शक्तिविशेषाश्चत्वारो महनीयाः ।**
**दिव्यव्यक्तिविशेषाश्चत्वारो गणनीयाः ॥ ७॥**

प्राधान्येनायं प्रविभागो न साकल्येनेति सूचयितुं महनीया इति विशेषणम् । गणनीयाः प्रामुख्येन स्थिता इत्यर्थः । अत्र मातुः शक्तीरनूद्य दिव्यव्यक्तित्वं विधीयते । विश्वव्यापारकारिण्यो महत्यः शक्तयो नान्धाः अपितु दिव्यव्यक्तित्वविशिष्टा इति भावः । व्यक्तित्वं च ज्ञानवत्त्वम् । एतेन मूलशक्तेश्च व्यक्तित्वविशिष्टता ध्वनिता भवति । अङ्गिन्यचेतने कथमङ्गानि चेतनानि भवेयुः । तस्मात्तस्यां प्रयुक्तं मातृपदं मुख्यार्थवाचकमेव न गौणमित्यवगन्तव्यम् ।

**ये देव्याः सुमहान्तश्चत्वारस्तनुबन्धाः ।**
**उच्यन्ते च महद्भिश्चत्वारोंऽशविशेषाः ॥ ८॥**

देव्याः दिव्यत्वविशिष्टाया मातुः । सुमहान्तः विभवः विभुत्वं च सर्वत्र गतिमत्सामर्थ्यम् । अस्मदादिशरीरबन्धापेक्षया वैलक्षण्यं द्योतयितुमिदं विशेषणम् । ये देव्यास्तनुबन्धास्त एव दिव्यव्यक्तिविशेषा इति सामाना-धिकरण्यमेवात्र विवक्षितम् । देवीमूर्तीनां विज्ञानमयत्वात्ता एव स्वतो ज्ञानवत्यो भवन्तीति सङ्गतिः । चकारादुत्तरार्धेऽपि ये देव्या इत्यनु-वृत्तिः । तत्रापि सामानाधिकरण्यं प्राग्वत् । उच्यन्ते महद्भिरि-त्यनेनास्मिन् विषये प्राचीनर्षिसम्मतिं च स्मारयत्यनुवादकारः । ''मेधासि देवि विदिताखिलशास्त्रसारा (महासरस्वती), दुर्गासि दुर्गभवसागरनौरसङ्गा (महेश्वरी), श्रीः कैटभारिहृदयैककृताधिवासा

(महालक्ष्मीः), गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा" (महाकाली) । इति दुर्गासप्तशत्यां शक्रादिस्तुतौ भगवत्याश्चत्वारोंऽशा एव हि प्राधान्येन कीर्तिताः ।

**यैरेषाऽखिलभर्तुर्योषा दुर्विदवेषा ।**
**सर्वेषु प्रसरन्ती स्वीयप्राणिगणेषु ॥ ९॥**

यैर्द्वारा । दुर्विदवेषा प्रत्यक्षं सर्वत्र चरन्त्यपि लोकैरविज्ञातेत्यर्थः । स्वीयप्राणिगणेषु स्वीयत्वं च प्राणिगणानां स्वपरिणामत्वादद्वैतिनां पक्षे । सर्वं जगद्ब्रह्मणो विवर्तं मायायाश्च परिणामं वदन्ति ह्यद्वैतिनः । माया चादिशक्तेर्नातिरिच्यते । स्यान्नाम तन्निरूपणप्रकारो भिन्नः परीक्षकाणाम् । अयमेव पक्षो भगवतोऽरविन्दमुनेरभिप्रेत इति विज्ञायते यदयं सैवाखिलमित्युत्तरत्र वक्ष्यति ।

**विश्वस्मिन्निजसर्गान्मार्गे चालयमाना ।**
**सङ्गत्याहितकार्यान्कुर्वाणा विविरोधम् ॥ १०॥**

निजसर्गान्सृष्टाः पदार्था एवात्र सर्गशब्देनोच्यन्ते । मार्गे चालयमाना विनयन्तीत्यर्थः । विविरोधं सङ्गत्याहितकार्यान् सामरस्येन कार्य-कारिणः ।

**प्राज्ञश्लाध्यमजस्रं स्वीयं शक्तिसहस्रम् ।**
**तत्तच्छक्त्यनुरूपव्यापारेष्वनुशास्ति ॥ ११॥**

स्वीयं स्वांशभूतम् । चतसृणामिवान्यासां च शक्तीनां देव्यंशभूतत्वात् ।

अनुशास्तीति वाक्यपरिसमाप्तिः । प्रसरन्ती चालयमाना कुर्वाणेति विशेषणानि चासमापकान्यपि विधेयान्येवात्र भवन्ति नानुवाद्यानि ।

मातुर्माहाभाग्यम्

**सैका यद्यपि माता भिन्नैरेव तथापि ।**
**अंशैर्दर्शयतीयं स्वात्मानं पुरतो नः ॥१२॥**

यद्यपि सैका समष्टिदृष्ट्याम् । भिन्नैरेव व्यष्टिदृष्ट्यामस्माकं परिचितायाम् ।

**कः सङ्ख्यातुं जनन्याः शक्तिव्यक्तिविभूतीः ।**
**सम्भूतीरपि विश्वव्यापारं विदधाना ॥१३॥**

शक्तिव्यक्तिविभूतीः एकैकस्मिन्नंशे वस्तुतो विभक्तुमशक्यानामप्यासां गुणतो विभक्तुं शक्यत्वात्पार्थक्येन निर्देशः । सम्भूतीः प्रादुर्भावान् अवतारानिति यावत् ।

**यां मातेति भजामः सा चित्काचिदपारा ।**
**एतेषां भुवनानां सर्वेषां च धरित्री ॥१४॥**

साधकेभ्यो मातृस्वरूपोपदेशोद्देशेन यां मातेति भजाम इत्यारम्भः । सा चित् चिच्छक्तिरूपा ।

**हन्तैकाप्यमितांशानालं यामनुगन्तुम् ।**
**तीव्रारुद्धविशालाप्यस्माकं मतिरेषा ॥१५॥**

हन्तेत्याश्चर्ये । तीव्रा च अरुद्धा च विशाला च तीव्रारुद्धविशाला ।

### मातृस्वरूपस्थानयोः कथनम्

**श्रीमाता परमस्य प्रज्ञाशक्तिरपीयम् ।**
**स्वीयायाः सकलायाः सृष्टेर्भाति परस्तात् ॥ १६॥**

इयं श्रीमाता परमस्य परमात्मनः प्रज्ञाशक्तिरपीति । मातुः स्वरूपलक्षणमिदम् । ननु प्रज्ञाशक्तिश्च किं भिन्ने उताहो अभिन्ने । यदि भिन्ने मातुः स्वरूपद्वितयं स्यात् । यद्यभिन्ने लक्षणेन्यतरस्य वैयर्थ्यम् । नैष दोषः । वस्तुतः प्रज्ञाशक्त्योरभेदेऽपि कार्यभेदाद्भेदेन निर्देशः स्वयं प्रजानन्त्येव सा परमस्य प्रज्ञा भवति । स्वयं शक्नुवन्त्येव सा परमस्य शक्तिर्भवति । अन्यथा तस्याः पार्थक्येन व्यक्तित्वविशिष्टता न सिध्येत् । सृ ष्टेः परस्तात् त्रिपादस्यामृतं दिवीति निगमप्रसिद्धायां दिवीत्यर्थः ।

### मातुर्ग्राह्यत्वकथनम्

**एवं सातिदविष्ठाप्यस्माकं धिषणायाः ।**
**ख्यातैर्मूर्तिविशेषैर्भास्वत्पावनवेषैः ॥ १७॥**

ख्यातैर्मूर्तिविशेषैः महेश्वर्यादिमूर्तिविशेषैः ।

**किं चास्मिन्नरलोके तत्त्वं दर्शयितुं स्वम् ।**
**स्वाङ्गीकारमितानां दिव्यप्राभवभाजाम् ॥ १८॥**

तत्त्वं दर्शयितुं स्वं स्वाङ्गीकारमितानां अवतरणपात्रभूतत्वेन निर्धारितानाम् । अनन्तरं स्वावतरणाद्दिव्यप्राभवभाजामिति सङ्गतिः ।

रूपाणामनघानां व्याप्याभ्यां सुविदाभ्याम् ।
सत्कर्मप्रकृतिभ्यां किञ्चिद्ग्राह्यगतिः स्यात् ॥१९॥

व्याप्याभ्यां परिच्छिन्नाभ्याम् । सुविदाभ्यां सुष्ठु वेत्तुं शक्याभ्याम् । सत्कर्मप्रकृतिभ्यां सदिति कर्मप्रकृत्योरुभयोश्च विशेषणम् । ग्राह्यगतिः ग्राह्यप्रकारा । मातुर्नित्यविभूतयो महेश्वर्यादयः तत्तेजोंऽशाविष्टा अवतारास्तु नैमित्तिकविभूतयो भवन्ति । तदुभयद्वारा मातुर्दविष्ठाया अपि ग्राह्यत्वमिति तात्पर्यम् ।

आदिशक्तेस्त्रिविधत्वम्

विश्वातीतमथाधिब्रह्माण्डं रममाणम् ।
शारीरं च परस्यास्त्रेधारूपममुष्याः ॥२०॥

विश्वातीतं सर्वदृश्यप्रपञ्चातीतं त्रिपाद्विभूतिस्थाने दिवि विराजमानं आधिदैविकमिति यावत् । अधिब्रह्माण्डं रममाणं आधिभौतिकमित्यर्थः विश्वस्य भूतेभ्योऽव्यतिरेकात् । अत एव "पादोस्य सर्वा भूतानि" । इति निगमः सङ्गच्छते । शारीरं जीवमयं आध्यात्मिकमिति भावः ।

विद्मस्तान्यनया चेदैक्यं स्यादनुभूतम् ।
चिच्छक्त्या भुवनानां जीवनां च धरित्र्या ॥२१॥

ऐक्यमनुभूतं चेत् स्वात्मशक्तेस्तद्रूपत्वादिदं साध्यं स्यात् ।

विश्वातीतशक्तिः

राजन्त्यस्य परस्तात्सन्धत्ते परशक्तिः ।
नित्याव्यक्तरहस्येनेशस्याखिलसर्गम् ॥ २२॥

ईशस्य नित्यमव्यक्तं यद्रहस्यं तेन ।

अधिलोकशक्तिः

शक्तिर्भान्त्यधिलोकं सर्वं वस्तु सृजन्ती ।
बिभ्राणा पुनरन्तस्तस्यानुप्रविशन्ती ॥ २३॥

तस्य सर्वस्य वस्तुनः ।

सम्यङ्निर्वहतीशा व्यापारं दधतीनाम् ।
शक्तीनां सरणीनामप्यम्बा नियुतानि ॥ २४॥

सरणीनां पद्धतीनाम् ।

जीवमयी शक्तिः

सामर्थ्यस्य महत्योः शक्त्योरस्य युगस्य ।
मूर्तिः कापि भवन्ती शक्तिर्जीवमयीयम् ॥ २५॥

अस्य महत्योः शक्त्योः युगस्य द्वयस्य सामर्थ्यस्य तत्सम्बन्धि यत्सामर्थ्यं तस्येति ।

अस्माकं द्वितयं तन्नेदिष्ठं विदधाना ।
दिव्यत्वस्य च मर्त्यव्यक्तेर्मध्यगतास्ते ॥ २६॥

तद्वितयं आधिदैविकाधिभौतिकशक्तिद्वयं । दिव्यत्वस्य देवभावस्य मर्त्यव्यक्तेः अशुद्धाहङ्कारमय्याश्च ।

मातुः कार्याणि

विश्वस्यास्य परस्ताद्भान्ती सादिममाता ।
नित्ये ब्रह्म परं स्वप्रज्ञाने निदधाति ॥ २७॥

आदिममाता मूलशक्तिः ।

सैकावासधरित्री सीमातीतबलस्य ।
सान्निध्यस्य च सूरिव्याख्यानान्यतिभातः ॥ २८॥

सूरिव्याख्यानानि अतिभातः अतिक्रम्य विराजमानस्य वर्णयितुमशक्यस्येति यावत् । अनिर्वाच्यानन्दावहत्वाद्वर्णयितुम् अशक्यत्वम् । सान्निध्यस्य समन्तादपरिहार्य आवृण्वंश्च सन्निकर्षः सान्निध्यमित्युच्यते ।

सा बिभ्रत्यजराऽभिव्यक्त्यर्हाणि ऋतानि ।
आहोस्वित्प्रथयन्ती संलीनानि रहस्ये ॥ २९॥

शक्तात्यन्तमनन्तप्राणैषा खलु तानि ।
स्वात्माखण्डविराजच्चित्तेजस्यवतार्य ॥ ३०॥

तेभ्यो यच्छति लोके शक्तित्वं च शरीरम् ।
येषामत्र विकासाः कुर्युर्नूत्नयुगानि ॥ ३१॥

अभिव्यक्त्यर्हाणि अभिव्यक्तियोग्यानि । रहस्ये संलीनानि असत्कार्यवादनिरसार्थमियमुक्तिः । ऋतानि सत्यरूपाणि । बिभ्रती काले प्रकटयितुम् । आहोस्वित् प्रथयन्ती प्रकटयन्ती अभिव्यञ्जयन्तीति यावत् । व्यवस्थितविकल्पोऽयम् । कानिचिदभिव्यञ्जयितुमात्मनि बिभ्रती कानिचिदभिव्यञ्जयन्तीति ।

स्वात्माखण्डविराजच्चित्तेजसि औचित्याद्विश्वांशव्याप्ते तत्रैवावतारणस्य सम्भवात् ।

शरीरं सूक्ष्मं दिव्यं प्रकरणात् । एतेन श्लोकत्रयेण देव्याः सत्यरूपावतारणप्रकारः सामान्यत उक्तः ।

अस्यां वस्तुपरं तत्स्पष्टीभूय विभाति ।
सच्चित्सम्मदरूपेणाच्छन्नेन सदापि ॥ ३२॥

सदाप्याच्छन्नेन नित्यमनावरणेन । सच्चित्सम्मदरूपेण सच्चिदानन्दरूपेण ।

पञ्चगीतयः (आर्याजातिभेदाः)

**ईश्वरशक्तिद्वैता द्वैतज्ञानात्मना तया व्यक्तम् ।**
**तत्सत्पुरुषप्रकृतिद्वैतनिसर्गात्मना च भुवनेषु ॥ ३३॥**

तत् प्रागुक्तं सत् परं वस्तु । तया मात्रा द्वारा ईश्वरशक्तिद्वैतज्ञानं तयोः पार्थक्येन व्यक्तिमत्त्वात् । अद्वैतज्ञानं तु तयोः स्वरूपेणाभेदात् । चिदेव ह्युभयोः स्वरूपम् । धर्मिभूता चिदीश्वरः धर्मभूता शक्तिरिति । पुरुषप्रकृतिद्वैतनिसर्गस्तु चेतनजडविभागमूलकः ।

**मूर्तं करोति च जगत्कक्ष्यासु समस्तदेवतास्वपि सा ।**
**तच्छक्तिष्वपि माता तदमूर्तं वस्तुचित्रचारित्रा ॥ ३४॥**

**एषु भुवनेषु यद्यच्च परोक्षेषु भाति भुवनेषु ।**
**तत्तद्भूत्वाऽलक्ष्यत तद्वस्तुमहाप्रभावतस्तस्याः ॥ ३५॥**

जगत्कक्ष्यासु अन्नमयादिषु । समस्तदेवतासु इन्द्रादिषु । तच्छक्तिषु इन्द्राण्यादिषु । मूर्तं मूर्तिमत् ।

तत्तत् तत्तद्रूपमित्यर्थः । एकस्मिन्नेव परस्मिन्वस्तुनि महाचित्रफलके आदिशक्तिः विविधानाकारान् विविधानि च रूपाणि चित्रितवतीति श्लोकद्वयार्थः ।

**सर्वं लीला तस्याः साकं परमेण किमपि खेलन्त्याः ।**
**सर्वं परस्य गोप्यप्रकाशनं भवति चेष्टितं तस्याः ॥ ३६॥**

नायं परस्य वस्तुनः परिणामः । अधिष्ठानमात्रं हि तज्जगतः सर्वस्य । तदाश्रयाः सर्वेऽपि जगच्चित्रविलासाः शक्तिकार्यमित्युक्तं भवति । चेष्टितं उद्देश्यं परस्य गोप्यप्रकाशनं विधेयम् ।

सर्वमिदमद्भुतानां प्रकटनमनया कृतं प्रपूर्णस्य ।
सैवाऽखिलं यदेतद्देव्या अंशेन भवति चिच्छक्तेः ॥

प्रपूर्णस्य अद्भुतानां प्रकटनमिति भावः । सैव अखिलं सर्वं जगदपि शक्तिरूपमिति भावः परस्य वस्तुनः फलकस्थानीयत्वात् । शक्तिविलासस्य चित्रस्थानीयत्त्वाच्च "तत्तद्भूत्वा लक्ष्यत" "सैवाऽखिल" मित्यनयोर्वाक्ययोर्न विरोधः । चिच्छक्तेरंशेन सर्वं भवतीति हेतूक्तिः । जगतश्चिच्छक्त्युपादानकत्वोक्त्या भगवतोऽरविन्दमुनेः साङ्ख्यानां जडप्रकृतिकारणवादः तार्किकाणामणुकारणवादश्च नाभिमताविति स्पष्टं गम्यते । सृष्टिसत्यत्वकथनाद्वैत्येकदेशिनां दृष्टिसृष्टिवादो बौद्धानां विज्ञानवादश्च नास्याभिमताविति च स्पष्टं भवति ।

हरिणी (अत्यष्टिच्छन्दसि)

किमपि न भवच्छक्यं माता विनिश्चिनुते नयत्
परमपुरुषो विज्ञसं यन्न चाप्यनुमन्यते ।
किमपि न भवेद्रूप्यम्बैषा नयद्विभुचोदिता
घटयति निजानन्दे बीजात्मना न च वीक्षते ॥ ३८॥

इति प्रथमः पटलः

कदाचिन्मात्रा निश्चितं परमेण निरस्त स्यादिति न भ्रमितव्यम् । परमस्याशयानामेव मातरि प्रतिबिम्बितत्वात् । निजानन्दे आनन्दस्यैव सर्वसर्जकत्वात्तत्र घटनम् । न च वीक्षते किमाकारं किं रूपं किं गुणं वा सृजामीति वीक्षात्र बोध्या । रूपीत्युपलक्षणं गुणान्तराणामपि ।

इति प्रथमपटलस्य टिप्पणी

**द्वितीयः पटलः**

विभुतः प्रेषितमखिलं जातं निखिलातिगनिजसंविच्छक्त्या ।
परिणमयन्ती भुवनाध्यक्षा स्वरचितभुवनान्यनुविशतीयम् ॥१॥

सन्निधिरस्याश्चैतन्येन प्रमदबलाभ्यामपि सम्पूर्य ।
धारयते तान्यखिलान्येषां यानि विना न स्थातुं शक्तिः ॥२॥

ब्रूमः प्रकृतिं यां वयमेषा बाह्यं किञ्चन रूपं तस्याः ।
सन्ततमुज्झितनिद्रा सेयं निर्वहतीह समस्तं कार्यम् ॥३॥

शक्तीः सरणीरपि सा व्यूह्य प्रभ्वी समरसभावात्कर्त्रीः ।
आतन्वाना तत्तत्प्रकृतिव्यापारांश्च प्रेरयमाणा ॥४॥

द्रष्टुं शक्ये परिभोक्तुं वा योग्ये प्रभवति जीवितुमथवा ।
अखिले द्रव्ये भव्यचरित्रा गूढमगूढं वा सञ्चरति ॥५॥

तत्तदजाण्डेश्वर्याः शक्तेरण्डं तत्तल्लीला भवति ।
सा विश्वातिगमातुर्व्यक्तिर्विश्वमयी पृथगजरा तत्र ॥ ६ ॥

एकैकोऽपि च लोकस्तस्या ईक्षित ईक्षालसिते भवति ।
सुषमाशक्तिमये हृदि विधृतो जनितश्च महत्यमलानन्दे ॥ ७ ॥

अप्यविशेषादेकप्रकृतौ सृष्टावस्यां बह्व्यः कक्ष्याः ।
दैव्याः शक्तेः सम्प्रसरन्त्याः सोपानपदानि भवन्त्यस्याः ॥ ८ ॥

यद्भागावयमस्य विसर्गस्याग्रे सच्चित्सम्मदरूपाः ।
लोकाः सन्ति श्रीमाता येष्वावृतिरहिता नित्या लसति ॥ ९ ॥

भूतान्यखिलान्येष्वविकार्ये विमलैकत्वे पूर्णत्वे च ।
जीवन्ति चरन्ति च निखिलाम्बाबाहुच्छाया विश्रान्तानि ॥ १० ॥

विज्ञानमया अध एभ्यो न स्त्वनति दविष्ठा लोकाः सन्ति ।
विज्ञानात्मा विबुधोपास्या महती शक्तिस्तेषु विभाति ॥ ११ ॥

सा दिव्यायाः सर्वज्ञाया इच्छाशक्तेर्वीर्यं भवति ।
ज्ञानस्य च विभुनः प्रतिकार्यं सिद्धस्य विना श्रमलेशमपि ॥ १२ ॥

सर्वेऽपि च तेषु व्यापाराः सत्यस्य पदक्रमणान्येव ।
सर्वं भूतं महसो दिव्यस्यात्माशक्तिर्देहं चैषु ॥ १३ ॥

भोगाः सर्वे तेषु तरङ्गाः सान्द्रापरवत आनन्दस्य ।
अथवा विमलस्रोतस्विन्यो गम्भीरा उत पारावाराः ॥ १४ ॥

अन्नप्राणमनोमयलोका अस्माकं त्विह वासस्थाने ।
ज्ञानवियुक्ता मूलाद्दलिताः काममविद्यामलिनाः सन्ति ॥ १५ ॥

तेषामेषा पृथिवी तु किमप्यर्थव्यञ्जकमायतनं स्यात् ।
निर्णायकपद्धतिमेतस्याः पश्यामः सकलं परिणामम् ॥ १६ ॥

तमसाच्छन्नात्यन्तमपक्वा बहुलक्लेशाप्येषा भ्रियते ।
जगतां मात्रा सैतां नयति प्रेरयमाणा गूढां खगतिम् ॥ १७ ॥

सत्यं भवनं सत्यं जीवनमनघं ज्योतिर्विज्ञानाख्यम् ।
लोकेस्मिन्नवतारयितव्यं सुतरां भव्यं यदुपरि भाति ॥ १८ ॥

नीचैरेकत इह विरतः सन्भौतिकवस्तुनि बोधविहीने ।
जीवप्राणस्वान्तोद्भेदादन्यत आत्मानन्त्या रूढः ॥ १९ ॥

अवरोढुं पुनरारोढुं च द्वेधा सिद्धश्चित्कक्ष्यात्मा ।
सोपानपथप्रतिमो योऽयं मर्यादाक्रमबन्धो दिव्यः ॥ २० ॥

अनयोरुभयोर्मध्यस्थानं चित्रनिधानं माताध्यास्ते ।
शक्तिरविद्यामयभुवनानां त्रिविधानामपि समधिष्ठात्री ॥ २१ ॥

असमासम्

# शारीरकमीमांसाटिप्पणी

## मङ्गलाचरणम्

जगदेतदनारतं पचन्तं महतोऽस्मादपि पुष्करान्महान्तम् ।
तपसा निरुपाधिके न गम्यं परमात्मानमनन्तमीशमीडे ॥

## गुरुस्तवः

करुणासहकारिदृक्प्रभाभिः तिमिराण्युद्धतिमन्ति हृद्गुहासु ।
पदपद्मजुषामपाहरन्तं भगवन्तं रमणं गुरुं नमामि ॥

## ग्रन्थावतरणम्

श्रुतिकोशगमञ्जनं दधाने भगवच्छङ्करपादसूत्रभाष्यम् ।
भण भारति मे विमृश्य तत्त्वं न विशालाक्षि भजस्व मौनमुद्राम् ॥

## प्रथममाह्निकम्

भाष्यम् – "तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतरा विवेकेन, अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः॥"

**टिप्पणी** – शरीरात्मनोरेवायं परस्पराध्यासजीवकृतोऽविद्यामूलकः । न जगदात्मनोरीश्वरकृतः । अन्यथेश्वरस्य बन्धत्वप्रसङ्गात् । ईश्वरे जगदध्यस्यत इति च नाध्यासभाष्यहृदयम् । परस्पराध्यासस्यैव प्रस्तुतत्वाज्जगतीश्वरबुद्धेरपि मिथ्याज्ञानत्वापत्तेः । वक्ष्यति श्रुतितात्पर्यनिर्णायकः सूत्रकारः । तदनन्यत्वमारम्भणशब्दादिभ्य इति । जीवस्यासृष्टत्वान्न जीवोपादानकं शरीरमिति तयोः परस्पराध्यासो मिथ्याज्ञाननिमित्त एव स्यात् । नास्माभिरुच्यते यदवगतजीवेश्वरैक्यभावस्य सर्वत्र जगतीव परिच्छिन्नाभिमानरहिताऽऽत्मबुद्धिः सोऽप्यध्यास इति । पृथगभिमानि एवेदं प्रकरणम् ।

सत्यं कालत्रयेऽप्यबाध्यं चिद्रूपम् । अनृतं तद्विलक्षणम् ।

अस्त्वहमिदमिति शरीरशरीरिणोः परस्पराध्यासो मिथ्याज्ञाननिमित्तः । कथं ममेदमिति तयोः प्रत्यक्षसम्बन्धोऽध्यासपक्षे स्थाप्यते । न । अत्रेदम्पदस्य भार्यापुत्रादिपरत्वाच्छरीर आत्माध्यासस्यैवायं प्रपञ्चः ॥

**भाष्यम्** – "आह – कोऽयमध्यासो नामेति । उच्यते – स्मृतिरूपः परत्र पूर्वदृष्टावभासः ॥"

**टिप्पणी** – अत्र लक्ष्ये परत्र प्रत्यगात्मनि पूर्वदृष्टानां स्वसम्बन्धत्वेन प्रागनुभूतानां शरीरेन्द्रियप्राणान्तःकरणानां व्यस्तानां समस्तानां वाऽवभासः शरीरादित्वेन न प्रत्यगात्मनो ग्रहणमिति यावत् । एष विषयिणि विषयाध्यासः । परत्र शरीरेन्द्रियप्राणान्तःकरणेषु व्यस्तेषु समस्तेषु वा पूर्वदृष्टस्य पूर्वमहं प्रत्ययगोचरत्वेन गृहीतस्यात्मनोऽवभासः । एष विषये विषय्यध्यासः । उभयथापि फलितं तुल्यम् ।

परत्र ब्रह्मणि पूर्वदृष्टस्य जगतोऽवभास इति नास्मिन्प्रकरणे लक्ष्यम् । लोकव्यवहारसिद्धस्य विषयिणः जीवस्येह प्रकृतत्वात् । विषयिणि क्वचिज्जीवे सर्वस्य जगतोऽध्यास इति न सम्भवति । अविद्यावतो जीवस्यैव जगत्कारणत्वापत्तेः । न चेष्टापत्तिः । तथा सतीश्वरवादिन्यश्रुतयो बाध्येरन् । सूत्रकारश्च बाध्येत जन्माद्यस्य यत इत्यादि घुष्यन् । भाष्यकारोऽपि नानुकूलः स्यात्तद्व्याख्यानस्थः । जीवस्य ब्रह्मणोऽव्यतिरिक्तत्वादविरोध इति चेन्न । घटाकाशस्याकाशाद् अव्यतिरिक्तत्वमिति तस्य को वा सर्वग्रहनक्षत्रायतनत्वं ब्रूयात् । ये नाम सर्वथेश्वरसृष्टिं निराकृत्य तत्पराणां श्रुतिसूत्रभाष्याणां व्यवहाराधीनतां कल्पयन्ते आत्मभ्रममेव सर्वजगन्मूलमाचक्षते । तन्मते सर्वत्र जगति स्वव्यतिरिक्तानां जीवानामप्यन्तः पातित्वेन प्रसज्येत तेषामनृतत्वम् । एवं च ईश्वरस्य दृष्टौ स्वात्मनोऽप्यनृतत्वं न निवारयितुं शक्यम् । तथा च सुन्दोपसुन्दन्यायेन सर्वोच्छेदः प्रसङ्गः । विषयिणोऽन्यदात्मस्वरूपम् । तच्चैकं सर्वानुगतं सर्वातिरिक्तमिति चेत् । इदमीश्वरपर्यन्तमेवानुधावनम् । तस्मिंश्च भ्रमो नोपपद्यते । नित्यमुक्तत्वात्तस्य । तस्मात् भ्रमो दुःखहेतोः संसारस्यैव मूलम् । न जगतः । माया तु न भ्रमः सा च विचित्रा शक्तिः इतरेषां भ्रममुत्पादयति । भ्रमवन्तः संसारिणो जीवाः । मायावी परमेश्वरः । इष्यत एव तु मायास्य जगतो मूलम् । तस्याः सवितुः शक्तित्वात् ।

भाष्यम् – "न चैतस्मिन् सर्वस्मिन्नसत्यसङ्गस्यात्मनः प्रमातृत्वमुपपद्यते ।"

टिप्पणी – अत्र प्रमातृत्वानुपपत्तिश्च प्रमातृत्वाभिमानानुपपत्तिः । एतेनावगतस्वस्वरूपेऽप्यात्मन्यन्तःकरणस्य प्रमातृत्वं न निषिध्यते ।

तदा निरभिमानः साक्षी स्वयं स्यात् । एतेन जीवन्मुक्तानामृषीणां सिद्धादीनां लोकव्यवहारो व्याख्यातः । अन्यथा जीवन्मुक्तानां सर्वव्यवहारोच्छेदापत्तिः । ईश्वरस्य च । यद्यप्यसङ्ग आत्मा तथापि तत्तेजोऽनुगृहीतत्वं सन्निकर्षादन्तःकरणस्य न विरुध्यते व्यष्टि-समष्ट्योः । तद्विद्यायामविद्यायां च तुल्यम् ।

**भाष्यम्** - "शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेत-ब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्षते ॥"

**टिप्पणी** - शास्त्रीयश्च व्यवहारो विधिनिषेधविषयकोऽत्राभिप्रेतः । निरभि-माने युगपदुभयेषां कुण्ठत्वम् । नैतावता निषिद्धकर्माचरणापत्तिः । तेषामप्यभिमानमूलकत्वात् । अथ कथं सत्कर्माचरणशीला अवगतात्मतत्त्वाः । शुद्धस्यान्तःकरणस्य तमभ्यासं वदामः ।

इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः प्रणीतौ विशालाक्ष्यां शारीरकमीमांसाटिप्पण्यामध्यासभाष्यविलोकनं नाम प्रथममाह्निकम् ॥

## द्वितीयमाह्निकम्

**भाष्यम्** - "वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम् ।"

**सूत्रम्** - अथातो ब्रह्मजिज्ञासा ।(१. १. १)

**टिप्पणी** - तदिदं सूत्रग्रन्थस्य नाम भाष्यकारसम्मतं वेदान्तमीमांसेति स्वग्रन्थस्य शारीरकमीमांसेति यथोक्तमुपोद्घाते ।

**भाष्यम्** - "तत्राथशब्द आनन्तर्यार्थः परिगृह्यते । नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वात् ।"

**टिप्पणी** - यद्यपि जिज्ञासापदस्य मीमांसायामुपचरितार्थत्वेन नोपहसनीयमधिकारार्थत्वं तथापि मुख्यार्थपरिग्रहणेयमुक्तिः । काशिकाकारमते तु तुल्यार्थत्वमेव जिज्ञासामीमांसापदयोः ।यत् पठति वा तिंकं मानेर्जिज्ञासायामिति भाष्ये पठितम् । अभ्युपगतं चैतत् कौमुद्याम्। तन्मते शारीरकमीमांसावेदान्तमीमांसापदयोऽपि तत्तद्विचारपरत्व उपचरितार्थत्वं स्वीकर्तव्यम् । यदि कुशलादिपदानां निपुणादिष्विव ।मीमांसापदस्य विचारो रूढिग्रह एवमपि जिज्ञासापदस्य तदर्थत्वं लाक्षणिकं न निवार्यते । वस्तुतस्त्वानन्तर्यार्थवादिनापि विचारपर्यन्तमनुधावनं कर्तव्यम् । फलपर्यन्ताया इच्छायास्ततोऽव्यतिरेकात् । इच्छामात्रस्य साधनसम्पत्तेः प्रागपि सम्भवात् । अधिकारार्थकत्वे शास्त्रकारकर्तृकत्वं विचारस्य । आनन्तर्यार्थकत्वे तदर्हार्थिजनकर्तृत्वमिति विशेषः । आद्ये पक्षेऽत इत्यत्र सार्वविभक्तिकस्तसिल् । अधिक्रियतेऽस्मिन् ग्रन्थे ब्रह्ममीमांसेत्यर्थो भवति ।

**भाष्यम्** - "सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनमपेक्षते नियमेन ।एवं ब्रह्मजिज्ञासापि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यन्तु समानम् ।"

**टिप्पणी** – धर्मस्य चोदनालक्षणत्वात्पुरुषस्य चौपनिषदत्वादुभयत्रापि तुल्यमपेक्षितमध्ययनानन्तरमित्यर्थः । ननु तावानेवात्राप्यस्त्वर्थ इति चेत् । धर्मपदस्य वेदार्थमात्रोपलक्षणत्वमङ्गीकृत्य पूर्वेणैव गतार्थत्वापत्तेः परिहरति भामती । विशालाक्षी पश्यति यद्यप्यध्ययनानन्तर्यं ब्रह्मविचारेऽप्यपेक्षितं तथापि न तावन्मात्रेण कृतार्थता । अन्यथा-ऽध्ययनस्यानन्तरं धर्मब्रह्मविचारयोर्युगपदापत्तेः । अस्त्विति चेन्न । परस्परविरोधित्वाद्यथा प्रपञ्चितं भाष्ये । नैतेन यथाभ्यासमाचर्यमाणस्य सङ्गरहितस्य धर्मस्य न ब्रह्मविचारप्रतिकूलत्वमुक्तं भवति । धर्मविचारस्यैव शरीराद्यभिमानसापेक्षत्वात् ब्रह्मविचारविरोधित्वम् इष्यते । ब्रह्मविचारस्य च सर्वाभिमाननिबर्हणत्वात् धर्मविचार-विरोधित्वम् ।

**भाष्यम्** – "नन्विह कर्मावबोधानन्तर्यं विशेषः ॥"

**टिप्पणी** – अयं पूर्वः पक्षो निस्सारः । कर्मावबोधादनन्तरं कर्माचरणस्यैव प्रसङ्गः । न ब्रह्मविचारस्य । अवबोधमात्रेण कर्मणामगतार्थत्वात् । एतेन पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं विख्यातम् । अपर आह । कर्माचरणानन्तर्यमथशब्दार्थः । कर्माचरणं विना चित्तस्य शुद्धेः संस्कारस्य वाऽनुपपन्नतया ब्रह्मविचाराक्षमत्वात् । नैतद्विचारसहम् । अननुष्ठिताग्निहोत्रादिकर्मणामपि स्वभावतः सद्वृत्तवतां चित्तशुद्धे-र्दर्शनात् । इतरः प्राहः । ऋणत्रयापाकरणानन्तर्यमथशब्दार्थः । ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेदिति स्मृतिरेवं हि ध्वनतीति । अत्रोच्यते । ऋणत्रयापाकरणानन्तरमपि न संसारे मग्नो भवेत् । अपितु मोक्षे मनोनिवेशयेदित्येव स्मृतेस्तात्पर्यम् । न तु यो मोक्षे मनो निवेशयेत् तेन प्रागवश्यमृणत्रयमपाकर्तव्यमिति । अभ्युपगन्तव्यं चैतदेवम् ।

अन्यथा भीष्मशुकादीनामनधिकारित्वप्रसक्तेः । परे भणन्ति । सत्कर्मवृत्तयोर्व्यस्तयोः समस्तयोर्वा फलभूतायाश्चित्तशुद्धेरनन्तरम् इत्यथशब्दार्थः । तेन पूर्वोत्तरयोस्तन्त्रयोरेकवेदप्रस्थानयोः कश्चन सम्बन्धोऽभिहितः स्यात् । कर्मवृत्तयोरुभयोरपि तुल्यं चोदनालक्षणत्वात् वृत्तं च धर्मविशेषः । सुगमत्वात्तस्याकृतेऽपि विशेषविचारे तदपि सामान्यतो लक्षणे सञ्ङगृहीतं भगवता पूर्वतन्त्रकृता । आबाल्यसिद्धा चित्तशुद्धिस्तु पूर्वपुण्यस्य कार्यमिति शास्त्रबलादनुमीयते । माभूद्धर्मज्ञानयोर्यौगपद्येन समुच्चितयोर्मोक्षहेतुत्वम् । पूर्वस्य तदानीन्तनस्य वा धर्मस्य लेशतोऽप्यभावेऽपि ब्रह्मविचारक्षमासाधनचतुष्टयसम्पत्तिरुपपन्ना स्यादिति को वा वक्तुं शक्नुयात् । ननु ब्रवीषि चित्तशुद्धिं धर्मफलभूतां प्राक् । इह पुनः साधनचतुष्टयसम्पत्तिम् । बाढम् । सेयं चित्तशुद्धिर्न साधनचतुष्टयसम्पत्तेर्दविष्ठा । शुद्धचित्ताव्यतिरेकाद्वैराग्यशमदमादिसम्पन्नस्य । मुमुक्षुत्वं च वैराग्यमूलकमिति न तत्र सम्भवति । अविविच्य शरीरादेरनित्यान्नित्यमात्मानं को वा धर्माचरणे श्रद्धावान् भवेत् । पूर्णाविद्यानिवृत्तिर्नात्र विवेकः । सति तस्मिन्नलं ब्रह्मविचारेण । आत्मा नित्यः शरीरादिकमनित्यमिति निश्चयमात्रं नित्यानित्यवस्तुविवेकः । तस्मान्नित्यानित्यवस्तुविवेकवतामप्यध्यासो दृष्टो न विरुध्यते । एवं चित्तशुद्ध्यानन्तर्यार्थकत्वं फलतो भाष्यकारस्याप्यविरुद्धमिति । यद्यप्येष पक्षो रमणीयस्तथापि सौत्रपदार्थो न भवति । ब्रह्मजिज्ञासायाः पूर्वभाष्यत्वेन श्रुतिप्रमाणावगतस्यैवात्राध्याहार्यत्वसम्भवात् । श्रुतितात्पर्यविवरणरूपत्वात् सूत्राणाम् । नन्वन्यथापि दृश्यते । तेषां केवलं परिहाररूपत्वाच्छ्रुतिप्रमाणनिर्णीतसिद्धान्तपोषकत्वमेव । सत्त्वशुद्धौ ध्रुवा स्मृतिरिति वाक्यन्तु विद्याभ्यासदृढीकरणस्थं नात्राक्षिप्तं स्यात् । एवं कर्मावबोधानन्तर्योपलक्षिताः पूर्वे पक्षाः सर्वे व्याखाताः ।

**भाष्यम्** - "नित्यानित्यवस्तुविवेकः इहामुत्रार्थफलभोगविरागः शमदमादिसाधनसम्पत् । मुमुक्षुत्वं च । तेषु हि सत्सु प्रागपि धर्म-जिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च । न विपर्यये । तस्मादथ शब्देन यथोक्तसाधनसम्पत्त्यानन्तर्यमुपदिश्यते ॥"

**टिप्पणी** - नन्वत्र का श्रुतिर्यथोक्तसाधनसम्पत्तेर्ब्रह्मजिज्ञासायाः पूर्वभावित्वे प्रमाणम् । तस्माच्छान्तो दान्त उपरतस्तितिक्षुश्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्येदिति श्रुतिमत्रोदाहरामः । नन्वत्र शमदमादि-साधनसम्पदेव सङ्गृहीता भवति । तावदेवालमस्माकम् । बाह्येन्द्रियान्तःकरणनिग्रहरूपवतोः शमदमयोर्विषयवैराग्यं विना-ऽसम्भवादामुष्मिकार्थाशासत्वेप्युपरतेरनुपपत्तेश्च वैराग्यमनुक्तमप्यत्र सङ्गृहीतं भवति । यथा श्रुततत्त्वश्रद्धायां नित्यानित्यवस्तुविवेकः सङ्ग्राह्यः । मुमुक्षुत्वपुरःसरत्वाद्यथा श्रुततत्त्वश्रद्धायां नित्यानित्यवस्तुविवेकः सङ्ग्राह्यः । मुमुक्षुत्वपुरःसरत्वाद्यथा श्रुतपुरुषार्थश्रद्धायास्तस्य पृथगनभिधानेऽपि न हानिः । श्रुत्यर्थानुसारेण शमदमादिसाधनसम्पदोऽनन्तरमित्येव वक्तव्ये भाष्ये तत्सूचितानामन्येषां च ग्रहणं प्रपञ्चार्थम् । नन्वत्रात्मदर्शनपूर्व-भाव्यत्वमेव शमादीनामुच्यते न जिज्ञासापूर्वभाव्यत्वमिति चेत् । नायं दोषः । आत्मदर्शनं चात्मज्ञानान्नातिरिच्यते । तच्च लक्षयति जिज्ञासामेव स्वपर्यन्ताम् । जिज्ञासापदस्य च विचारार्थकत्वमवोचाम । फलपर्यन्त-ज्ञानविषयकेच्छा विचारमेवोपलक्षयति । इच्छामात्रस्यानुपयोगादिति ।

**भाष्यम्** - "सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति । न नाहमस्तीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् । सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म ।"

**टिप्पणी** - नन्विदं नोपपद्यते । नानात्वादहं प्रत्ययिनां तेषां सर्वेषां सर्वज्ञत्वसर्वशक्तित्वजगत्स्रष्टृत्वादिवैभवप्रसङ्गः । नैतदस्माकं हृदयम् । अहम्पदार्थस्य सर्वेषामेकस्यात्मन आनन्दस्य च्छायया प्रतिशरीरं विज्ञानालम्बनः पृथक्पृथगिवाहं प्रत्ययः सम्भवति । विज्ञानं चानन्दस्य सर्वशक्तस्य सूक्ष्मा प्राकृततेजोविशेषः यथा स्थूलेषु सूर्यस्य रश्मिः । स चाहं प्रत्ययो विज्ञानाद्भूयोऽनुधावति मनः प्राणशरीराणि । एवं सतीहाहंप्रत्ययमूलमेवात्मा ब्रह्मत्वेन प्रदर्श्यते भगवता भाष्यकृता । आत्मा वा इदमेकमेवाग्र आसीत् । सोऽणिमा स आत्मा । तस्माद्वा आत्मन आकाशः सम्भूतः । अयमात्मा ब्रह्म । इत्याद्याः श्रुतयश्चात्मशब्देन ब्रह्म व्यवहरन्ति । अहं ब्रह्मास्मीति वाक्यं चात्रोदाहर्तव्यम् । भूमविद्यायां श्रूयमाणावहङ्कारात्मादेशौ चात्र भवतः ।

**भाष्यम्** - "अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे ।"

**टिप्पणी** - तद्व्यतिरिक्तस्तस्मात्संसारिणो जीवाद्भिन्न इत्यर्थः । इदं जीवेश्वरपार्थक्यवादिनां मतम् । स्वमतत्वेनात्मा स भोक्तुरिति । स सर्वज्ञः सर्वशक्तिरीश्वरो भोक्तुर्विज्ञानात्मनो जीवस्यात्मस्वरूपं तत्त्वत इति भावः । इदमुत्तरत्र सम्यग्विचार्यते ।

इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः प्रणीतौ विशालाक्ष्यां शारीरकमीमांसाटिप्पण्यां जिज्ञासाधिकरणविलोकनं नाम द्वितीयमाह्निकम्

## तृतीयमाह्निकम्

**भाष्यम्** - "किं लक्षणं पुनस्तद्ब्रह्मेत्यत आह भगवान् सूत्रकारः ।"

**सूत्रम्** - जन्माद्यस्य यतः (१. १. २)

**टिप्पणी** - कोऽयं भगवान् सूत्रकारः । बादरायण इत्याहु । स च कृष्णद्वैपायन इत्येके । भागवतादौ तस्य बादरायणपदेनापि व्यवहरणात् । सूत्राणां तदीयत्वेन प्रसिद्धेश्च । यत आहुः । पतञ्जलेर्जैमिनेश्च व्यासस्य कपिलस्य च । कणादस्याक्षपादस्य दर्शनानि षडेव हीति । परे तु द्वैपायनादयमन्य एवेत्याहुः । द्वैपायनः पराशरपुत्रः शक्तिपौत्र इति कथयन्ति । अयं तु बदरस्य युवापत्यं बादरेः पुत्र इति नाम्ना गम्यते । एतन्मते कृष्णद्वैपायनबादरायणावुभावपि व्यासपदाङ्कौ। तस्माद्ब्रह्म-सूत्राणां व्याससूत्रत्वप्रसिद्धिरिहाप्युपपन्ना स्यात् ।

**भाष्यम्** - "अस्य जगतो नामरूपाभ्यां व्यासकृतस्यानेक-कर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्त- क्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः ।"

**टिप्पणी** - अनेककर्तृभोक्तृयुक्तस्यानेकजीवयुक्तस्य । इदं नानात्वं कार्यान्तःपातित्वं च जीवानां विज्ञानरूपत्वाभिप्रायेण । स्वरूपं त्वेकं ब्रह्मणोऽव्यतिरिक्तमिति न तदत्र लक्ष्यम् । सर्वज्ञात्सर्वशक्तेरिति भाष्यकारेणासकृदभ्यस्यमानं ब्रह्म नैकान्ततो निर्विशेषमिति बोधयति । अस्तु तन्निर्विशेषं रूपादिभौतिकविकारासमवायात् । एतदेव

दृढयन्नुत्तरत्रापि वक्ष्यति यथोक्तविशेषणमीश्वरं मुक्त्वेति ।

भाष्यम् - "श्रुत्यादयोऽनुभवादयश्च यथा सम्भवमिह प्रमाणम् । अनुभवावसानत्वाद्भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य ।"

टिप्पणी - यथा यथावन्नाचरितं कर्म बुद्धमपि न पुरुषार्थाय भवेदेवमननुभूतं ब्रह्म विचार्यमाणमपीत्यर्थः । अनुभवश्च प्रतीच्या दृष्ट्या स्वरूपसाक्षात्कारः । एतेन शास्त्रप्रमाणबुद्धलक्षणमपि ब्रह्मानुभूतिपर्यन्तं विचारणीयम् । तदैव पदार्थसन्निकर्षे रूपादि ज्ञानमिव ब्रह्मज्ञानं सिध्यतीति भावः । सा चानुभूतिरनिर्वाच्यामुक्तमात्रवेद्यारूपादि-रहितत्वाद्ब्रह्मणः । तामीदानीन्तना अनुभविनो दिङ्मात्रेणैवं वर्णयन्ति, आत्मनः सहजस्थितिरूपेति भगवान् रमणः । अखण्डाभिमानरूपेति कपाली । सर्वविकल्पाभावरूपेति वराहः । विशालाक्षी तु पश्यति नित्यान्तरज्वालारूपेति ।

भाष्यम् - "तस्य च निर्णयवाक्यं - 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति' ।"

टिप्पणी - तपस्तपता भृगुणा ततो जगज्जन्मादिकारणत्वेनानन्दो बुद्धः । तस्मात्परं ब्रह्मानन्दरूपमित्यर्थः ।

इति श्रीभगवद्रमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतौ विशालाक्ष्यां शारीरकमीमांसाटिप्पण्यां लक्षणभाष्यविलोकनं नाम तृतीयमाह्निकम्

## चतुर्थमाह्निकम्

**सूत्रम्** - शास्त्रयोनित्वात् (१. १. ३)

**भाष्यम्** - "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदादिश्रुतेः ।"

**टिप्पणी** - नेयमीश्वरस्य साक्षाद्वेदकारणत्वं स्थापयितुं प्रभवति श्रुतिः । तत्र न केवलं वेदानां वेदान्तानां चेश्वरनिश्वसितत्वमुक्तम् । अपि तु श्लोकसूत्रव्याख्यानानुव्याख्यानानां च । सर्वस्यापि वाङ्मयस्य परमेश्वरस्य निश्वसितत्वं तत्रोक्तं भवति । तत्र केषाञ्चित् साक्षात् केषाञ्चित्परम्परया चेश्वरत्वमिति व्याख्यातुं प्रमाणान्तरं मृग्यं स्यात् । इदमस्तु प्रमाणम् । तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तमादजायत । नैतदपि भवति । विराज इदं प्रकरणम् । विश्वस्मिन् सर्वमपीश्वरकार्यमित्येवात्र प्रस्तूयते । तस्माज्जाता अजावयः इत्यपि ह्यत्र दृश्यते । अपि च ब्रह्मणजातिरस्य मुखत्वेन वर्णितः । मुखतो भवन्ति वाक्यानीति प्रत्युत ब्रह्मणकार्यत्वं च ऋगादीनां प्रसक्तं स्यात् । इदमस्तु प्रमाणम् । यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै । नैतदपि भवति । वेदान् ज्ञानानीति व्याख्याने तत्र सम्यगर्थसङ्गतेः सन्दिग्धत्वादभिलषितस्यार्थस्य । ऋगादयः साक्षादीश्वरस्यैव वाक्यानि चेत्तस्यैव सर्वेषां मन्त्राणां प्रसक्तं स्यादृषित्वम् । सर्वत्र मान्त्रवर्णिकोऽहमर्थस्तेनैवान्वितः स्यात् तदा बहवो विरोधाः ।

एवं विवादभूयिष्ठत्वादस्य पक्षस्य पक्षान्तरमाश्रयते ।

**भाष्यम्** – "अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः ।"

**टिप्पणी** – अथ कथं पुनः शास्त्रस्य प्रमाणम् । ऋषिभिरीश्वरानुग्रहात्तपसा लब्धत्वात् । एवं हि शास्त्रीया लौकिकी च प्रसिद्धेः । तद्वाक्यानामीश्वर-शक्तेस्तत्तदृष्युत्पत्तेश्च कारणत्वम् । ननु विप्रकृष्टयोरनयोः कथं समावेश इति चेन्न । ईश्वरस्य सर्वान्तरत्वेन सर्वसन्निकृष्टत्वात् । ऋषिव्युत्पत्तिमूलकत्वं स्पष्टं दृश्यते । ईश्वरशक्तिमूलकं त्वेकं प्रमाणम् । तस्मात् यज्ञात्सर्वहुत इत्याद्येव । ननूक्तं तत्र ऋगादीनाम् अजाविनिर्विशेषमीश्वरकार्यत्वमिति । तदभिमत एवास्माकम् । नहि कुम्भकारो घटानिव तत्तन्मातापितरः प्राणिनो निर्मातुं शक्नुवन्ति समष्टिशक्तेः साहाय्यं विना । तस्मादस्तीह चतुर्विधभूतग्राम-सृष्टावीश्वरस्य च साक्षात् सम्बन्धः । ब्राह्मणोऽस्य मुखमासीदिति चैतदविरुद्धम् । वेदानामार्षित्वेन चाभ्युपगमात् । यथा रूपेण व्याकृते प्रपञ्चे केवलेश्वरसृष्टमाकाशादिकं तत्तद्भूतेश्वरोभयकारणकश्चतुर्विध-भूतग्रामः केवलजीवनिर्मितं घटादिकं च भवन्ति । एवं नाम्ना व्याकृते प्रपञ्चे केवलेश्वरयोनिः प्रणवो मधुच्छन्दः प्रभृतितत्तदृषीश्वरोभयकारणको वेदः केवलजीवनिर्मितः काव्यादिश्च । एतेन पार्थिवत्वसाम्येऽपि मस्किष्कघटयोरिव वाक्यत्वसाम्येऽपि वेदकाव्ययोर्महानस्ति भेद इति स्थितम् । काचन प्राणशक्तिरपि मन्त्रेष्वस्तीति पश्याम । अत एवार्थसाम्येऽपि लौकिकानि स्तोत्राणि ।

असमासम्

# वैदिकपदानामर्थाः

अङ्गिराः अग्निः
अच्छ लक्ष्यकरणे
अण्वी अङ्गुलौ
अद्रि मेघे
अन्तम निकटस्थे
अपस् कर्मणि
अभिष्टि जेतरि
अमीव रोगे
अरुष अग्नौ
अर्भ अल्पे
अर्किन् स्तोतरि
अवनि रक्षके
अस्तृ ध्वनिनि
अह अवधारणे
आकीं आङर्थे
आत् आगन्तर्यार्थे
इदवधारणे
उत समुच्चये
क्रतु बुद्धौ
श्रवस् कीर्तौ
धी मन्त्रे कर्मणि च
नमस् अन्ने
दीदिवि प्रकाशके

दम गृहे
दर्शत रमणीये
उक्थ मन्त्रे
जरितृ स्तोतरि
धेना वाचि
प्रयस् अन्ने
मक्षु शीघ्रार्थे
इत्था सत्यार्थे
दक्ष बले
रिश खले
घृत जले
तुवि बह्वर्थे
शुभस् शुभे
दंसन् कर्मणि
नृ नेतरि
वर्तनि मार्गे
तना नित्यार्थे
वाघत् ऋत्विजि
चनन् अन्ने
जीमा देवतायाम्
चर्षणी मनुष्ये
तूर्णि त्वरायुक्ते
स्वसर दिने

| | |
|---|---|
| धियावसु सरस्वत्यां | रजस् लोके |
| केतु ज्ञाने किरणे च | गार्थि गातरि |
| ऊति रक्षणे | चक्षस् दर्शने |
| विग्र मेधाविनि | वृत्र शत्रौ |
| दुवस् परिचर्यायां | चरु मेघे |
| दस्म वीरे | तुञ्ज देवे |
| कृष्टि मनुष्ये | वंसग वृषभे |
| वाज सङ्ग्रामे | जेतृ इन्द्रे |
| साति सम्भजने | क्षिति मनुष्ये |
| स्तोम स्तुतिपद्यवर्गे | घन कठिने |
| पुरु बहुलार्थे | युज् सहाये |
| घ अवधारणे | पर इन्द्रे |
| पुरन्ध्री कुटुम्बिन्यां | शवस् बले |
| समत् युद्धे | काकुद् जिह्वरसे |
| वीति भोजने | रप् वाचि |
| मर्त मनुष्ये | मन्दि सन्तोषकृति |
| चरन् वायौ | चक्रि कर्तरि |
| रोचन नक्षत्रे | शिप्रा हनौ नासिकायां वा |
| पेशस् कान्तौ | राधस् रयि धने |
| उषस् किरणे | कर्त्व क्रियायां |
| स्वधा अन्ने | वृष्णि इन्द्रे |
| वीळु दृढे | मघ धने |
| उस्रिया गवि | भिन्दु भेदके |
| मन्दु सन्तुष्टे | कारु यष्टरि |
| परिज्मन् मरुद्गणे | मेधिरक् कथाविनि |

| | |
|---|---|
| शुष्ण अवग्रहे | हवः आह्वानम् |
| बल मेघे | पीतिः पारं |
| वेदसे ज्ञाने | इन्दुः सोमरसश्च |
| उशत् कामयमाने | ऋतं उदकं च |
| शुभ्र कान्तिमति | वस्तः अहः |
| द्रप्स बिन्दौ | होता आह्वाता |
| यजत्र देवे | गोपः रक्षकः |

॥ वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ॥
Vāsiṣṭhakāvyakaṇṭhagaṇapatimuneḥ Granthamālā

# Collected Works of Vasishtha Kavyakantha Ganapati Muni

## Contents of all Volumes

## VOLUME 1


1. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration (Part One)**

**1.1.** श्रीगुरुस्तुतिः *śrīgurustutiḥ* — Verses in praise of the guru lineage (5 verses)

**1.2.** हेरम्बोपस्थानम् *herambopasthānam* — Verses praising the glory of Ganesha (40 verses)

**1.3.** उमात्रिशती *umātriśatī* — Three hundred names of Goddess Uma (38 verses)

**1.4.** उमाशतकम् *umāśatakam* — Verses in praise of Goddess Uma (100 verses)

**1.5.** उमाऽक्षरमाला *umā'kṣaramālā* — Verses extolling Goddess Uma in Sanskrit alphabetical order (50 verses)

**1.6.** उमासहस्रम् *umāsahasram* — Adoration of the Divine Mother Uma (1000 verses)

VOLUME 2

## 2. स्तोत्रग्रन्थमाला *stotragranthamālā*
**The Book of Adoration** (Part Two)

| | | |
|---|---|---|
| **2.1.** | देवीस्तोत्रमञ्जरी *devīstotramañjarī* | Verses in praise of Goddess Uma (118 verses) |
| **2.2.** | श्रीत्रिपुरसुन्दरीगीतम् *śrītripurasunda-rīgītam* | Singing praise of Goddess Tripurasundari (18 verses) |
| **2.3.** | अमृताम्बापञ्चरत्नम् *amṛtāmbā-pañcaratnam* | Verses in praise of Amritamba – the consort of Narasimha (5 verses) |
| **2.4.** | सौन्दर्याम्बानिर्वाण-षट्कम् *soundaryāmbā-nirvāṇaṣaṭkam* | Verses on the liberation of Saunda-ryamba – the mother of Sri Ramana Maharshi (6 verses) |
| **2.5.** | रेणुकाषट्कम् *reṇukāṣaṭkam* | Verses on Renuka – the mother of Parasurama (6 verses) |
| **2.6.** | रेणुकासप्तकम् *reṇukāsaptakam* | Verses in praise of Goddess Renuka (7 verses) |
| **2.7.** | इन्द्राणीसप्तशती *indrāṇīsaptaśatī* | Verses in praise of Goddess Indrani – the consort of the Vedic godhead Indra (700 verses) |

| | | |
|---|---|---|
| **2.8.** | प्रचण्डचण्डीत्रिशती<br>*pracaṇḍacaṇḍī-trisatī* | Verses in praise of Chinnamasta – one of the ten cosmic powers of the Divine Mother (300 verses) |
| **2.9.** | मङ्गलगौरीस्तोत्रम्<br>*maṅgalagaurī-stotram* | Benedictory verses in praise of Goddess Gauri (8 verses) |

## VOLUME 3

### 3. स्तोत्रग्रन्थमाला *stotragranthamālā*<br>**The Book of Adoration (Part Three)**

| | | |
|---|---|---|
| **3.1.** | श्रीरमणचत्वारिंशत्<br>*śrīramaṇa-catvāriṁśat* | Verses in praise of Sri Ramana Maharshi (40 verses) |
| **3.2.** | शिवशतकम्<br>*śivaśatakam* | Verses in praise of Shiva (100 verses) |
| **3.3.** | शिवस्तवराजः<br>*śivastavarājaḥ* | Verses in praise of Shiva (72 verses) |
| **3.4.** | शिवसप्ततिनामस्तोत्रम्<br>*śivasaptati-nāmastotram* | Seventy names of Shiva as mentioned in the Veda (8 verses) |
| **3.5.** | इन्द्रसहस्रनामस्तोत्रम्<br>*indrasahasra-nāmastotram* | Verses having one thousand names of Indra as mentioned in the Rigveda (115 verses) |

| | | |
|---|---|---|
| **3.6.** | इन्द्रसहस्रे प्रथमं शतकम् *indrasahasre pathamaṁ śatakam* | Verses in praise of Indra (100 verses) |
| **3.7.** | इन्द्रसहस्रे कटाक्ष-स्तबकः *indrasahasre kaṭākṣastabakaḥ* | Verses extolling the graceful look of Indra (24 verses) |
| **3.8.** | इन्द्रविंशतिः *indraviṁśatiḥ* | Verses in praise of Indra (20 verses) |
| **3.9.** | इन्द्रसप्तकम् *indrasaptakam* | Verses in praise of Indra (7 verses) |
| **3.10.** | पवनाष्टकम् *pavanāṣṭakam* | Verses in praise of Vayu (8 verses) |
| **3.11.** | श्रीनृसिंहपञ्चरत्नम् *śrīnṛsiṁha pañcaratnam* | Verses in praise of Sri Narasimha (5 verses) |
| **3.12.** | श्रीयोगाञ्जनेयपञ्चरत्नम् *śrīyogāñjaneya-pañcaratnam* | Verses in praise of Sri Yoganjaneya (5 verses) |
| **3.13.** | तारकरामनामस्तुतिः *tārakarāma-nāmastutiḥ* | Verses singing the name of Sri Rama (16 verses) |

| | | |
|---|---|---|
| **3.14.** | कृष्णाक्षरमाला<br>*kṛṣṇākṣaramālā* | Verses on Sri Krishna in Sanskrit alphabetical order (50 verses) |
| **3.15.** | रामगीता<br>*rāmagītā* | Verses on Sri Rama (9 verses) |
| **3.16.** | गीतमाला<br>*gītamālā* | Garland of ten songs praising different Vedic and other godheads (225 verses) |
| **3.17.** | शिवगीतम्<br>*śivagītam* | Verses praising Lord Shiva (25 verses) |
| **3.18.** | रमणगीतम्<br>*ramaṇagītam* | Verses praising Sri Ramana Maharshi (4 verses) |

## VOLUME 4

### 4. तत्त्वग्रन्थमाला *tattvagranthamālā* **The Book on Principles of Existence**

| | | |
|---|---|---|
| **4.1.** | सदाचारबोधिनी<br>*sadācārabodhinī* | Code of conduct for human beings (81 verses) |
| **4.2.** | तत्त्वघण्टाशतकम्<br>*tattvaghaṇṭā-śatakam* | Verses on the principles of existence composed extempore in one hour as a part of an ashtavadhanam (100 verses) |

| | | |
|---|---|---|
| **4.3.** | *तन्त्रहृदयम्<br>*tantrahṛdayam* | A Tantra treatise on worshipping different aspects of the Divine Mother (192 verses) |
| **4.4.** | अक्षरावलिः<br>*akṣarāvaliḥ* | Verses describing Sanskrit syllables (alphabet) and their corresponding deities (21 verses) |
| **4.5.** | श्रीरमणगीता<br>*śrīramaṇagītā* | Teachings of Sri Ramana Maharshi (303 verses) |
| **4.6.** | सद्दर्शनम्<br>*saddarśanam* | Sanskrit rendering of an original Tamil text "*ulladu narpadu*" of Sri Ramana Maharshi (44 verses) |
| **4.7-9.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | These three (4.7-9) deal with several spiritual and metaphysical aspects of the principles of existence (679 verses) |
| **4.10.** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Verses dealing with the Hindu religious injunctions (39 verses) |

---

* Incomplete writings

VOLUME 5

## 5. सूत्रग्रन्थमाला *sūtragranthamālā* **The Book of Aphorisms (Part One)**

| | | |
|---|---|---|
| **5.1.** | महाविद्यासूत्रम्<br>*mahāvidyāsūtram* | On the ten cosmic powers of the Divine Mother (705 aphorisms) |
| **5.2.** | राजयोगसारसूत्रम्<br>*rājayogasārasūtram* | Essence of Rajayoga (103 aphorisms) |
| **5.3.** | इन्द्रेश्वराभेदसूत्रम्<br>*indreśvarā bhedasūtram* | Proclamation of the non-difference between Indra and Ishwara (37 aphorisms) |
| **5.4.** | चतुर्व्यूहसूत्रम्<br>*caturvyūhasūtram* | Four main aspects of the Indra of the Rigveda (162 aphorisms) |
| **5.5.** | रुद्रकुटुम्बसूत्रम्<br>*rudrakuṭumba sūtram* | Description of the family of Rudra (42 aphorisms) |
| **5.6.** | सृष्टिसूत्रम्<br>*sṛṣṭisūtram* | On Creation (33 aphorisms) |
| **5.7.** | ईश्वरमीमांसा<br>*īśvaramīmāṁsā* | Description of the true nature of Ishwara (65 aphorisms) |
| **5.8.** | क्रियाशक्तिमीमांसा<br>*kriyāśakti-mīmāṁsā* | On the Divine power of action (24 aphorisms) |

| | | |
|---|---|---|
| **5.9.** | सिद्धान्तसारसूत्रम्<br>*siddhāntasāra-sūtram* | The essence of decisive truth principle (42 aphorisms) |
| **5.10.** | मनीषासङ्ग्रहः<br>*manīṣāsaṅgrahaḥ* | A manual of spiritual science (120 aphorisms) |
| **5.11.** | अथ शान्तितपोबोधानां फलनिरूपणम्<br>*atha śāntitapobodhānāṁ phalanirūpaṇam* | Determining the fruits of peace, austerity and knowledge (9 aphorisms) |
| **5.12.** | गायत्रीव्याख्यानम्<br>*gāyatrīvyākhyānam* | Explanation of the Gayatri Mantra of Rishi Vishwamitra (48 aphorisms) |
| **5.13.** | योगव्याख्यानम्<br>*yogavyākhyānam* | On Yoga (48 aphorisms) |
| **5.14.** | सीताव्याख्यानम्<br>*sītāvyākhyānam* | On Sita – the consort of Sri Rama (51 aphorisms) |
| **5.15.** | कृष्णव्याख्यानम्<br>*kṛṣṇavyākhyānam* | On Sri Krishna (75 aphorisms) |
| **5.16.** | तत्त्वसामान्यमीमांसा<br>*tattvasāmānya-mīmāṁsā* | A brief enquiry into the principles of existence (20 aphorisms) |
| **5.17.** | *तत्त्वमीमांसा<br>*tattvamīmāṁsā* | The principles of existence (245 aphorisms) |

| | | |
|---|---|---|
| 5.18. | प्रमाणपरीक्षा *pramāṇaparīkṣā* | Explaining Pramana, a means to attain Prama or a certain Knowledge (50 aphorisms) |
| 5.19. | समवायपरीक्षा *samavāyaparīkṣā* | Explaining Samavaya or the perpetual co-inherence that lies between a substance and its qualities (14 aphorisms) |
| 5.20. | अभावपरीक्षा *abhāvaparīkṣā* | Explaining Abhava or non-existence, one of the six pramanas of the Vedanta philosophy (40 aphorisms) |
| 5.21. | पञ्चजनचर्चा *pañcajanacarcā* | On untouchability (89 aphorisms) |
| 5.22. | गोत्रप्रवरनिर्णयः *gotrapravara-nirṇayaḥ* | Determination of the family sub-divisions (200 aphorisms) |
| 5.23. | विवाहधर्मसूत्रम् *vivāhadharma-sūtram* | On Hindu laws and custom of marriage (151 aphorisms) |
| 5.24. | शब्दप्रमाणचर्चा *śabdapramāṇacarcā* | An enquiry into the authority of Vedas (166 aphorisms) |
| 5.25. | जैमिनीयतर्कवार्तिकम् *jaiminīyatarka-vārtikam* | A new interpretation of the aphorisms of Jaimini (348 aphorisms) |

| | | |
|---|---|---|
| **5.26.** | पञ्चममीमांसा<br>*pañcamamīmāṁsā* | On five kinds of people (130 aphorisms) |
| **5.27.** | दर्शनमाला<br>*darśanamālā* | On Metaphysics (121 aphorisms) |
| **5.28.** | गणपतिदर्शनम्<br>*gaṇapatidarśanam* | Spiritual thoughts of Ganapati Muni (95 aphorisms) |
| **5.29.** | *शक्तिदर्शनम्<br>*śaktidarśanam* | On the dynamic aspect of the Divine (109 aphorisms) |
| **5.30.** | साम्राज्यनिबन्धनम्<br>*sāmrājya nibandhanam* | A new constitution for India (560 aphorisms) |

## VOLUME 6

### **6.** सूत्रग्रन्थमाला *sūtragranthamālā*<br>**The Book of Aphorisms (Part Two)**

| | | |
|---|---|---|
| **6.1-16.** | *विश्वमीमांसा<br>*viśvamīmāṁsā* | An encyclopedic work on all aspects of the Hindu religion (1640 aphorisms) |
| **6.17.** | तत्त्वानुशासनसूत्राणि<br>*tattvānuśāsana-sūtrāṇi* | Instructions on the principles of existence (18 aphorisms) |
| **6.18-26** | *धर्मानुशासनम्<br>*dharmānu-śāsanam* | Instructions on Dharma (839 aphorisms) |

| | | |
|---|---|---|
| **6.27-28** | *देवतामीमांसा<br>*devatāmīmāṁsā* | On Vedic deties<br>(162 aphorisms) |
| **6.29.** | *वासिष्ठदर्शनम्<br>*vāsiṣṭhadarśanam* | Doctrine of Ganapati Muni<br>(45 aphorisms) |
| **6.30.** | *सर्वार्थदर्शनम्<br>*sarvārtha-darśanam* | On the doctrine of direct perception (77 aphorisms) |
| **6.31.** | *आदिशास्त्रार्थसूत्रम्<br>*ādiśāstrātha-sūtram* | On the first hymn of the Rigveda (70 aphorisms) |
| **6.32.** | *वासिष्ठकामसूत्राणि<br>*vāsiṣṭhakāma sūtrāṇi* | On sexual love as understood by Ganapati Muni<br>(89 aphorisms) |
| **6.33.** | *महावार्तिकम्<br>*mahāvārtikam* | On the authenticity of Vedic texts (94 aphorisms) |

## VOLUME 7

### 7. भाष्यग्रन्थमाला *bhāṣyagranthamālā*<br>The Book of Commentaries

| | | |
|---|---|---|
| **7.1.** | *मूलग्रन्थप्रशंसा<br>*mūlagrantha-praśaṁsā* | A tribute to Rigveda |

| | | |
|---|---|---|
| **7.2.** | *नूतनभाष्यकरणा-वसरकथनम्<br>*nūtanabhāṣyakaraṇā-vasarakathanam* | Necessity for a fresh and new interpretation of the Rigveda |
| **7.3-5.** | *ऋग्वेदभाष्यम्<br>*ṛgvedabhāṣyam* | Introduction to a commentary on the Rigveda |
| **7.6.** | *आदिवेदमीमांसा<br>*ādivedamīmāṁsā* | On the Rigveda |
| **7.7.** | *ऋग्वेदविमर्शिनी<br>*ṛgvedavimarśinī* | Rigveda – an introduction |
| **7.8.** | ऋग्वेदमन्त्रभाष्यम्<br>*ṛgvedamantra-bhāṣyam* | Explanation of some of the hymns of the 1st, 2nd and 7th mandala of Rigveda |
| **7.9.** | *विश्वमीमांसा-प्रथमम् अक्षरप्रकरणम्<br>*viśvamīmāṁsā-prathamamakṣara-prakaraṇam* | On word-meaning relationship |
| **7.10.** | *देवताकाण्डे द्वितीयं प्रकरणम्<br>*devatākāṇḍe dvitīyaṁ prakaraṇam* | Second chapter on Vedic godheads |

| | | |
|---|---|---|
| **7.11.** | *ऐन्द्रसहस्रनाम-भाष्यम्<br>*aindrasahasra-nāmabhāṣyam* | Commentary on thousand names of Indra |
| **7.12.** | जैमिनीयसूत्रभाष्यम्<br>*jaiminīyasūtra-bhāṣyam* | Commentary on the aphorisms of Jaimini |
| **7.13.** | ईशोपनिषद्भाष्यम्<br>*īśopaniṣadbhāṣyam* | Commentary on Ishopanishad |
| **7.14.** | उपदेशसारभाष्यम्<br>*upadeśasārabhāṣyam* | Commentary on Upadeshasara of Sri Ramana Maharshi |
| **7.15.** | गुरुमन्त्रभाष्यम्<br>*gurumantrabhāṣyam* | Commentary on Gurumantra |
| **7.16.** | अग्नेः चतस्रो विभूतयः<br>*agneḥ catasro vibhūtayaḥ* | Four emanations of Agni |
| **7.17.** | दैवरातदर्शनम् अन्वयभाष्यम्<br>*daivarāta-darśanam anvayabhāṣyam* | A commentary on the doctrine of Daivarata, a disciple of Sri Ganapati Muni |
| **7.18.** | *मातृतत्त्वप्रकाशिका<br>*mātṛtattva-prakāśikā* | A Sanskrit rendering of two chapters of Sri Aurobindo's *The Mother* |

| | | |
|---|---|---|
| **7.19.** | *शारीरकमीमांसा टिप्पणी *śārīrakamīmāṁsā-ṭippaṇī* | A note on the *Brahmasutra-bhashya* of Adi Sankara |
| **7.20.** | *वैदिकपदानामर्थाः *vaidikapadānām arthāḥ* | Meanings of Vedic words |

VOLUME 8

**8.** आयुर्वेदज्योतिषग्रन्थमाला
*āyurvedajyotiṣagranthamālā*
**The Book of Ayurveda and Astrology**

| | | |
|---|---|---|
| **8.1.** | चिकित्सानुशासनम् *cikitsānuśāsanam* | Instructions on medical treatment (384 aphorisms) |
| **8.2.** | प्राणतोषणम् *prāṇatoṣaṇam* | A treatise on the maintenance of a healthy life (108 verses) |
| **8.3.** | होरानिर्णयसङ्ग्रहः *horānirṇaya-saṅgrahaḥ* | A treatise on Astrology (81 verses) |
| **8.4.** | षोडशश्लोकी *ṣoḍaśaślokī* | Merits and demerits of the planetary positions (16 verses) |
| **8.5.** | त्रिभावफलचन्द्रिका *tribhāvaphala-candrikā* | A work on Keraliya Astrology dealing with Ayu – life-span, Kalatra – wife, Putra – son (89 verses) |

| | | |
|---|---|---|
| **8.6.** | गणककण्ठाभरणम् *gaṇakakaṇṭhā-bharaṇam* | On movements of the planets |

VOLUME 9

**9.** *भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*
**A Treatise on the Mahabharata**

VOLUME 10

**10.** *पूर्णा *pūrṇā*
**Purna – A Novel**

VOLUME 11

**11.** प्रकीर्णकम् *prakīrṇakam*
**Miscellaneous Writings**

| | | |
|---|---|---|
| **11.1.** | गणपतिमुनेः पत्राणि *gaṇapatimuneḥ patrāṇi* | Letters of Ganapati Muni |
| **11.2.** | नवद्वीप-काव्यकण्ठः *navadvīpa-kāvya-kaṇṭhaḥ* | Ganapati Muni recieving 'Kavyakantha' title |
| **11.3.** | प्रास्ताविकपद्यानि *prāstāvikapadyāni* | Collection of stray verses |

**11.4.** सुकन्यादस्रसंवादः Dialogue between Sukanya
and
*sukanyādasra-* Ashwinideva from
Mahabharata
*saṁvādaḥ*

**11.5.** पाण्डवधार्तराष्ट्रसम्भवः Extempore verses on the
origin
*pāṇḍavadhārta-* of the Pandavas and Kauravas
*rāṣṭrasaṁbhavaḥ*

**11.6.** *भृगुवंश इतिहासः History of Bhrigu lineage
*bhṛguvaṁśa*
*itihāsaḥ*

**11.7.** लालिभाषोपदेशः A proposed new language
*lalibhāṣopadeśaḥ*

**11.8.** इतरग्रन्थाः Other texts
*itaragranthāḥ*

VOLUME 12

**12.** अनुक्रमणी *anukramaṇī*
**Index**

"Vasishtha Ganapati Muni (1878-1936) was a luminary of the first magnitude on the spiritual firmament of modern India. He was a versatile genius whose contribution in the many fields to which he turned his attention are yet to be fully assessed." **Sri M.P. Pandit**, ***Adoration of the Divine Mother***.

"Kavyakantha Ganapati Sastri, .... played much the same role in the life and reputation of Bhagavan Sri Ramana Maharshi as Swami Vivekananda did in that of Sri Ramakrishna Paramahamsa. Sri Vasishtha Muni was a mighty spiritual personality in his own right,.... he recognized the uniqueness of Bhagavan's teaching, accepted him as his *guru* and proclaimed him as the Maharshi to the whole world. Those who want to understand the message of the Maharshi in its pristine purity have to study the Muni's redaction of the Master's teachings ..." **Sri S. Shankaranarayanan**, ***Bhavan's Journal***.

।। वासिष्ठकाव्यकण्ठगणपतिमुनेः ग्रन्थमाला ।।

Collected Works of Vasishtha Kavyakantha Ganapati Muni

| | |
|---|---|
| VOLUME 1 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part One) |
| VOLUME 2 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Two) |
| VOLUME 3 | स्तोत्रग्रन्थमाला *stotragranthamālā*<br>The Book of Adoration (Part Three) |
| VOLUME 4 | तत्त्वग्रन्थमाला *tattvagranthamālā*<br>A Book on the Principles of Existence |
| VOLUME 5 | सूत्रग्रन्थमाला *sūtragranthamālā*<br>The Book of Aphorisms (Part One) |
| VOLUME 6 | सूत्रग्रन्थमाला *sūtragranthamālā*<br>The Book of Aphorisms (Part Two) |
| **VOLUME 7** | **भाष्यग्रन्थमाला *bhāṣyagranthamālā***<br>**The Book of Commentaries** |
| VOLUME 8 | आयुर्वेदज्योतिषग्रन्थमाला *āyurvedajyotiṣagranthamālā*<br>The Book of Ayurveda and Astrology |
| VOLUME 9 | भारतचरित्रमीमांसा *bhāratacaritramīmāṁsā*<br>A Treatise on the Mahabharata |
| VOLUME 10 | पूर्णा *pūrṇā*<br>Purna - A Novel |
| VOLUME 11 | प्रकीर्णकम् *prakīrṇakam*<br>Miscellaneous Writings |
| VOLUME 12 | अनुक्रमणी *anukramaṇī*<br>Index |